॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## एकादशद्वादशस्कन्धौ

परमपूज्य श्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्
श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः
बागलिङ्गम्पल्ली
हैदराबाद् - ५०० ०२७

॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीविजयध्वजीयटीकासहितम्

## एकादशद्वादशस्कन्धौ

परमपूज्य श्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्

श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः

बागलिङ्गम्पल्ली

हैदराबाद् - ५०० ०२७

# SRIMAD BHAGAVATAM (Skandhas 11 and 12)

with the commentary of Sri Vijayadhwaja Tirtha

*Edited by :*

Scholars of Poornaprajna Vidyapeetha
under the guidance of
**H.H. Sri Vishvesha Teertha Swamiji**
of Sri Pejawar Mutt, Udupi.

*Published by* :

**Sri Raghavendra Swamy Brindavana Samithi**
Baghlingampalli, Hyderabad - 500 027

May 1997

Copies- 1000

Price -

**RS. 120**

Type setting :
**Poornaprajna Samshodhana Mandiram**
P.P. Vidyapeetha,
Bangalore-28.

Printed by
**Brindavan Printers Pvt. Ltd.**
Bangalore.

## श्रीविश्वेशतीर्थश्रीमच्चरणानामनुग्रहसन्देशः

श्रीमद्भागवतस्य एकादशद्वादशस्कन्धात्मको भागः श्रीविजयध्वजतीर्थविरचितपदरत्नावल्या भूषित इदानीं प्रकाशयिष्यत इति मोदास्पदमेतत् । एकादशे स्कन्धे श्रीकृष्णकथैवानुवर्तते । तत्र विशेषतो जायन्तेयोपाख्यानं श्रीकृष्णोद्धवसंवादश्च राराजीति । श्रीकृष्णोद्धवसंवादात्मको भागः श्रीमद्भागवतस्य सारभूत इति मूलश्लोकेष्वेव निरूपितः । तत्र श्रीकृष्णवचांस्यपि -

एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः ।
समासव्यासविधिना देवानामपि दुर्गमः ॥
अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ।
एतद् विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥
नैतद् विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ।
पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ इत्यादि ।

श्रीविजयध्वजतीर्थश्रीमच्चरणैरपि एकादशस्कन्धव्याख्यानोपक्रमे प्रत्यज्ञायि -

रत्नानामुदधिः पात्रं तेजसामुष्णदीधितिः ।
एवमेकादशस्कन्धो वेदान्तार्थैकसन्निधिः ॥

दुर्गमार्थत्वादेव श्रीमदानन्दतीर्थभगवत्पादैर्विस्तरेण व्याख्यायि स्वीये भागवततात्पर्यनिर्णये । अवशिष्टैकादशस्कन्धानां व्याख्यानं यावद् वर्तते ततोऽधिकतरं व्याख्यानमेकादशस्कन्धस्यैकस्यैव वर्तत इत्यनेनास्य दुर्गमार्थत्वं स्फुटं विज्ञायते । स चायमपि स्कन्धः श्रीविजयध्वजतीर्थपूज्यपादैराचार्य-कृतिमुपजीव्यैव व्याख्यातः । पदरत्नावली भागवतस्य न प्रथमं व्याख्यानम् । ततः प्रागपि व्याख्या-नान्तराण्यासन्निति टीकाकारैरेवोदघोषि ।

आचार्यैरपरैरपि प्रविवृते मा गा मनः खेदितां
खद्योतस्तपनप्रकाशितपदे किं तत्र कुर्यादिति ।
तन्मार्गानुगमेन वाक्तनुमनःशुद्धिक्रियायै यतः
श्रीमद्भागवतं पुराणमतुलं व्याकर्तुकामो यते ॥ इति ।

अनन्ततीर्थविजयतीर्थौ प्रणम्य मस्करिवरवन्द्यौ ।
तयोः कृतिं स्फुटमुपजीव्य प्रवच्मि भागवतपुराणम् ।। इति च ।

श्रीविजयध्वजतीर्थैरेतेषां व्याख्यानस्यानुवादो नामनिर्देशपूर्वकं कुत्रापि नैव कृतः । तत्रानन्ततीर्थीयं व्याख्यानमिदानीं भागश उपलब्धं विजयतीर्थानां तु नैतावतोपलब्धं कालेनोपलभ्येतापि । अन्यदप्यस्मदीयानां किमपि व्याख्यानं चतुर्थस्कन्धे लेशतोऽनूद्य तथा व्याख्याने श्लोकस्यार्थोत्कर्षो नैव सिद्ध्यतीति सदाक्षिण्यं कथितम् ।

इदानीमुपलभ्यमानान्यदीयव्याख्यानेषु नैकस्यापि नामनिर्देशो वा अनुवादो वा टीकाकारैः कृतः । इदानीमनुपलभ्यमानं व्याख्यानमेकमेव व्याख्यातृनामनिर्देशेन द्विवारं सूचितम् ।

प्रथमं चतुर्थस्कन्धे द्वाविंशतितमेऽध्याये तत्रापि मोक्ष एवार्थ इत्यादिश्लोकव्याख्यानावसरे स्वीयं व्याख्यानं समाप्यान्ते ''अयमेवार्थो ग्राह्यो न शुकतीर्थाद्युक्तोऽर्थो ग्राह्यः'' इत्युक्तम् । एवं पुनरत्रापि एकादशस्कन्धे पञ्चदशेऽध्याये अनूर्मिमत्वमित्यादिश्लोकत्रयव्याख्यानावसरे तद्वदेव ''नानाकोशगत-वाक्यबलादुक्ता एवान्तर्भावाः सङ्ख्याश्च नान्याः शुकतीर्थाद्युक्ताः'' इत्युक्तम् । के ते शुकतीर्थाः तेषां व्याख्यानं च किमिति न ज्ञायते । अनेनेदं विदितं भवति यत् श्रीभागवतस्यास्मदीयानि परकीयानि चानेकव्याख्यानान्यासन् यानीदानीमनुपलब्धानि यत्साक्षितया चानन्ततीर्थीयं व्याख्यानं शुकतीर्थ-नामनिर्देशश्चेदानीं दृश्यत इति ।

द्वादशस्कन्धे तावद् राजवंशवर्णनमारभ्य परीक्षितः प्रयाणादि निरूप्य ग्रन्थस्य समाप्तिर्दृश्यते । श्रीशुकस्योपदेशं श्रुत्वा हृष्टेन परीक्षिता श्रीशुको भक्तिप्रावण्येनाभिवन्दितः । यथोक्तम् -

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ।
श्रावितो यश्च मे साक्षादनादिनिधनो हरिः ।।
भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ।। इति ।

द्वादशस्कन्धस्योपान्त्योऽध्यायोऽनुक्रमणिकाध्यायः । अत्र प्रथमस्कन्धमारभ्य कथितानां विषयाणामनुक्रमणिका निरूपिता यामवलम्ब्य मध्ये तत्र तत्रोपक्षिप्तानां कथाविशेषाणां प्रक्षिप्तत्वं निश्चेतुं शक्यते ।

विस्तरस्यास्य ग्रन्थस्य व्याख्यानमादित आन्तं श्रीविजयध्वजतीर्थैः कृतम्। आदावेव स्वाहंकार-निरसनपूर्वकमुपक्रान्तम् -

क्व शब्दः क्वाभ्यासः श्रुतिरपि गुरोः क्वाग्रसरणं
समीक्षा पौराणी क्व खलु विबुधा मत्सरधियः।
तथापि व्यामोहाद् गुरुगुरुकटाक्षैकशरणो
मनाग् व्याकुर्वे भागवतपुराणं प्रगहनम्॥ इति।

अन्तेऽपि व्याख्यानं समाप्य ज्ञानभक्तिवैराग्यसागरैः तैः श्रीकृष्णः प्रार्थ्यते -

व्याख्या भागवतस्य कृष्ण रचिता त्वत्प्रीतिकामात्मना
प्रीतश्चेत् प्रददासि तत्प्रतिनिधिं तत् त्रीन् वरिष्ये वरान्।
प्राङ् निष्किञ्चनतां तव प्रतिभवं पादारविन्दात्मनां
संसक्तिं सुखतीर्थशास्त्रविजराहारस्य पानं तथा॥ इति।

त एते अस्मत्पूर्वाचार्याः श्रीमहेन्द्रतीर्थपूज्यपादानां शिष्यप्रवराः अधुना श्रीकण्वतीर्थमठे श्रीमदाचार्याणां नित्यसन्निधानेन पाविते वृन्दावनस्था विराजन्ते। एषां नामग्रहणमपि भक्तिवैराग्यादि-प्रदमिति नाश्चर्यम्। एतेषां कृपाकटाक्षबलेनैव नैकग्रन्थव्याख्यानं कृतवन्तो विद्वद्वरेण्या अस्मत्पूर्वाचार्या श्रीविश्वपतितीर्थश्रीमच्चरणा एतानेवमस्तुवन् -

मध्वाधोक्षजसम्प्रदायकमहाशास्त्रार्थसंव्यञ्जकः
श्रीमद्भागवताम्बुधौ व्यवहरन् तात्पर्यरत्नावलीम्।
दृष्ट्वा भागवतार्थदीप्तपदकैः श्रीकृष्णपादार्चनं
मा त्याक्षीद् विजयध्वजं भज मनस्त्वं कण्वतीर्थस्थितम्॥ इति।

श्रीविजयध्वजतीर्थशिष्यैः श्रीमद्भिरुत्तमतीर्थश्रीमच्चरणैरपि चरमश्लोके अस्तावि -

अञ्जनासूनुसान्निध्याद् विजयेन विराजितम्।
अजितप्रीतिजनकं भजेऽहं विजयध्वजम्॥ इति।

तेषामेतेषामनुग्रहकाङ्क्षिणः हैदराबाद्नगरे बागलिङ्गम्पल्यां वृन्दावने विराजमानानां श्रीराघवेन्द्र-

स्वामिनां सेवारताः सज्जनाः श्रीराघवेन्द्रगुरुसार्वभौमाणां प्रेरणेनैव महदिदं प्रकाशनकार्यमारभ्यान्तराय-शतेनाप्यप्रतिहताः श्रीविजयध्वजतीर्थपूज्यचरणानां सेवां समीहन्त इति प्रमोदास्पदमिदम्। अधुना पञ्चमस्कन्धः दशमस्कन्धस्योत्तरार्धभागश्च द्वावेवोर्वरितौ। तावप्यचिरेणैव प्रकाशयिष्येते। श्रीराघवेन्द्रस्वामिबृन्दावनसेवासमितिसदस्यान् सर्वान् भक्तिज्ञानादिना पुष्णातु श्रीकृष्ण इति सादरं प्रार्थयामहे ॥

अस्य ग्रन्थस्य शोधने अस्मच्छिष्या एवास्मदादेशेन व्यापृताः। तेऽपि यथाशक्ति संशोध्य कार्यमिदमपारयन्निति महता हर्षेण महत्या कृपया च तेषामपि श्रेयोऽभिवृद्धिं प्रार्थयामहे।

पापावलीपाटनपद्मपाङ्गः श्रीपाणिपद्माञ्चितजानुजङ्घः।
गोपालबालः कृपया स्वयं नः श्रीपाण्डुरङ्गो भवतु प्रसन्नः ॥

यल्लीलाजलराशिलोललहरीस्नानक्षमाणां नृणां
संसारोदधिराशु शुष्यतितरामग्र्युप्तशुष्कैधवत्।
यस्माद् विश्वमशेषमुद्भवति यस्तत्त्वं परं योगिनां
श्रीमन्तं तमुपास्महे सुमनसामिष्टप्रदं विठ्ठलम् ॥

रूप्यपीठपुरम्

८-४-१९९७

इत्यनेकनारायणस्मरणानि

**श्री श्री विश्वेशतीर्थश्रीपादाः**

श्रीपेजावराधोक्षजमठाधीशाः

# निवेदनम्

विद्वद्वरेण्यानां रजतपीठपुरीय श्रीपेजावरमठाधीशानां श्री श्री विश्वेशतीर्थश्रीमच्चरणानां प्रेरणया मार्गदर्शनेन च हैदराबादूनगरे बागलिङ्गम्पल्यां सत्कार्येषु प्रवर्तमाना श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः श्रीमद्भागवतस्य श्रीविजयध्वजतीर्थटीकासहितस्य प्रकाशनकर्मणि सोत्साहं निरता। द्वादशवत्सरेभ्यः प्रवर्तमानेऽस्मिन् कार्ये एतावत्पर्यन्तं प्रथमद्वितीयस्कन्धात्मक एको भागः, तथा तृतीयस्कन्धः, चतुर्थस्कन्ध, षष्ठस्कन्ध, सप्तमाष्टमनवमस्कन्धाः दशमस्कन्धे पूर्वार्धात्मको भागश्चेति आहत्य षड्भागाः प्रकाशिता वर्तन्ते। सम्प्रति एकादशद्वादशस्कन्धावेकस्मिन्नेव सम्पुटे प्रकाश्येते। अस्मिन्नेव संवत्सरे दशमस्कन्धस्योत्तरार्धात्मकोऽपरो भागश्च प्रकाशयितव्य इति मनीषा वर्तते। तस्य संशोधनकार्यं त्वरितगत्या प्रचलति। केवलं पञ्चमस्कन्धोऽवशिष्यते। तत्संशोधनकर्मण्यपि बद्धादरा श्री विश्वेशतीर्थ-श्रीमच्चरणा विदुषस्तत्र नियोजितवन्तः। पूर्णप्रज्ञविद्यापीठीयविद्वांस एते श्रीपेजावरमठाधीशाना-माज्ञयाऽनुग्रहेण च कार्यमिदं यशस्वितया निरवहन् निर्वक्ष्यन्ति चेत्यस्माकं दृढो विश्वासः। अस्माभिः सङ्कल्पितस्य महतोऽस्य कार्यस्य पूर्णता समितेरस्या उदये बीजभूतानां अत्र वृन्दावनं प्रतिष्ठाप्य श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणानां दिव्यं सन्निधानं स्वीयतपःशक्त्या साधितवतां तपस्वितल्लजानां ज्ञानवयोवृद्धानां संयमिकुलेशानां श्रीफलिमारुभण्डारकेरिमठयोरधीशानां श्री विद्यामान्यतीर्थ-श्रीपादानामनुग्रहं विना न सम्पत्स्यत एवेति तेषां तथा तच्छिष्यप्रवराणां श्रीविश्वेशतीर्थश्रीमच्चरणानां चरणनलिनयोर्मूर्ध्नि बद्धाञ्जलिरेषा समितिः सप्रश्रयं प्रणमति।

एकादशद्वादशस्कन्धात्मकस्यास्य भागस्य शोधने श्रीपादैः स्वशिष्याः मैसूरुनगरस्था श्री शेषगिरि आचार्या नियुक्ताः। अस्य मुद्रणभारः श्रीपूर्णप्रज्ञसंशोधनमन्दिरस्य गौरवान्वितैर्निर्देशकैः श्री डि. प्रह्लादाचार्यैः निरूढः। मुद्रणवेलायां दोषशोधनादिकं पूर्णप्रज्ञविद्यापीठीयाध्यापकैः श्री के. अनन्त तन्त्रिमहोदयैः कृतम्। एतेषां सर्वेषां विदुषां सर्वदाऽधमर्णा श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः।

अन्तिमं मुद्रणं तु स्वीये वृन्दावनमुद्रणालये श्री एम्. एच्. कौजलगिमहोदयैरल्पीयसैव कालेन सुन्दरं कृतमिति तेषामपि कार्तज्ञ्यं निवेद्यते।

अन्ते सम्पुटस्यास्य प्रकाशनेऽनिवार्यं विलम्बं क्षाम्यन्तु सज्जना इति प्रार्थयामहे।

ईश्वरसंवत्सरादिः
हैदराबादूनगरम्
८-४-१९९७

सज्जनविधेयः
**सुब्बराय अडिगः**
अध्यक्षः, श्रीराघवेन्द्रस्वामिवृन्दावनसमितिः

# एकादशस्कन्धस्य विषयानुक्रमणिका

--०--०--०--

## ॥ द्वादशस्कन्धः ॥

| अध्यायाः | विषयाः | |
|---|---|---|

--०--०--०--

# ॥ अथ श्रीमद्भागवते एकादशस्कन्धः ॥

## ॥ अथ प्रथमोऽध्यायः ॥

श्रीशुक उवाच -

कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ।
भुवोऽवतारयन् भारं यविष्ठं जनयन् कलिम् ॥ १ ॥

---

### पदरत्नावली

॥ श्रीवेदव्यासाय नमः ॥

जयति जगति जन्माद्यस्य विश्वस्य यस्मा-
दमलनिगममुख्यावेद्यमाहात्म्यधाम ।
द्रुहिणतनय ऊचे शौरये यत्स्वरूपं
यदुपतिरपि यास्यन्नुद्धवाय स्वधाम ॥ १ ॥

वेदव्यासमहं वन्दे वेदव्यासैकवेदिनम् ।
वेदव्यासजनारातिं वेदव्यासमुनीनपि ॥ २ ॥

रत्नानामम्बुधिः पात्रं तेजसामुष्णदीधितिः ।
एवमेकादशस्कन्धो वेदान्तार्थैकसन्निधिः ॥ ३ ॥

दशमस्कन्धरथ्याया गत्वान्तं सार्थवित् पुनः ।
गाह एकादशस्कन्धतीर्थं विष्णुपदीमिव ॥ ४ ॥

इह नानाव्यसनराशिभारावभुग्नशिरसां कलिमलावकुण्ठितमनसां दुःखपरिहारसुखावाप्ती चाकाङ्क्षमाणानां तदुपायमजानतां पुंसामुपकाराय करुणाकरेण बादरायणेन कृतभागवतपुराणकल्प-तरोरनेकस्कन्धपुष्पराशेर्मकरन्दभूत एकादशस्कन्ध आरभ्यते ।

तत्रैकादशस्कन्धमुत्थापयितुं वृत्तमनुवदति - **कृत्वेति** । जविष्ठमिति पाठे बृहत्तममित्यर्थः । भारविशेषणम् । यविष्ठमिति नीचमित्यर्थः । कलिविशेषणम् । स्वगोत्रकलहस्य निन्दितत्वात् ।

**ये कोपिताः सुबहु पाण्डुसुताः सपत्नै[1]र्दुर्वादहेलनकचग्रहणादिभिस्तान् ।**
**कृत्वा निमित्तमितरेतरतः समेतान् हत्वा परान् निरहरत् क्षितिभारमीशः ॥ २ ॥**

**भूभारराजपृतना यदुभिर्निरस्य**
**गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ।**
**मन्येऽवनेर्ननु गतोऽप्यगतोऽपि भारो**
**यद् यादवं कुलमहो अविषह्यमास्ते ॥ ३ ॥**

**नैवान्यतः परिभवोऽस्य भवेत् कथञ्चित्**
**मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ।**
**अन्तःकलिं यदुकुलस्य विधाय वेणु-**
**सङ्घस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥**

---

अवतारयन् अवतारयितुकामः । ताच्छीलिकार्थे शतृप्रत्ययः । भुवो भारं निरहरदिति शेषेणान्वयः । कथमित्यत उक्तम्- **दैत्यवधं कृत्वेति ।** अनेन न स्वप्रयोजनार्थं किन्तु परार्थमिति ज्ञातव्यम् ॥ १ ॥

एतदेव विवृणोति- **ये कोपिता इति ।** ईशःक्षितिभारं निरहरदित्यन्वयः। इदं निर्हरणमपि स्वैश्वर्यद्योतकमिति ज्ञापनायेशेति पदम् । ये सपत्नैः कृतैर्दुर्वादादिभिः सुबहु कोपिताः पाण्डुसुतास्तान्निमित्तं कृत्वा इतरेतरतः समेतान् परान् शत्रून् हत्वा ॥ २ ॥

भूभारनिर्हरणप्रकारं वक्ति - **भूभारेति ।** किमचिन्तयत् ? अत्राह - **मन्य इति ।** अवनेर्भारो गतोऽप्यगतो नन्विति मन्ये । तत्र हेतुः-**यदिति ॥** ३ ॥

नन्विदमप्यन्यतः प्राप्तपरिभवं किं न स्यात् ? अत्राह - **नैवेति ।** विभवेनोन्नहनं समृद्धिर्यस्य तत् तथा तस्य । तस्मादयमुपाय इत्याह - **अन्तः कलिमिति ।** वेणुसङ्घस्यान्तःकलिर्मिथः **सङ्घर्षणलक्षणः**, तस्माज्जातं वह्निम् । शान्तिं मङ्गलं धाम । 'शान्तिः प्रशममङ्गले ' इति यादवः । यद्वा अन्तःकलिं शान्तिं प्रशमं यदुकुलस्य नाशहेतुम् ॥ ४ ॥

---

१. दुर्द्यूतहेलनेति पाठान्तरम् ।

**एवं व्यवसितो राजन् सत्यसङ्कल्प ईश्वरः ।**
**शापव्याजेन विप्राणां सञ्जह्रे स्वकुलं विभुः ।। ५ ।।**

**स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ।**
**गीर्भिस्तां स्मरतां चित्तं पदैस्तामीक्षतां क्रियाः ।। ६ ।।**

**आच्छिद्य कीर्तिं सुश्लोकां वितन्वन्नञ्जसा नु कौ ।**
**तमोऽनया तरिष्यन्तीत्यगात् स्वं पदमीश्वरः ।। ७ ।।**

**राजोवाच -**

**ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ।**
**विप्रशापः कथमभूद् वृष्णीनां कृष्णचेतसाम् ।। ८ ।।**

**यन्निमित्तो यदोः शापो यादृशो द्विजसत्तम ।**
**कथमेकात्मनां भेद एतत् सर्वं वदस्व मे ।। ९ ।।**

---

चिन्ताफलमाह - **एवमिति** ।। ५ ।।

पुनर्हरिणा किमकारीत्यत्राह - **स्वमूर्त्येति** । ईश्वरः स्वपदमगादित्यन्वयः । किं कृत्वा लोकलावण्येषु समुदितेषु या बहुमानबुद्धिः, तस्याः निर्मुक्तिर्यया सा तथा तया स्वमूर्त्या नृणां लोचनमाच्छिद्य आकृष्य गीर्भिः सह तां मूर्तिं स्मरतां नृणां चित्तमाच्छिद्य पदैः पादन्यासैः तां पश्यतां जनानां क्रियाः कर्मण्याच्छिद्य । यद्वा पादसौन्दर्यादिगुणनिमग्नानामन्यक्रियासु मनो न चलतीति तामीक्षतां पदैराच्छिद्य । कौ भूमौ । सुष्ठु श्लोकः स्तुतिर्यस्याः सा सुश्लोका । तां कीर्तिमञ्जसा तत्त्वेन वितन्वन् विस्तारयन् । किं प्रयोजनम् । अत्राह - **तम इति** । अनया कीर्त्या तमस्तरिष्यन्तीति कृत्वा ।। ६ - ७ ।।

श्रुतविप्रशापो राजा यदूनामसम्भावितोऽयमिति भावेन पृच्छति - **ब्रह्मण्यानामित्यादिना** । शापासम्भवे ब्रह्मण्यादित्रयो हेतवः ।। ८ ।।

यदोः कुलस्य । यन्निमित्तः किन्निमित्तः । यादृशः कीदृशः । एकात्मनामेकमनस्कानाम् । भेदो मिथो वैरलक्षणः ।। ९ ।।

**बादरायणिरुवाच -**

बिभ्रद् वपुः सकलसुन्दरसन्निवेशं
कर्माचरन् भुवि सुमङ्गलमाप्तकामः ।
आस्थाय धाम रममाण उदारकीर्तिः
संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥ १० ॥

कर्माणि पुण्यनिवहानि सुमङ्गलानि
गायज्जगत्कलिमलापहराणि कृत्वा ।
कालात्मना निवसता यदुदेवगेहे
पिण्डारकं समगमन् मुनयो निसृष्टाः ॥ ११ ॥

विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः ।
कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥ १२ ॥

क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ।
उपसङ्गृह्य पप्रच्छुरविनीता विनीतवत् ॥ १३ ॥

ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ।
एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा ॥ १४ ॥

प्रष्टुं विलज्जती युष्मान् प्रब्रूतामोघदर्शनाः ।
प्रसोष्यन्ती पुत्रकामा किं स्वित् सञ्जनयिष्यति ॥ १५ ॥

---

शुकः प्रश्नं प्रवदन् पुनरुक्तं करोति - **बिभ्रदित्यादिना** । सकलसुन्दरगुणानां सन्निवेशं निधानस्थानw धाम गृहमास्थाय । गृहे स्थित्वेत्यर्थः ॥ १० ॥

प्रश्नं परिहरति - **कर्माणीति** । पुण्यनिवहानि पुण्यकारणानि । यदुदेव उग्रसेनस्तस्य गेहे । उग्रसेनाधिकृतद्वारवत्यां निवसता कालत्मना कृष्णेन निसृष्टाः प्रेरिताः पिण्डारकं क्षेत्रं प्राप्ता इत्यन्वयः ॥ ११ ॥ उपसंगृह्य, साम्बमिति शेषः ॥ १२-१३ ॥

अन्तर्वत्नी गर्भिणी । असितेक्षणा नीलेक्षणा ॥ १४ ॥

एवं प्रलब्धा मुनयस्तानूचुः सहसा नृप।
जनयिष्यति वो मन्दा मुसलं कुलनाशनम्॥ १६॥

तच्छ्रुत्वा तेऽतिसन्त्रस्ता विमुच्य सहसोदरम्।
साम्बस्य ददृशुस्तस्मिन् मुसलं खल्वयस्मयम्॥ १७॥

किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जनाः।
इति विह्वलिता गेहानादाय मुसलं ययुः॥ १८॥

तच्चोपनीय सदसि परिम्लानमुखश्रियः।
राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ॥ १९॥

श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप।
विस्मिता भयसन्त्रस्ता बभूवुर्द्वारकौकसः॥ २०॥

तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः।
समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम्॥ २१॥

कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः।
ऊह्यमानानि वेलायां लग्नान्यासन् किलैरकाः॥ २२॥

मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे।
तस्योदरगतं लोहं शल्येषुं लुब्धकोऽकरोत्॥ २३॥

---

प्रलब्धा वञ्चिताः। 'सद्योऽर्थे सहसा हेतुशून्ये युक्तेऽपि साम्प्रतम्' इति यादवः। हे मन्दा निर्भाग्याः॥ १५-१६॥

तस्मिन् उदरे॥ १७॥ किं दुष्कृतम्॥ १८॥

तरलैस्तरङ्गैः। वेलायां तीरे। लग्नानि संसक्तानि। एरका दीर्घसूचीमुखतृणविशेषाः॥ १९-२२॥ शल्येषुं शल्याख्यशरम्। लुब्धको व्याधः॥ २३॥

भगवान् ज्ञातसर्वार्थ[१] ईश्वरोऽपि तदन्यथा।
कर्तुं नैच्छद् विप्रशापं कालरूप्यन्वमोदत॥ २४॥

॥ इति एकादशस्कन्धे प्रथमोऽध्यायः॥

॥ अथ द्वितीयोऽध्यायः॥

**श्रीशुक उवाच -**

गोविन्दभुजगुप्तायां द्वारकायां कुरूद्वह।
अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः॥ १॥

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम्।
न भजेत् सर्वतोमृत्युरुपास्यममरोत्तमैः॥ २॥

---

सर्वेषामर्थः पुरुषार्थो यस्मात् स तथा। सर्वैरर्थ्यत इति वा[१]॥ २४॥

**॥ इति श्रीमहेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थयतिकृतायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धे प्रथमोऽध्यायः॥**

अतः कतिपयैरध्यायैर्वसुदेवनारदसंवादच्छलेन हरेस्तत्वं तदवाप्तिसाधनं तत्राधिकारिलक्षणं चेत्यादि निरूपयति। तत्र यादृच्छिकस्य नारदस्यान्तःपुरवासिना वसुदेवेन सह सङ्गमः कथं सञ्जाघटीति शङ्कां परिहर्तुमाह- गोविन्देति। वनवासिनो नारदस्य जनसङ्कुलपुरनिवासहेतुः (उच्यते) **कृष्णेति** ॥ १॥

श्रोत्रादीन्द्रिशक्तिमतः पुंसोऽपि हरिश्रवणादिश्रद्धातिशयो जायते किं पुनः सम्यग्विज्ञाततत्वस्य नारदस्येति भावेनाह - **को न्विति**। सर्वतो मृत्युर्मरणं यस्य स तथा॥ २॥

---

१ अस्पष्टमिदं व्याख्यानम्। ज्ञातः सर्वार्थः येनेति सरलम्।

**तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ।**
**अर्चितं सुखमासीनमभिवन्द्येदमब्रवीत् ॥ ३ ॥**

**वसुदेव उवाच -**

**भगवन् भवतो यात्रा स्वस्तये सर्वदेहिनाम् ।**
**कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनः ॥ ४ ॥**

**भूतानां देवचरितं दुःखाय च सुखाय च ।**
**सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥**

**भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।**
**छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥**

---

अस्तूक्तम् । प्रकृते किम् ? अत्राह - **तमेकदेति** ॥ ३ ॥

स्तुत्या सन्तोषोद्रेकात् श्रोतव्यार्थकथनबुध्द्युल्लासो भवतीत्याशयेन नारदं स्तौति - **भगवन्नित्यादिना** । स्वस्तय इति चिरायेत्यादिप्रयोगवत् । यात्रा सञ्चरणम् । पित्रोर्यात्रा शिशूनाम् । उत्तमश्लोको हरिः स एव वर्त्म यस्य स तथा । यद्वा उत्तमो हरिस्तस्य श्लोक इव श्लोको येषां ते तथा महान्तस्तेषां वर्त्म यस्य स तथा, महन्मार्गानुवर्तीत्यर्थः, तस्य ॥ ४ ॥

ननु सर्वभूतसुहृत्वे सात्विकत्वं प्रयोजकं तद् देवानामप्यस्ति, अतः किं विशेषतः स्तूयत इति तत्राह - **भूतानामिति** । भूतानि त्रिविधानि सात्विकतामसमिश्राणीति[१] । तत्र देवानां चरितं सात्विकभूतानां सुखायैव । आत्मभजने बुद्धिमुत्पाद्य सुखलक्षणफलदानम् । तामसानां तु दुःखाय । तद्विपरीतलक्षणबुद्धिमुत्पाद्य दुःखलक्षणफलदानम् । राजसानां तु सुखदुःखलक्षणमिश्रफलाय । मिश्रकर्मबुद्धिमुत्पाद्य सुखादिमिश्रफलदानम् । इदं चशब्द-गृहीतम् । द्वितीयश्चशब्दः समुच्चयार्थः । भवादृशानां चरितं न तथेत्याह - **सुखायेति** । एवशब्देन दुःखं व्यावर्तयति । अच्युतात्मनामित्यनेन व्यापारान्तरं निवारयति । हिशब्देन तेषां तदस्तीति सूचयति ॥ ५ ॥

देवानामात्मभजने बुद्धिमुत्पाद्यानुत्पाद्य च सुखादिफलदातृत्वमस्तीत्युक्तम् । तत् स्पष्टयति- **भजन्तीति** । ये पुरुषा यथा येन प्रकारेण देवान् भजन्ति ते देवा अपि तथा कृतकर्मानुसारेण तान्

---

१. सात्विकराजसतामसमिश्राणीति क्वचित्पाठः । तथात्वे मिश्रपदस्य सार्थक्यं नोपलभ्यते ।

**ब्रह्मंस्तथापि पृच्छामो धर्मान् भागवतांस्तव ।**
**यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतोभयात् ॥ ७ ॥**

**अहं किल पुराऽनन्तं प्रजार्थे भुवि मुक्तिदम् ।**
**अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥**

**यथा विचित्रव्यसनाद् भवेऽस्मिन् विश्वतोभयात् ।**
**मुच्येमह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥**

---

पुरुषान् भजन्ति फलदानेन सन्नद्धा भवन्ति । न च देवेषु वैषम्यादिकमाशङ्कनीयमित्येतन्निदर्शनेन दर्शयति **छायेति** । कर्मसचिवाः छायावत् पुरुषकृतकर्माधीनाः, छाया यथा पुरुषानुकृता तथेत्यर्थः । भवादृशा न तथेत्याह - **साधव इति** 'आत्मनो भजने बुद्धिमुत्पाद्य फलदाः सुराः । उत्तमानां जनानां च निकृष्टानां विपर्ययः । शुभाशुभफलानां तु कर्मणां विबुधाः सदा । प्रवर्तका यथायोग्यमृषयः करुणाः सदा । सुखमिच्छन्ति भूतानां प्रायो दुःखासहा नृणाम् । तथापि तेभ्यः प्रवरा देवा एव हरेः प्रियाः' इत्येतदस्मिन्नर्थे प्रमाणम् ॥ ६ ॥

ननु साधुभ्यो देवानामुत्तमत्वेऽभीष्टार्थप्रश्नस्तान् प्रति स्यात्, यथावत्प्रश्नपरिहारवक्तृत्वसामर्थ्यादिति तत्राह - **ब्रह्मन्निति** । यद्यपि देवाः प्रशस्ता निश्चितार्थास्तथापि मानुषत्वेनास्मद्दृष्ट्यगोचरत्वाद् युष्माकं तन्निश्चितार्थज्ञानसामर्थ्यात् तत्सन्निधानपात्रत्वाच्च वयं तु तव त्वां धर्मान् पृच्छाम इत्यन्वयः ।

ननु किमत्र हिंसालक्षणो (किमत्राहिंसालक्षणो ?) धर्मः किमुत न्यायाचाराद्यन्यतम इत्यत्राह - **भागवतानिति** । अवश्यवक्तव्यत्वे तल्लक्षणमाह- यानिति । अनेन यद्धर्मश्रवणमपि सर्वभयमोचकं किमुत तदनुष्ठानमिति दर्शितम् ॥ ७ ॥

भवता भगवद्विषयधर्माचरणं कृतं किमधुना तद्विषयप्रश्न इति तत्राह - **अहमिति** ॥ ८ ॥

नन्वपुत्रस्य जीवत्पुत्रमुखदर्शनाल्लोकावाप्तिः श्रूयते , अतः कथं प्रजार्थ इति निन्दाध्वनिरिति तत्राह - **यथेति** । अस्मिन् भवे जन्मनि विचित्रव्यसनात् नानाक्लेशात् विश्वतोभयाच्च यथाऽञ्जसा क्षिप्रं मुच्येमहि तथा पुनरद्धा प्रत्यक्षं शाधीत्यन्वयः । 'अद्धा प्रत्यक्षसत्ययोः' इति यादवः । अनेन वसुदेवस्य पुत्रीभूतश्रीकृष्णमुखेन्दुदर्शनादनेकव्यसनाकुलात् संसारान्मुक्तेर्निश्चितत्वेपि विशेषप्रश्नो लोकहितायेति ज्ञातव्यम् ॥ ९ ॥

**श्रीशुक उवाच -**

**राजन्नेवंकृतप्रश्नो वसुदेवेन धीमता ।**
**प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥**

**नारद उवाच -**

**सम्यगेतद् व्यवसितं भवता सात्वतर्षभ ।**
**यत् पृच्छसे भागवतान् धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥**

**श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ।**
**सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥**

**त्वया परमकल्याण पुण्यश्रवणकीर्तनः ।**
**स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥**

**अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥**

---

वसुदेवेन पृष्टो नारदः किञ्चित्तगुणोऽभूदिति राज्ञो हार्दं चोद्यं परिहरति- **राजन्निति** । हरेर्गुणैः संस्मारितः, हरिरिति शेषः ॥ १० ॥

बुद्धिविकासाय प्रष्टारं स्तौति - **सम्यगिति** । विश्वस्याभीष्टस्य भावनमुत्पादनं येभ्यस्ते तथा तान् ॥ ११ ॥

एतदेव विवृणोति - **श्रुत इति** । देवशब्दस्य (अर्थस्य ?) विश्वान्तर्गतत्वेऽपि पृथग् ग्रहणमनिवर्त्य-दोषपरिहारसामर्थ्यसूचनार्थं कृतम् । एतदेवापिशब्देनासूचयत् । 'ब्रह्महत्यासहस्रस्य पापं शाम्येत् कथञ्चन । न पुनस्त्वदवज्ञाने कल्पकोटिशतैरपि' (इति) इममर्थं हि शब्देन सूचयति ॥ १२ ॥

ममाप्यनेन पुण्यवृद्धिरभूदित्याशयेनाह-**त्वयेति** । नित्यं स्मृतोऽपीदानीं विशेषतः स्मारितो गुणकथनप्रश्नेन ॥ १३ ॥

धीमत्त्वेन वसुदेवस्य नारदोक्तौ विस्रम्भेऽपि स्वकपोलकल्पितत्वेन न श्रद्धेयमिति मन्दाशङ्कापनोदाय तत्प्रश्नपरिहारत्वेन जनकार्षभसंवादमितिहासं वक्ति - **अत्रेति** ॥ १४ ॥

प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥

तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ।
अवतीर्णं सुतशतं तस्यासीद् ब्रह्मपारगम् ॥ १६ ॥
तेषां वै भरतः श्रेष्ठो नारायणपरायणः ।
विख्यातं वर्षमेतद् यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥

स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ।
उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥

तेषां नव नवद्वीपपतयोऽस्य समन्ततः ।
कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥

नवाभवन् महाभागा मुनयो ह्यूर्ध्वमन्थिनः ।
श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥

---

निश्चयजननायान्वयशुद्धिं कथयति - **प्रियव्रत इत्यादिना** ॥ १५ ॥ अवतारप्रयोजमाह - **मोक्षेति** ॥ १६ ॥

यन्नाम्ना भारतमिति यस्य नाम्ना एतद् वर्षं भारतमिति विख्यातम् । अद्भुतं पुण्यसाधननिमित्तत्वेन ॥ १७ ॥

तत्पदवीं तस्य हरेः पदवीम्, अयनं लोकमित्यर्थः ॥ १८ ॥

तेषां मध्ये नव अस्य भूमण्डलस्य नवद्वीपपतयोऽभवन् । तेषां मध्ये एकाशीतिसंख्याता द्विजातयो बभूवुः । किंकर्माण इत्यत्राह - **कर्मतन्त्रप्रणेतारः** । कर्मकाण्डप्रणेतारः ॥ १९ ॥

तेषां मध्ये नवसङ्ख्याता मुनयोऽभवन् । तत्रापि विशेषमाह - **ऊर्ध्वमन्थिन** इति । ऊर्ध्वं मन्था रेत एषामस्तीत्यूर्ध्वमन्थिनः, ऊर्ध्वरेतसः सन्न्यासव्रतधारिण इत्यर्थः । स्पष्टमाह - **श्रमणा** इति । श्रमणा भिक्षवः । तत्रापि विशेषमाह - **वातरशना** इति । वात एव रशना कटिसूत्रं येषां ते तथा दिगम्बराः परमहंसा इत्यर्थः । अत्मविद्यायां वेदान्तशास्त्रे विशारदाः पटवः ॥ २० ॥

**कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।**
**आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥**

**त एते भगवद्रूपं विश्वं सदसदात्मकम् ।**
**आत्मनो व्यतिरेकेण पश्यन्तो व्यचरन् महीम् ॥ २२ ॥**

**अव्याहतेष्टगतयः सुरसिद्धसाध्य -**
**गन्धर्वयक्षनरकिन्नरनागलोकान् ।**
**मुक्ताश्चरन्ति मुनिचारणभूतनाथ -**
**विद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥**

---

एतन्नामनिरुक्तिज्ञानादयमर्थः सिद्ध इति तन्नामान्याह - **कविरित्यादिना** । द्रुतं मिलं मिथो मेलनं वेदार्थानामेकीकरणं येन स तथा । चाम्यन्ति वेदात्तीर्थं इति चमा वेदतीर्थपायिनः, तेषु सारश्चमसः । सृ गताविति धातोर्डप्रत्ययः । करे भान्तं जनयति प्रकाशयतीति करभाजनः, हस्तामलकवत् प्रतिभातवेदार्थ इत्यर्थः ॥ २१ ॥

आत्मविद्यावैशारद्यं चात्मभेदज्ञानेनेति भावेनाह - **त एत इति** । ये मुनित्वेनोक्तास्त एते महीं व्यचरन्नित्यन्वयः । किंविशिष्टाः ? विश्वं पूर्णं सदसदात्मकं कार्यकारणव्यापिभगवद्रूपम् आत्मनो जीवाद् व्यतिरेकेण वैलक्षण्येन पश्यन्त इति । यद्वा सदसदात्मकं भगवद्रूपं भगवतो मूर्तिं प्रतिमास्थानीयं विश्वं प्रपञ्चमात्मनो हरेर्व्यतिरेकेण पश्यन्त इति । यद्वा विश्वमन्तः प्रविश्य वर्तमानं सदसदात्मकं बहिश्च जगद् व्याप्य वर्तमानं भगवद्रूपं ब्रह्मसञ्ज्ञमात्मनोऽन्तर्यामिणो हरेरव्यतिरेकेणाभेदेन पश्यन्तः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुत्यर्थरसमनुभवन्त इत्यर्थः । विश्वस्य परमात्मनोऽभेददर्शनं सदसदात्मकमिति विशेषणेन विरुद्धम् । अनङ्गीकारात् । जहद-जहल्लक्षणाप्यप्रामाणिकीत्युपेक्षणीयं तन्मतमिति ॥ २२ ॥

महीसञ्चरणं चारकाणाप्यमस्ति किं विशेषमाहात्म्यमेषाम् ? अत्राह - **अव्याहतेति** । मुक्ता जीवन्मुक्ताः । मुनिचारणादीनां भुवनानि लाकांश्चेति । सुरसिद्धादीनां लोकांश्चरन्तीति किं कर्मवशात्? नेत्याह - **काममिति** । बलवता प्रतिषेधे कामतोऽपि सञ्चरणं दुश्शकं स्यादित्यत उक्तम् - **अव्याहतेति** ॥ २३ ॥

त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ।
वितायमानमृषिभिराञ्जनाभा महात्मनः ॥ २४ ॥

तान् दृष्ट्वा सूर्यसङ्काशान् महाभगवतान् नृप ।
यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥

विदेहस्तानभिप्रेत्य नारायणपरायणान् ।
प्रीतः सम्पूजयाञ्चक्र आसनस्थान् यथार्हतः ॥ २६ ॥

तान् रोचमानान् स्वरुचा ब्रह्मपुत्रोपमान् नव ।
पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥

**विदेह उवाच -**

मन्ये भगवतः साक्षात् पार्षदान् वो मधुद्विषः ।
विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥

---

किमनेन प्रकृत इति तत्राह - **त एकदेति** । अञ्जनाभस्य हरेः पुत्रा आञ्जनाभाः ॥ २४ ॥

इदमुपगमनं न द्वेषजनकं निमित्ताभावात् , किन्तु सम्प्रीतिजनकं तल्लक्षणदर्शनादित्याह - **तानिति** । उपतस्थिरे साञ्जलिपुटा उत्थायासेवन्त ॥ २५ ॥

तत्र विदेहेनेतरेभ्यः किं विशेषेण सेवितम् ? अत्राह - **विदेह इति** । अभिप्रेत्य सम्यग् ज्ञात्वा ॥ २६ ॥

ब्रह्मपुत्रोपमान् सनकादितुल्यान् । तान् स्तुवन् पप्रच्छ, अभीष्टमिति शेषः ॥ २७ ॥

स्तुतिप्रकारः कथ्यते - **मन्य इत्यादिना** ॥ २८ ॥

**अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ।**
**संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥**

**धर्मान् भागवतान् ब्रूत यदि नः श्रुतये क्षमम् ।**
**यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥**

**नारद उवाच**

**एवं ते निमिना पृष्टा वसुदेव महत्तमाः ।**
**प्रतिपूज्याब्रुवन् प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥**

**कविरुवाच -**

**मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।**
**उद्विग्नबुद्धेरसदात्मभावाद् विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥**

---

किमभीष्टमप्राक्षीत्? अत्राह - **अत इति**। यतो वैकुण्ठप्रियदर्शनं दुर्लभमतः करतलप्राप्तरत्नत्वात् भवतो येन निःश्रेयो नः स्यात् तदात्यन्तिकं क्षेमं मङ्गलसाधनमिति मोक्षसाधनं पृच्छाम इत्यर्थः । कार्येण कारणमुपलक्ष्यत इति न्यायोपपत्तेः न केवलं प्रश्नप्रतिवचनाभ्यां तत्परिहारलक्षणं प्रयोजनं लक्ष्यते अपि तु तयोश्चिरकालापेक्षितत्वेन प्रष्टृप्रवक्तृपुरुषयोश्च तावत्कालं स्थित्यपेक्षितत्वेन लब्धेन तत्सङ्गेन सुखनिधिलक्षणं प्रयोजनं चेत्यभिप्रेत्य तत्सङ्गं स्तौति - **संसार इति**। शेवधिः सुखनिधिः ॥ २९-३० ॥

प्रधानसाधने साधानान्यपि वक्तव्यानीत्याह - **धर्मानिति**। श्रुतये श्रवणाय क्षमं योग्यम्। 'कल्याणी ऋक् दक्षसञ्ज्ञा योग्या युक्ता हिता क्षमा' इति यादवः ॥ ३१ ॥

अब्रुवन्निति बहुवचनाद् यद् भयमुत्पन्नं तदल्पबुद्धेरेकस्य बहुभिर्विचक्षणैर्युगपदुच्यमान-वचनार्थावधारणं दुःशकमिति निवारयति - **कविरिति** । अत्र संसारे । असत्यमङ्गले देहादावह-मित्यात्मभावादुद्विग्नबुद्धेः पुरुषस्य नित्यमच्युतस्य हेयोपादेयांशरहितस्य हरेः श्रीपादपद्मोपासन-मकुतश्चिद्भयं न कुतश्चिद् भयं यस्मात् तत् तथा तदहं मन्य इति मम राद्धान्त इत्यर्थः । विशिनष्टि - **विश्वात्मनेति** । यत्र यस्मिन्नुपासाने कृते विश्वात्मना सर्वात्मना संसारभीतिर्निवर्तते तदेवानुष्ठेयं पुरुषेणेति ॥ ३२-३३ ॥

**ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये।**
**अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान्॥ ३४॥**

**यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित्।**
**धावन्नुन्मील्य वा नेत्रे न स्खलेन्न पतेदिह॥ ३५॥**

**कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वाऽनुसृतः स्वभावम्।**
**करोति यद्यत् सकलं परस्मै नारायणायेति समर्पयेत् तत्॥ ३६॥**

**भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः।**
**यन्मायायाऽतो बुध आभजेत् तं भक्त्यैकयेशं गुरुदेवतात्मा॥ ३७॥**

---

हरेरङ्घ्रिनिषेवणमेव मुख्यो भागवतो धर्म इति मनसि निधाय तदङ्गत्वेनोच्यमाना योगा अपि भागवतधर्मा इत्याह **ये वा इति**। आत्मलब्धये परमात्मज्ञानाय। भागवतान्, धर्मानिति शेषः॥ ३४॥

न प्रमाद्येत अनवधानवान्न भवति। प्रमादोऽनवधानतेत्यभिधानात्। आत्मानात्मविवेकज्ञानवान् स्यादित्यर्थः। कथमिवेत्यस्मिन्नर्थे लुप्तोपमामाह **धावन्निति**। यथा नेत्रे उन्मील्य धावन्निह शर्करावति स्थले न स्खलेन्न पतेत् तथा भागवतधर्मरथाधिरूढः॥ ३५॥

भगवत्कथितोपायविधिः कीदृश इति तत्राह - **कायेनेति**। स्वभावं योग्यतामनुसृतोऽनुगतः। मनसा सङ्कल्पाद्यधिकरणेन। बुध्या निश्चयज्ञानाधिकरणेन। आत्मना मत्या मननलक्षण-ज्ञानाधिकरणेन, अहं हरिमर्चयामीत्यादिलक्षणेनाहङ्कारेण वा। कायादिना यदर्चनादिकं करोति सर्वक्रियासु स्वस्यास्वतन्त्र्यज्ञानेन तत् सर्वं परस्मै नारायणायास्त्विति समर्पयेत्। सोऽयमात्म-प्रसादजनकत्वेन तज्ज्ञानोपाय इति भावः॥ ३६॥

विपक्षे बाधकतर्कमुद्भाव्य विपर्ययेऽवसानमाह - **भयमिति**। अस्मृतिरज्ञानं विपर्ययोऽन्यथाज्ञानम् एते ईशादपेतस्य ईशानुग्रहरहितस्य प्रकृतिबद्धस्य पुंसो यस्य हरेर्माययेच्छया स्तः। ताभ्यामज्ञानविपरीतज्ञानाभ्यां द्वितीयाभिनिवेशतः द्वितीये देहगेहादौ अहं ममेत्यभिनिवेशनाद् दुरभिमानः स्यात्। तस्माद् भयं संसारलक्षणं स्यादिति यस्मात्, अतो गुरौ परमात्मदेवतायां च आत्मा मनो यस्य स तथा, तस्मात् तज्ज्ञानवान् यथायोग्यं गुरुपरमपूरुषयोर्भक्तिं कुर्वाणो बुधस्तं हरिमाभजेत् सर्वसमर्पणपूर्वकमुपसीतेत्यर्थः॥ ३७॥

**अविद्यमानोऽप्यवभाति हि द्वयो**
**ध्यातुर्धिया स्वप्नमनोरथौ यथा।**
**तत्कर्म सङ्कल्पविकल्पकं मनो**
**बुधो निदध्यादभयं ततः स्यात्॥ ३८॥**

**शृण्वन् सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके।**
**गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्गः॥ ३९॥**

---

एतदेव सोदाहरणं विवृणोति - **अविद्यमान इति**। धिया ध्यातुः, विषयानिति शेषः। ध्यायतो विषयानस्येति स्मृतेः। पुंस ईशाधीनत्वेन स्वस्याविद्यमानोऽपि द्वयो देहगेहादि स्वकीयत्वेनावभाति हि यस्मात्। कथमिव ? यथा स्वप्नयुतमनोरथः स्वप्ने जाग्रत्त्वेन निधिमुत्खाय कोशमापाद्य प्रकृतिवर्गमाबध्य राज्यं करिष्यामीति मनोरथः सत्त्वेन प्रतीयते तथा देहादावीशाधीने स्वाधीनताबुद्धिः संसारः, तस्मात् तादृशसंसारनिवृत्तये तत्कर्म तद् देहादि कर्म विषयो यस्य तत् तथा तत् सङ्कल्पविकल्पवृत्तियुक्तं मनः श्रीनारायणे निदध्यात्। ततो हरिप्रसादादभयं संसारनिवृत्तिलक्षणो मोक्षः स्यादित्यन्वयः। सर्वसमर्पणलक्षणोपासनाभावे ब्रह्मज्ञानं न स्यात् तदभावे संसारनिवृत्तिर्न स्यादतस्तदर्थं सर्वसमर्पणलक्षणमुपासनं कर्तव्यमिति भावः। 'आत्मनो देहगेहादि द्वयशब्देन भण्यते। अविद्यमानं जीवस्य प्रतिभाति तदीयवत्। जाग्रद्वत् तु यथा स्वप्नः प्रतिभाति मनोरथः। विद्यमानवदेवैवं देहादीशवशे स्थितम्। विभाति स्ववशत्वेन सैषा संसृतिरुच्यते। तस्मात् तद्विषयं त्यक्त्वा मनो विष्णौ निवेशयेत्' इत्येतन्मानसिद्धमेतदर्थजातम्। नन्वत्र देहादेरसत्वाभिप्रायेण स्वप्नदृष्टान्तः किं न स्यादिति चेन्न। उदाहृतस्मृति विरोधात्। तस्मात् स्वातन्त्र्यस्यैव निषेधः क्रियत इति। द्वयशब्देन भेदमनूद्य तन्निषेधः क्रियत इत्यर्थोप्युक्तप्रमाणविरुद्ध इत्युक्तमनाकुलमिति ॥ ३८॥

अयमपि भागवतो धर्म इत्याह - **शृण्वन्निति**। एवमात्मज्ञानोत्पादनसमर्थभगवदुपासनाङ्गभूतसर्व-समर्पणाख्यभागवतधर्ममनुतिष्ठतो देहाद्यभिमानविधुरस्य भगवदेकस्वातन्त्र्यज्ञानिनो निरन्तरं हरौ मनो नियुञ्जमानस्येयं प्रवृत्तिरित्यतो वाऽऽह- **शृण्वन्निति**। तदर्थकानि जन्मकर्मविषयाणि ॥ ३९॥

**एवंव्रतश्च प्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।**
**हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥**

**खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन् ।**
**सरित् समुद्रांश्च हरेःशरीरं यत् किञ्च भूतं प्रणमेदनन्यम् ॥ ४१ ॥**

**भक्तिः परे स्वेऽनुभवो विरक्तिरन्यत्र चैष त्रिक एककाल ः ।**
**प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥**

---

एवं श्रवणाद्याचरतोऽपरोक्षज्ञानजननी भक्तिः स्यादित्याह - **एवंव्रत इति**। प्रियस्य हरेर्नामकीर्त्या जातानुरागः संवर्धितभक्त्युद्रेकः । अनेन भक्त्युद्रेकोऽनुमन्तव्य इति भावेनाह - **हसतीति**। लोकबाह्य इत्यनेन भक्तबाहुविध्यं दर्शयति । कश्चिल्लोकबाह्यो लोकविलक्षणः, कश्चिल्लोकवत् बाह्यलिङ्गप्रदर्शकः, कश्चिल्लोवद् बाह्यवच्चोभयलक्षणोपेतश्च । तदुक्तम् 'केचिदुन्मादवद्भक्ता बाह्यलिङ्गप्रदर्शकाः । केचिदान्तरभक्ताः स्युःकेचिच्चैवोभयात्मकाः ।मुखप्रसादाद् दाढ्र्याच्च भक्तिर्ज्ञेया न चान्यतः' इति। हसनादिलक्षणमुन्मादादावतिव्याप्तमित्यत उक्तम् - **मुखप्रसादादिति**। नन्वयमर्थो मुखेन नोक्त इत्यत उक्तम् - **अथो इति** । अथोशब्दोऽप्यर्थः । हसनादेरतिव्याप्तत्वान्मुख-प्रसादाद्यपेक्षितमित्यर्थः । विकल्पार्थो वा ।स च लोकबाह्य इत्यनेन स्पष्टीकृत इति ॥४०॥

इदानीमेवंविधोपासकस्य हरेरुपासनार्थमधिष्ठानविशेषमाह - **खं वायुमित्यादिना** । खादीनां यानि यानि शब्दप्रवृत्तिनिमित्तानि तानि सर्वाणि हरेरधीनत्वेन तदेकनिष्ठगुणावेदकानि । उपासकानां च तत्तत् योग्यतावशात् तत्तदधिष्ठानबाहुल्यं चोपयुज्यते। हरेरावासस्थानत्वादेषु तदुपासनाविधानमिति भावेनाह - **हरेरिति** ।यत् किञ्च भूतमुत्पन्नं तत् सर्वं हरेः शरीरं विषयभोगायतनत्वादावासस्थानम् । ''यःपृथिव्यां तिष्ठन् पृथिव्या अन्तरः'' इत्यादिश्रुतेः । प्रकर्षेण मनस्तन्नतं कुर्यात् । किं तदभेदेन ? नेत्याह - **अनन्यमिति** । अन्यः स्वामी यस्य न विद्यते सोऽनन्यः, तम् । ब्रह्मपरिणामत्वेन सर्वस्य तच्छरीरत्वात् तदभेदेनोपासनोच्यते इति चेन्न । ''सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते'' इत्यादि-विरोधात् ॥४१॥

एवं खाद्यधिष्ठानेषु सन्निहितस्य हरेस्ततो भिन्नत्वेन तत्स्वामित्वेन चोपासना भक्त्यादिपुष्टिं करोति नान्यथेति सोदाहरणमाह **भक्तिरिति**। खादिषु स्थितं हरिं प्रपद्यमानस्योपासीनस्य तथा परे परमात्मनि

**इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ।**
**भवन्ति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥**

**राजोवाच -**

**अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ।**
**यथा चरति यद् ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥ ४४ ॥**

**हरिरुवाच -**

**सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ।**
**भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥**

---

भक्तिः स्वे स्वस्मिन् अनुभावोऽस्वान्त्यज्ञानम् अन्यत्र संसारे विरक्तिरित्येष त्रिकः त्रित्वसङ्ख्यां प्राप्तः एककालः, स्यादिति शेषः । यथा बुभुक्षोरश्नतः पुम्सोऽनुघासं प्रतिकवलं क्षुदपायः पुष्टिरुदर-पूर्तिलक्षणा तुष्टिरलम्बुद्धिरित्येतत् त्रयं स्यात् ॥ ४२ ॥

पूर्वोक्तार्थमनूद्य तत्फलमाह - **इतीति** । प्रीत्या भजतः अनु अनन्तरं भगवत्प्रबोधः भगवदपरोक्ष-ज्ञानमनन्तरं पूर्वस्मादधिका संसारविरक्तिरनन्तरमधिका भक्तिरित्येतानि साधनानि भागवतस्य भवन्तीति यस्मात् ततोऽनन्तरं साक्षात् तुर्यावस्थालक्षणां परामुत्तमां शान्तिं स्वयोग्यां मुक्तिमुपैती-त्यन्वयः । अत्र पूर्वाधिक्यविवक्षया प्रबोधादीनां हेतुमद्भावकथनं न विरुद्धमिति ज्ञातव्यम् ॥ ४३ ॥

भगवत्सम्बन्धी भागवत इति सामान्यतो ज्ञातभागवतोऽपि विशेषविवक्षया लोकोपकाराय पृच्छति - **अथेति** । अथ प्राप्तावसरः, पृच्छामीति शेषः । किम् । तत्राह - **भागवतमिति** । भागवतमुत्तम-मध्यमाधमसञ्ज्ञम् । यद्धर्मः किंधर्मः । यादृशः कीदृशः । यथा कथम् ॥ ४४ ॥

तत्र प्रथमं प्रश्नं परिहरति - **सर्वभूतेष्विति** । सर्वभूतेषु स्थितस्यात्मनः पूर्णस्य हरेः । भगवान् सर्वगुणपूर्णः तस्य भावो भगवद्भावः । सर्वगुणपूर्णतां आत्मन् आत्मनि भूतानि च पश्येत् पश्यति । सर्वभूतेष्वात्मनः स्वस्य भगवद्भावं ब्रह्मत्वं पश्यन् भागवतोत्तम इत्यर्थस्य ''पूर्णत्वादात्मशब्दोक्तः कश्चित् सर्वनरोत्तमः'' इति वाक्यविरुद्धत्वादनादर्तव्यत्वम् ॥ ४५ ॥

**ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।**
**प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ ४६ ॥**

**अर्चायामेव हरये पूजां यः श्रद्धयेहते।**
**न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥**

**गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति।**
**विष्णोर्मायामिमां पश्यन् स वै भागवतोत्तमः ॥ ४८ ॥**

---

मध्यमभागवतमाह - ईश्वर इति। ईश्वरे प्रेम तदधीनेषु सत्सु मैत्रीं बालिशेष्वज्ञेषु कृपां द्विषत्सूपेक्षाम्। चशब्दात् सर्वस्य जगतस्तद्वशत्वं न जानाति ॥ ४६ ॥

अधमभागवतमाह - अर्चायामिति। एव शब्देन अर्चाया अन्यत्रस्थितविष्णुज्ञानं तत्पूजां च व्यावर्तयति। तद्भक्तेषु न केवलं पूजां नेहते अपितु तारतम्यं न जानाति। अन्येषूपेक्षकेषु शत्रुषु द्वेषप्रकारं च न जानाति ॥ ४७ ॥

यथा चरतीत्येतं प्रश्नं परिहरति - गृहीत्वेति। इमां लोकयात्रां विष्णोर्मायामिच्छाधीनां पश्यन् इन्द्रियैरर्थान् शब्दादीन् विषयान् गृहीत्वाऽपि योग्यतातिरेकेणाधिकं न द्वेष्टि न हृष्यति। अयमेव यद्धर्म इत्यस्य परिहारः। सदसत्सु यथायोग्यं हर्षद्वेषौ सदसतां वृद्धिह्रासकरो धर्मः। ' सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते। अनन्याधिपतित्वाच्च तदनन्यमुदीर्यते। न चाप्यभेदो जगता विष्णोःपूर्णगुणस्य तु। '' इत्येतद् हरेःशरीरं यत्किञ्च भूतं प्रणमेदनन्यमित्यत्र प्रमाणम्।[१]

[२]पूर्णत्वादात्मशब्दोक्तः कश्चित् सर्वनरोत्तमः। सोऽपि नारयणो नान्यः स च सर्वेषु संस्थितः। तद्वशा इतरे सर्वे श्रीब्रह्मेशपुरःसराः।स एव तु स्वभक्तेषु स्थित्वानुग्रहकारकः। तत्प्रेरितास्तदन्ये तु प्रियद्वेषादिकारिणः। अतस्तत्प्रेरणादेव प्रेमाद्या मम जज्ञिरे। इति पश्यति यो बुध्या स तु भागवतोत्तमः। सर्वाधिकं पृथग्विष्णुं क्षीरसागरवासिनम्। ज्ञात्वा तत्र प्रेमयुक्तस्तद्भक्तेषु च मैत्रयुक्। कृपावांश्च तदज्ञेषु तद्वेषीणामुपेक्षकः। तद्वशत्वं न जानाति सर्वस्य जगतोऽपि तु। तमाहुर्मध्यमं भक्तमर्चायामेव संस्थितम्। विष्णुं ज्ञात्वा तदन्यत्र नैव जानाति यः पुमान्।तारतम्यं च तद्भक्तेर्न जानाति कथञ्चन। अवजानंश्च तान् भक्तानात्मनो भक्तिदर्पतः। उपेक्षकोऽपि वा तेषु न

---

१. इदं प्रमाणवचनं खं वायुमित्यादि ४१तमश्लोकसम्बद्धम्। परं सर्वत्र कोशेष्वत्रैव लिखितं दृश्यते।
२. इदं प्रमाणोदाहरणमव्यवहितातीतश्लोकत्रयसम्बद्धम्।

**देहेन्द्रियप्राणमनो धियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।**
**संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥**

---

स्मरेदथवाऽपि तान् । मानुषेषु यथा कश्चित् किञ्चदुच्चः प्रदृश्यते । एवमेवोच्चतां विष्णोरल्पां पश्यति चान्यतः । ते तु भक्ताधमाः प्रोक्ताः स्वर्गादिफलभोगिनः । तैर्विघ्निता अधो यान्ति तद्भक्तानामुपेक्षकाः । कुर्युर्विष्णावपि द्वेषं देवा देवावमानिनः । पूजिता विष्णुभक्तिं च नावज्ञेयास्ततः सुराः । उपेक्षकेषु देवानां भक्तिनाशं स्वयं हरिः । करोति तेन विभ्रष्टाः संसरन्ति पुनःपुनः । अधो वा यान्ति विद्वेषात् पूज्या देवास्ततः सदा । यस्तान् द्वेष्टि स तं द्वेष्टि यस्ताननु स चानु तम् । ऐकात्म्यमागतं विद्धि देवैस्तद्भक्तिपूरितैः । उपेक्षकस्तु देवानां यदैव निरयोपगः । तदा तु किमु वक्तव्यमुपेक्षायां जनार्दने । विष्णोरुपेक्षकं सर्वे विद्विषन्त्याधिकं सुराः । पतत्यवश्यं तमसि हरिणा तैश्च पातितः । भुङ्क्ते स्वर्गफलं नित्यं निरयं नैव गच्छति । विष्णोस्तु मध्यमो भक्तो जायते मानुषेषु च । अस्मरन् देवता यस्तु भजते पुरुषोत्तमम् । योग्यः संस्मरते देवानयोग्यो द्वेष्टि केशवम् । यस्तूत्तमो भागवतः स मुक्तिं परमां व्रजेत् । विष्णुना सर्वदेवैश्च मोदते स हि नित्यदा' इति समाख्यानबलात् सिद्धोयं सर्वभूतेष्वित्यादिरुक्तार्थ इति ।

विष्णुमायां विष्ण्विच्छाधीनाम् । ' विष्णोरिच्छानुसार्येतद् ज्ञात्वा योग्यान्न चाधिकम् । हृष्यति द्वेष्टि वा यस्तु स वै भागवतोत्तमः' इत्येतद् गृहीत्वापीन्द्रियैरर्थानित्यर्थे मानम् । ' सतां वृद्धिकरो धर्मस्त्वसतां ह्रासकारणः । अयं तु निश्चितो धर्मो ह्यधर्मोऽन्यो विनिश्चितः । हर्षः सत्सु तथाऽसत्सु धर्मो धर्मविपर्ययः । तेषां वृद्धौ तथा हानौ सर्वं ज्ञेयमशेषतः । एतदर्थे च धर्माणां मर्यादा वैदिकादिका । मूलधर्मविरुद्धा तु सा न ग्राह्या कथञ्चन ' इत्येतदपि गृहीत्वापीत्यत्र मानम् ॥ ४८ ॥

कैर्लिङ्गैरित्येतत्प्रश्नं परिहरति - देहेन्द्रियप्राणधियामिति । संसारधर्मैः संसारस्वभावैर्देहादीनां जन्मादिकृच्छ्रैरविमुह्यमानस्तत्तद्वस्तुतत्तत्त्वं यथावज्जानन् यो वर्तते स भागवतप्रधान इत्यन्वयः। तत्र हेतुमाह - **स्मृत्येति**। देहादीनामचेतनत्वेन जन्मादिकृच्छ्रानुभवोऽनुपपन्न इत्यतस्तात्पर्यार्थोऽन्यो युक्तो वक्तव्यः । स क इत्याशङ्क्य 'देहेन्द्रियप्राणधियां त्रिधैव त्वभिमानिनः । तत्रोत्तमा देवतास्ता सर्वदोषविवर्जिताः । गुणैः सर्वैः सुसम्पन्ना विरिञ्चादुत्तरोत्तरम् । मध्यमा गुणदोषेता अधमा असुरा मताः । ते सर्वे दोषसंयुक्ता आचित्तादुत्तरोत्तरम् । तेभ्योऽन्यो मानुषो जीवस्ताभ्यां देवासुरावपि । जीवाभिमानिनश्चैव त्रिविधाः सम्प्रकीर्तिताः । जीवमान्युत्तमो ब्रह्मा मध्यमः स्वयमेव तु । अधमः कलिरुद्दिष्टस्तत्र चोत्तमनीचयोः । मृतिजन्मक्षुधादुःखप्रभृत्यखिलमेव तु । नोत्तमस्य तु जीवस्य देहादेश्च कथञ्चन । जन्मादिकृतदुःखं तु देहमान्यसुरस्य च । सुप्त्याद्यप्ययजं दुःखमसुरेन्द्रियमानिनः । क्षुन्निमित्तं

**यः कामकर्मबीजानि पश्यत्येषां च सम्भवम्।**
**वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥**

**न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः।**
**सज्जितेऽस्मिन्नहम्भावो देहे वै स हरेः प्रियः ॥ ५१ ॥**

**न यस्य स्वः पर इति चित्ते स्वात्मनि वाऽभिदा।**
**सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥**

---

तु यद् दुःखं प्राणमान्यसुरस्य तत्। भयतर्षादिजं दुःखं मनोमान्यसुरस्य च। केवलं चान्तरं दुःखं बुद्धिमान्यसुरस्य तत्। नीचोऽस्मीति तु यद् दुःखमहम्मान्यसुरस्य तत्। अतीतादेः स्मृतेर्दुःखं चित्तमान्यसुरस्य च। जीवमान्यसुरस्य स्यात् सर्वं तत् समुदायतः। एवमेव सुखं देवेषूभयं मध्यमेषु च। असुराणामधर्मस्य वृध्या सुखमपीष्यते। देवानां नैव केनापि दुःखं प्रीतिस्तु धर्मतः। अधर्मोऽपि प्रीतये स्यादसुराणां तमोगतेः। देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम्। तेषां दुःखादिकं किञ्चिदसुरावेशतो भवेत्। प्राणस्य नासुरावेश आखणाश्मसमो हि सः। सम्पूर्णानुग्रहाद् विष्णोः प्राणः पूर्णगुणो मतः। असुराणां सुखाद्याश्च देवावेशादुदीरिताः। स्वतस्तु निर्गुणाः सर्वे सर्वदोषात्मका मताः। विविच्यैवं जगत् सर्वं स्वात्मानं च पृथक् स्थितम्। सर्वतश्च पृतक् सन्तं विष्णुं सर्वोत्तमोत्तमम्। जानन्ति ये भागवतास्त उक्ता उत्तमोत्तमाः इत्यनेन परिहृतेति ज्ञातव्यम् ॥ ४९ ॥

कामकर्मबीजान्यविद्याप्रकृत्यादीनि। एषां कामादीनाम् ॥ ५० ॥

जन्मकर्मभ्यां ब्राह्मणादिजन्मना गुरुकुलवासादिकर्मणा ब्राह्मणादिवर्णैब्रह्मचर्याद्याश्रमै ब्राह्मणत्वादिजातिभिः सज्जिते सङ्केतिते यः कामकर्मबीजैरुत्पन्नस्तस्मिन् देहे यस्याहम्भावो ब्राह्मणोहमित्यादिलक्षणो नास्ति स भागवतोत्तम इति ॥ ५१ ॥

इदमप्येकं लक्षणमित्याह - **न यस्येति**। यस्य भागवतस्य चित्ते प्राकृतान्तःकरणे विद्यमाने संसारे स्वात्मनि केवलात्मभावे स्वरूपावस्थाने मोक्षे वा यः स्वो जीवः परः परमात्मेति जीवपरयोरभिदा अभेदो नास्ति, अभेदज्ञानं नास्तीत्यर्थः, यश्च सर्वभूतसमः ब्रह्मादिमानुषान्तनि भूनानि यथावत् तारतम्येन पश्यति स भागवतोत्तमः। 'न कापि जीवं विष्णुत्वे संसृतौ मोक्ष एव वा। यः पश्यति सुरादींश्च यथोत्कर्षं प्रपश्यति। स सर्वभूतसमदृग् विष्णुं सर्वोत्तमं स्मरन्' इत्यतः, 'नैवं त्वयानु मन्तव्यं दृष्टो जीवो मयेति ह। सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि' इत्यतश्च, 'नैवं त्वया नु मन्तव्यं जीवात्माऽहमिति क्वचित्। सर्वैर्गुणैः सुसम्पन्नं देवं मां ज्ञातुमर्हसि' इत्यतश्च प्रमाणाद् यस्य स्वकीयपरकीयबुद्धिभेदो नास्तीत्यर्थो नोपपन्नः किन्तूक्त इति। शान्तो भगवन्निष्ठायुक्तः ॥ ५२ ॥

त्रिभुवनविभवहेतुभिर्विकुण्ठ -
स्मृतिभिरजेशसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दा -
ल्लवनिमिषार्धमपि स्म स वैष्णवाग्र्यः ॥ ५३ ॥

भगवत उरु विक्रमाङ्घ्रिशाखा -
नखमणिचन्द्रिकया निरस्ततापे ।
हृदि कथमुपसीदतां पुनः स
प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥

विसृजति हृदयं न यस्य साक्षाद्
हरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥ ५५ ॥

॥ इति द्वितीयोऽध्यायः ॥

---

विकुण्ठस्य स्मृतिर्येषां ते तथा तैः । त्रिभुवनविभवहेतुभिः कारणभूतैरजेशसुरादिभिर्ब्रह्मरुद्रपूर्वदेवादिभिर्विमृग्यादन्वेषणीयाद् भगवत्पदारविन्दाद् यो लवनिमिषार्धमपि न चलति स वैष्णवाग्र्यः स्म स्मृत इत्यन्वयः ॥ ५३ ॥

उरु विक्रमः पादन्यासविशेषो ययोस्तौ उरुविक्रमौ तावङ्घ्री तयोः शाखा अङ्गुल्यस्तासां नखमणयः नखा एव मणयस्तेषां चन्द्रिकया ज्योत्स्नया निरस्ततापे उपसीदतां सेवमानानां हृदयेऽनुपसीदतां हृदि प्रभवति (यः) स तापः कथं पुनः प्रभवतीत्यन्वयः ॥ ५४ ॥

स्खलनादिनाऽवशेनाभिहितः कथितः । प्रणयरशनया भक्तिलक्षणपाशेन धृताङ्घ्रिपद्मः बद्धपादपद्मः । यादृशो यद् ब्रूते इत्यनयोः प्रश्नयोः परिहारौ धृतोर्ध्वपुण्ड्रत्वादिकं सन्ततगुणनामसङ्कीर्तनत्वं चेति 'ये शङ्खचक्राङ्कितबाहुमूलाः' इत्यादिषु प्रसिद्धत्वादनुक्ताविति ॥ ५५ ॥

**॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां पदरत्नावल्यां एकादशस्कन्धस्य द्वितीयोऽध्यायः ॥**

## ।। अथ तृतीयोऽध्यायः ।।

**राजोवाच-**

**परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ।**
**मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ।। १ ।।**

**नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ।**
**संसारतापनिष्टप्तो मर्त्यस्तत्तापभेषजम् ।। २ ।।**

**अन्तरिक्ष उवाच -**

**एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ।**
**ससर्जोच्चावचान्यादौ स्वयमात्मप्रसिद्धये ।। ३ ।।**

**एवं सृष्ट्वा स भूतानि स्थविष्ठैः पञ्चधातुभिः ।**
**एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ।। ४ ।।**

---

परस्य पूर्णस्य मायिनां ज्ञानिनां मोहिनीं मायां सृष्ट्यादिषु प्रवर्तमानामिच्छाशक्तिं जडप्रकृतिवैभवं च ।। १ ।।

तत्र तत्र भागवते मायाविषयप्रश्नपरिहारावनेकशः कृतावित्यत्राश्रद्धेयमिदं नेति भावेनाह **नानुतृप्य इति** । हरेः कथामृतं यस्मिन् तत् तथा, तद् भेषजं संसारतापशान्तिकरमौषधम् ।। २ ।।

परिहारमवेक्ष्य प्रश्नः संगच्छत इत्यतः परिहारोपि मायाद्वैविध्यविषय एवेति भावेनोपोद्घातं रचयति **एभिरित्यादिना** । अत्रायं भावः । आदौ स्वयं परमात्मा स्वेच्छोद्बोधितया प्रकृत्या महदहंकारादिक्रमेण चतुर्विंशतितत्वानि सृष्ट्वा पुनस्तैस्समेतैः स्तुतः तान्यनुप्रविश्य संयोज्य तदुपादानत्वेन ब्रह्माण्डमुत्पाद्य अन्तः तैः सह प्रविश्य ब्रह्मादिपृथिव्यन्तानां तत्वानां रूपान्तराणि सृष्ट्वा एतैर्महाभूतैः पञ्चभिरुच्चावचानि शरीराणि ससर्ज । त्रिविधान् जीवान् त्रिविधैः शरीरैः संयोजयामास । किं प्रयोजनमुद्दिश्येत्यत उक्तम् - **आत्मप्रसिद्धय इति** । आत्मनो हरेः प्रसिद्धिः ख्यातिः प्रतीतिः, ज्ञानमिति यावत् , तदर्थम् । परमात्मतत्वज्ञानायेत्यर्थः ।। ३ ।।

जीवकलया ब्रह्मैव भोगायतने शरीरे स्थित्वा कर्मफलं भुंक्त इत्यद्वैतमतं प्रत्याह **एवं सृष्ट्वेति** । स परमात्मा उक्तविधया स्थविष्ठैः पुनः सृष्ट्या स्थूलभावं प्राप्तैः पञ्चधातुभिः महाभूतैः तत्तददृष्टानुसारेण

**गुणैर्गुणान् स भुञ्जान आत्मप्रद्योतितैः प्रभुः ।**
**मन्यमान इदं सृष्टमात्मानमिह सज्जते ।। ५ ।।**

**कर्माणि कर्मभिः कुर्वन् सनिमित्तानि देहभृत् ।**
**तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ।। ६ ।।**

**इत्थं कर्मगतीर्गच्छन् बह्वभद्रावहः पुमान् ।**
**आभूतसंप्लवात् स्वर्गप्रलयावश्नुतेऽवशः ।। ७ ।।**

---

जीवेन सह तान्यनुप्रविश्य आत्मनं स्वमेकधा मनोनियन्तृरूपेण दशधा दशेन्द्रियविनियामकरूपेण विभजन् विभक्तं कुर्वन् गुणान् विषयसारानन्दानेव जुषत इत्यन्वयः । विभजन्नित्यनेन जीवात्मनामल्पशक्तित्वेन स्वात्मनो भिन्नत्वमवशत्वेन कर्मफलभोक्तृत्वं स्वस्य पूर्णशक्तित्वेन स्वातन्त्र्यं च ध्वनयति ।। ४ ।।

नन्विन्द्रियाणामशुभेषु विषयेष्वपि प्रवृत्तेः तत्स्थस्याशुभभोगोपि प्रसज्येत, अतः कथं गुणानेव जुषत इत्यत्राह **गुणैरिति** । यो गुणानेव जुषत इति प्रस्तुतः स परमात्मा आत्मना प्रद्योतितैः विषयाभिमुखत्वेन प्रेरितैः गुणैः इन्द्रियैः गुणान् भुञ्जानो वर्तत इत्यन्वयः । लडर्थवाचिशानचा शुभमेव भुंक्ते कदापि नाशुभमिति ध्वनयति । नाशुभं स हरिः पिबेदिति स्मृतेः । एकस्मिन्नेव भोगायतने स्थितयोरनयोरेकस्य हरेर्गुणैकभोक्तृत्वे को हेतुरित्यत्राह **प्रभुरिति** । समर्थेऽधिपतौ प्रभुरिति वचनात् सामर्थ्यमाधिपत्यं च निमित्तमित्यर्थः। स्वतन्त्रास्वन्तत्रयोःप्रमितभेदानंगीकारे बाधकमाह **मन्यमान इति** । इदमित्यव्ययम् , आत्मा वा इदमिति श्रुतेः । सर्वाधिकत्वेन वर्तमानं तं परमात्मानं इदं सृष्टं देहयोगेनोत्पन्नं जीवाख्यं वस्त्विति मन्यमानो जीव इह संसारे सज्जते, मृतः परत्र तमसि सज्जन इत्यन्वयः । ''शरीरे दोषहानेन गुणभोक्तारमीश्वरम् । शरीरस्थतया जीवं मन्यमानः पतत्यधः । तत्सृष्टा हि सदा जीवा देहादेर्जनिमत्त्वतः । नित्यानन्दैकदेहोऽसौ विष्णुस्तत् कैकताऽनयोः'' इत्यनेन प्रमितोऽयमर्थः ।। ५ ।।

एतदेव विवृणोति **कर्माणीति** । सनिमित्तानि पूर्वकर्मप्रयत्नसंस्काराख्यबीजसहितानि कर्मभिर्व्यापारैः कर्मेन्द्रियैर्वा कुर्वन् सुखेतरं दुःखं प्रति भ्रमतीत्यन्वयः ।। ६ ।।

जीवपरयोरभेददर्शिनः पुंसः कदा नु तमः प्रवेश इत्यतः प्रलयपर्यन्तावेव देहयोगवियोगलक्षणजन्म-

**धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम्।**
**अनादिनिधनः कालो ह्यव्यक्ताय विकर्षति ॥ ८ ॥**

**शतवर्षमनावृष्टिर्भविष्यत्युल्बणा भुवि।**
**तत्कालोपचितोष्णार्को लोकांस्त्रीन् प्रतपिष्यति ॥ ९ ॥**

**पातालतलमारभ्य सङ्कर्षणमुखानलः।**
**दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः ॥ १० ॥**

**संवर्तको मेघगणो वर्षति स्म शतं समाः।**
**धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥ ११ ॥**

**ततो विराजमुत्सृज्य वैराजः पुरुषो नृप।**
**अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानिलः ॥ १२ ॥**

---

मृत्यू ततः परं तमः प्रवेश इत्याशयेनाह **इत्थमिति**। कर्मगतीः कर्मनिमित्तयोनिलक्षणफलानि। बहूनि अभद्राणि पापानि आवहत्यात्मन्यधत्त इति बह्वभद्रावहः। आभूतसंप्लवात् जगत्प्रलयपर्यन्तं सर्गप्रलयौ जन्ममरणे। योगिवत् स्वच्छन्दतया अस्य स्यातां किमित्यत उक्तम् **अवश इति**। ''आभूतसंप्लवाज्जन्म जीवेशत्वं विजानतः। ततः पतत्यधो यस्मादुत्थानं नैव कुत्रचित्'' इति वचनादवशः पश्चादन्धेतमसि पततीत्यर्थः ॥ ७ ॥

एवमीश्वरमायानियतादव्यक्तात् सृष्टिं समासतोऽभिधाय प्रलयं संक्षिप्याह **धातूपप्लव इति**। धातूनां पृथिव्यादिपञ्चभूतानामुपप्लवे प्रलये द्रव्यगुणात्मकं पञ्चभूतशब्दादिगुणमयं व्यक्तं ब्रह्माण्डम् अनादिनिधनः कालो विष्णुः अव्यक्ताय मूलप्रकृतये विकर्षति प्रकृत्यवशेषं कर्तुमिच्छतीत्यर्थः। ''कालख्यः कलनाद् विष्णुर्व्यक्तमव्यक्तगं नयन् '' इति वचनाद् विष्णुरेव कालशब्देनोक्तः। विकर्षतीत्यनेन कालशब्दोपि निरुक्तः ॥ ८ ॥

संक्षिप्योक्तं प्रलयमादितो वक्ति **शतवर्षमिति**। तत्कालेन तेन प्रलयकालेन उपचितः संवर्धितः उष्णो गुणो यस्य स तथा स चासावर्कश्च तत्कालोपचितोष्णार्कः ॥ ९-१० ॥ विराट् ब्रह्माण्डम् ॥ ११ ॥

**वारिणा हृतगन्धा भूः सलिलत्वाय कल्पते ।**
**सलिलं तद् हृतरसं ज्योतिष्ट्वायोपकल्पते ॥ १३ ॥**

**हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ।**
**हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥ १४ ॥**

**कालात्मना हृतगुणं नभ आत्मनि लीयते ।**
**इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ १५ ॥**

**प्रविशन्ति ह्यहंकारं स्वगुणैरहमात्मनि ॥ १६ ॥**

---

सलिले विलीनं ब्रह्माण्डमुत्सृज्य वैराजो ब्रह्माण्डान्तर्वर्ती पुरुषो ब्रह्मा अव्यक्तं परमात्मानं विशते । अव्यक्तशब्दार्थं स्पष्टीकुर्वन् तं विशिनष्टि **सूक्ष्ममिति** । यद्वा निरिन्धानोऽनलः सूक्ष्मं व्याप्तमग्निमिवेति ॥ १२ ॥

संक्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणादिति वाक्यर्थं सफलं कुर्वन्नुक्तार्थं प्रपञ्चयति **वारिणेति** । तेन ज्योतिषा हृतरसं पीतरसम् । तमसा तमोगुणानुस्यूतेन वायुना । अवकाशेन आकाशेन ॥ १३-१४ ॥

कालात्मना संहारमूर्तिना हरिणा हृतशब्दाख्यगुणं नभ आत्मनि परमात्मनि । पुनरपि विस्तारयति इन्द्रियाणीति । अत्रेदं तात्पर्यम् । नभस्तामसाहंकारमाविशति । तैजसानीन्द्रियाणि मनो बुद्धिश्च वैकारिकैरिन्द्रियाभिमानिदेवैः सह वैकारिकं तैजसात्मकं चाहङ्कारं विशति[१] । एवं त्रिविधोऽहमहङ्कारः स्वगुणैः स्वकार्यैः सह आत्मनि महत्तत्वे लीयते । तन्महत्तत्वमात्मनि व्याप्ते परमात्मनि प्रविष्टं भवति । वैराजः पुरुषः पृथिव्यादीनि स्वकृतकार्याणि व्युत्क्रमेण स्वस्वकारणेष्वबादिषु विलाप्य स्वयं च तत्कारणगतत्वेन तत्तत्कार्यप्रवर्तकः तत्तत्कारणगतरूपेणैकीभूय मूलरूपी सन्नाकाशवदति-सूक्ष्ममव्यक्तं प्रविशतीति ॥ १५-१६॥

---

१. बुद्धिश्च तैजसाहंकारकार्येति सुधीन्द्रतीर्थाः । अत इन्द्रियाणि बुद्धिश्च तैजसाहकारं विशति, इन्द्रियाभिमनिदेवैः सह मनो वैकारिकमहंकारं विशतीति विवेकः ।

एषा माया भगवतः सर्गस्थित्यन्तकारिणी ।
त्रिवर्णा वर्णिताऽस्माभिः किं भूयः श्रोतुमिच्छसि ॥ १७ ॥

राजोवाच -

यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ।
तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥ १८ ॥

प्रबुद्ध उवाच -

कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १९ ॥

नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ २० ॥

---

उपसंहरति **एषेति** । भगवत एषा माया प्रकृष्टेच्छा तदधीना प्रकृतिश्चास्माभिर्वर्णिता । निमित्तोपादानत्वविवक्षयेति शेषः । कीदृशी । त्रिवर्णा त्रयाणां गुणानां वर्णो वरणं यया हरेर्मत्या सृष्ट्यादौ सा तथा, सत्वादित्रिगुणानां वर्णो लेपः स्वरूपत्वेन सम्बन्धो यस्याः सा तथा प्रकृतिः । तदुक्तम् - ''त्रिवर्णा वरणादुक्ता त्रिगुणानां हरेर्मतिः । गुणात्मकत्वात् प्रकृतिस्त्रिवर्णेति प्रकीर्त्यते । तत्र तु प्रकृतिस्तार्या तारका तु हरेर्मतिः । उभयं विष्णुमायोक्तं ज्ञातव्यमुभयं तथा'' इति । बहूनां प्रस्तुतत्वादेषेत्यत्र किं परामृश्यत इति सन्देहपरिहारः कथमिति चेन्न । ''बहूनां सह निर्देश एकयाऽभिधयैव तु । तयैवाभिधया तेषां परामृश्यैकमुच्यते'' इति तदुपपत्तेः ॥ १७ ॥

श्रुतमायाविभवो राजा मायाशब्दवाच्यबन्धकशक्तिजयोपायं पृच्छति **यथेति** । ईश्वरस्येयमैश्वरी तां मायां बन्धकशक्तिमञ्जः तरसा तरन्ति एनं जीवं न संसारयामीत्यनुग्रहोन्मुखीं कारयन्ति अन्यस्य नितरां लङ्घनमेव कुर्वन्तीत्यर्थः ॥ १८ ॥

मायासन्तरणेच्छोः प्रथमसाधनं विरक्तिरिति ज्ञापयन् प्रबुद्धः प्रश्नं प्ररिहर्तुमुपक्रमते **कर्माणीति** । पाकविपर्यासो नाम कर्मफलवैपरीत्यम् । दुःखानिवृत्तिं सुखानवाप्तिं च । मिथुनीचारिणां स्त्रीपुंसाम् ॥ १९ ॥ वित्तादिसमृद्ध्या सुखोन्नतिः स्यादित्यत्राह **नित्येति** ॥ २० ॥

**एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।**
**अतुल्यातिशयध्वंसाद् यथा मण्डलवर्तिनाम् ॥ २१ ॥**

**तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।**
**शाब्दे परे च निष्णातं ब्रह्मण्युपशमायनम् ॥ २२ ॥**

**तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः ।**
**अमाययाऽनुवृत्त्या च तुष्येदात्माऽऽत्मदो हरिः ॥ २३ ॥**

**सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।**
**दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २४ ॥**

---

अनित्यफलत्वात् स्वर्गादयो हेया इत्याह **एवमिति** । अतुल्यातिशयैर्देवैः ध्वंसादधःपातनात् । मण्डलवर्तिना युद्धरङ्गे वर्तमानानां यथा प्रध्वंसः ॥ २१ ॥ इहामुत्र विरक्तेन पुरुषेन किं कार्यम् । अत्राह **तस्मादिति** ॥ २२ ॥

गुरुकुले किमनुष्ठेयमत्राह **तत्रेति** । गुरुश्च आत्मा च दैवतं च यस्य स तथा । आत्मा विष्णुः । मिथुनीचारिणामित्यनेनामिथुनानामेव श्रेयो मोक्षो न मिथुनानामित्याक्षेपः "देवाः सजाया मुच्यन्ते मानुषा उभयात्मकाः । विजाया एव योगेशास्तेषां या यैव योग्यता । तथातथैव मुच्यन्ते नान्यथा तु कथञ्चन" इति वचनेन परिहृत इति । हरिगुरुप्रसादसाधनमाह **अमाययेति** ॥ २३ ॥

भागवतान् धर्मानाह **सर्वत इति**। शिक्षेदित्यनुवर्तते। साधव एकविधा उत बहुविधा येषु सङ्गःकर्तव्य इति विधीयत इत्यस्यानेकविधा इत्युत्तरम् । तर्हि कतिविधा इत्यस्य त्रिविधा इति । तत्रापि विशेषो बहुलः । स एष ग्रन्थान्तरे विस्तृतः । "सन्तस्तु त्रिविधाः प्रोक्ता उत्तमा मध्यमाधमाः । उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः । अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः । तत्राधमेषु येषां संगो विघ्नाय वै भवेत् । तेषामुत्तमसंगस्य तेषां संगं परित्यजेत् । आदौ तु तेषामपि च संग उत्तमसंगतेः । साधनत्वान्न तु त्याज्यो यदि त्यक्तुं न शक्यते । तदा तेपि तथा नेया यथा विघ्नो नवै भवेत् । तदुच्चसंगतेः क्वापि तदा दोषो न जायते । प्रयोजनाय तेषां तु सङ्गः सर्वात्मनेष्यते । सर्वथा चैव देवेषु सङ्गो मुनिगणेषु च । भाव्यो हि तं विना नैव पुरुषार्थः क्वचिद् भवेत् । विशेषतः स्वोत्तममेषु विना सङ्गं न मुच्यते । स्वनीचेषु तु देवेषु विना सङ्गं न पूर्यते । तस्माद् सत्सूत्तमेष्वेषु सङ्गः कार्यो

**शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।**
**ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २५ ॥**

**सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतनम् ।**
**विविक्तचीरवसनं सन्तोषं येन केन चित् ॥ २६ ॥**

**श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।**
**मनोवाक्कायदण्डं सत्यं शमदमावपि ॥ २७ ॥**

---

विशेषतः । अनाद्यनन्तकालेषु नच हाप्यः कथञ्चन । सतां सदुत्तमेशेशे किमु विष्णौ परायणे '' इति । किञ्च ज्ञानोत्पात्तावन्तरङ्गं सत्सेवैव यामन्तरेण विवक्षितार्थज्ञानसिद्धिर्न स्यात् । अतो दुर्बलेनापि सा कार्या । तदुक्तम् - ''बह्वपेक्षो हि जिज्ञासुरतो देहादिवृत्तये । किञ्चित्सत्स्वपि सङ्गी स्यादशक्ये सति वर्तने । कृतकृत्यस्त्यजेत् सङ्गं सदा गुरुसुरादिषु । सङ्गी स्यान्नहि तत्सङ्गं विना तु सुखभाग् भवेत् । तस्मादनाद्यनन्तैव भक्तिर्गुरुसुरादिषु । अन्यत्र कृत्यापेक्षा स्यादिति सङ्ग विनिर्णयः'' इति ॥ २४ ॥

सर्वत्र देशकालादिष्वात्मनः स्वामिन ईश्वरस्यान्वीक्षां माहात्म्यानुकूलनिरीक्षणम् । कैवल्यमेकान्तित्वं प्रकृतिप्राकृतादिमिश्रराहित्यं च । चीरवसनं वल्कलम् । सन्तोषमलंबुद्धिम् ॥ २५ - २६ ॥

भागवतशास्त्रे वेदादितन्त्रे । तदुक्तम् - ''श्रद्धां भागवते तन्त्रे वेदे भारतपञ्चमे । विष्णोरव्ययवधानेन वक्तृत्वात् सर्वतो भवेत्'' इति । अन्यत्र ज्योतिःशास्त्रादिषु[१] अनिन्दां निन्दाराहित्यम् । यतीनामिति शेषः । तदुक्तम् - ''कलाविद्यास्वनिन्दा च व्यवधानेन केशवे । प्रवेशाद् यतिभिः कार्या अन्यथा निरयं व्रजेत्'' इत्यादिना । श्रद् दधातीति श्रद्धा सर्वसाधारणचेतनगुणः[२] । श्रद्धा आस्तिक्यबुद्धिः, सा द्विविधा, अत्रोक्तमस्तीत्येका ममात्र प्रयोजनमस्तीत्यन्या । तत्र प्रथमा यतेरपि कलासु कार्या, न द्वितीया । प्रयोजनाभावात् । उभयमपि पञ्चरात्रादिशास्त्रेषु कार्यम् । तद्विरोधिषु शास्त्रेषु सर्वैरविशेषेण

---

१. कलाविद्याः संगीतादय इत्यन्ये व्याख्यातारः । ज्योतिःशास्त्रं तु वेदाङ्गम् । तत्राप्यनिन्देति विजयध्वज-तीर्थानामभिप्रायो भवेद्वा ? व्यवधानेन केशवप्रवेशात् ।

२. अत्र किञ्चिद् गलितं स्यात् । पूर्वपक्षवाक्यमिव भाति ।

श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २८ ॥

इष्टं दत्तं तपो जप्तं पूर्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् परस्मै सन्निवेदयेत् ॥ २९ ॥

एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ ३० ॥

परस्परानुकथनं पावनं भगवद्यशः।
मिथो रतिर्मिथस्तुष्टि र्निवृत्तिर्मिथ आत्मनः ॥ ३१ ॥

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्ताः सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३२ ॥

---

सदा निन्दा कार्या । तदभावे तम एव परायणम् । अतः सुरा एव तन्निन्दनं कुर्वन्ति । सदा विज्ञाततात्पर्यार्थत्वात् । तदुक्तं - ''श्रद्धा त्वास्तिक्यबुद्धिः स्यात्'' इत्यादि ''प्रतिपाद्यं न चापरम्'' इत्यन्तेन । किञ्च भगवच्छास्त्रविरोधिशास्त्राभ्यासेन अन्धंतमोऽपि श्रूयते अन्धन्तमः प्रविशन्तीत्यादिश्रुतौ । न केवलं यतेः कलाभ्यः प्रयोजनाभावः किञ्चाल्पज्ञस्य गृहिणोपीतीममर्थं हिशब्देन ध्वनयति गृहिणोप्यल्पमेधस्येत्यादिवाक्यात् ॥ २७ ॥

हरेर्जन्मादीनां श्रवणम् । तदर्थे श्रवणार्थे अखिलचेष्टितमखिलव्यपारः । तदर्थे भक्तिजननार्थे हरेरखिलचेष्टितमिति वा ॥ २८ ॥ यदात्मनः प्रियं यद् देहादिकं च तत्सर्वं परस्मै परमात्मने निवेदयेत् ॥ २९॥

कृष्णात्मैव नाथो येषां ते तथा । मानुषेष्वपि सौहृदं शिक्षेत् किमु देवादिषु । उभयत्र भगवति भागवतेषु च । महत्सु ब्रह्मादिदेवेषु च परिचर्याम् । नचैतावता पूर्यते । साधुषु नृषु स्वोत्तमेष्वित्यर्थः ॥ ३०॥

भगवद्यश उद्दिश्य परस्परानुकथनम् । रतिः सुखम् । तदाधिक्यं तुष्टिः । अन्यत्र निवृत्तिश्च ॥ ३१ ॥ रत्यादीनां परिपाकमाह **स्मरन्त** इति । उत्पुलकामुद्गतपुलकाम् ॥ ३२ ॥

**क्वचिद् रुदन्त्यच्युतचिन्तया क्वचि-**
**द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।**
**नृत्यन्ति गायन्त्यनुशीलयन्त्यजं**
**भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३३ ॥**

**इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया ।**
**नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ३४ ॥**

**राजोवाच -**

**नारायणाभिधानस्य ब्रह्मणः परमात्मनः ।**
**निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥ ३५ ॥**

**पिप्पलायन उवाच -**

**स्थित्युद्भवप्रलयहेतुरहेतुरस्य**
**यः स्वप्नजागरसुषुप्तिषु सन् बहिश्च ।**
**देहेन्द्रियासुहृदयानि चरन्ति येन**
**सञ्जीवितानि तदवैहि परं नरेन्द्र ॥ ३६ ॥**

---

भागवतानां प्रवृत्तिप्रकारमाह **क्वचिदिति** । परं भगवन्तं मनसा शरणमेत्य निर्वृताः ॥ ३३ ॥ उपसंहरति **इतीति** । तदुत्थया भागतवतधर्माभ्यासोद्रेकोत्थया ॥ ३४ ॥

ब्रह्मवित्तमा हि यस्मात् तस्माद् यूयं ब्रह्मणो निष्ठां ब्रह्मादिजीवराशेरुत्कर्षं वक्तुमर्हथ । निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते व्रतयाश्चर्योरिति यादवः ॥ ३५॥

तदुत्कर्षोपि जन्मादिकारणत्वेन स्वप्नाद्यवस्थाप्रवर्तकत्वेन तदनभिभूतशक्तित्वेन मन-आदीन्द्रियाभिमानिदेवाज्ञेयत्वेन जननादिराहित्येन च ज्ञातुं शक्यत इत्याशयेन प्रश्नं परिहरति **स्थितीत्यादिना** । योऽस्य जगतः स्थित्यादिहेतुः स्वस्य हेतुरन्यो नास्तीत्यहेतुः,स्वप्नादिषु सन् निर्दोषत्वेन स्थितः,यश्च बहिःप्रलये मुक्तौ च वर्तमानः,येन देहेन्द्रियादीनि चरन्ति वर्तन्ते, हृदयं मनः, सञ्जीवितानि यदधीनानि, हे नरेन्द्र तत् तत्त्वं परं सर्वस्मादुत्कृष्टमवैहीत्यन्वयः ॥ ३६ ॥

**नैनं मनो विशति वागुत चक्षुरात्मा**
**प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः ।**
**शब्दोऽप्यबोधकनिषेधतयात्ममूल-**
**मर्थोक्तमाह यदृते न निषेध्यसिध्दिः ॥ ३७ ॥**

---

इतोऽपि हरिःसर्वोत्कृष्टः यतोऽस्य प्रसादं विना रुद्रादिदेवैर्न ज्ञेय इत्याह **नैनमिति** । विशतिरत्र ज्ञानार्थः । मनआदिशब्देन तदभिमानी लक्ष्यते। अचेतनत्वेन ज्ञानक्रियाऽसंभवात् ।तथाचायमर्थः।मनो रुद्रदिरेनं नारायणं न विशति न जानाति ।वागुत सरस्वत्यादिकमपि न विशतीत्यनुवर्तते । चक्षुः सूर्यः । आत्मा ब्रह्मा वायुश्च । अन्ये प्राणाद्यभिमानिनश्च न जानन्तीत्यर्थः । अपिशब्दात् तत्प्रसादेनैकदेशं जानन्तीति योज्यम् । तत्रोदाहरणमाह यथेति । यथा स्वाः अर्चिषः प्रधानाग्नेः पुत्रा अनलं प्रधानाग्निं तदनुग्रहमन्तरेण न विशन्ति । ननु नित्यावियोगित्वेनानन्तवेदाद्यात्मत्वाच्च श्रीर्ज्ञातुमर्हतीत्यत आह **शब्द इति** । निर्दोषः शब्द आगम इति निर्दोषशब्दराश्यभिमानिनी लक्ष्मीः बोधकादन्यदबोधकं परमेश्वरादितरल्लौकिकानन्दज्ञानादिकं यत् तस्य निषेधतया आनन्दो हरिर्नेदृशानन्दः, ज्ञानरूपो नेदृशज्ञानरूप इत्यादिनिषेधरूपेण आत्ममूलं स्वकारणम् अर्थोक्तम् अथर्तः परिशेषतः सिद्धत्वेनोक्तमाह । अर्थशब्देनात्र परिशेषप्रमाणमुच्यते । न लक्षणावृत्तिः । कथम् । अत्राह **यदृत इति**[१] । यत् सर्वविलक्षणानन्दादिकं विना निषेध्यस्यैतन्न भवतीति निषधवचनार्थस्य लौकिकानन्दादेः सिद्धिर्न स्यात् । प्रत्यक्षादिप्रमाणसिद्धत्वात् साऽस्ति । अतः परिशेषप्रमाणसिद्ध्या प्रमितमेवेत्यर्थः । प्रतीतार्थं परित्यज्याप्रतीतार्थकल्पनायां किं प्रमाणमितीयं शङ्का ''बह्माद्या यं न जानन्ति करणाद्यभिमानिनः । जानन्त्यनुग्रहाच्चास्य प्रधानाग्निं यथाऽचिर्षः । अग्निपुत्रा नमस्तस्मै यमाह श्रीश्च न स्फटम् । वेदरूपा परं देवं वैलक्षण्यात् समस्तशः । आनन्दो नेदृशान्द इत्युक्ते लोकतः परम् । प्रतिभाति न चाभाति यथावद् दर्शनं विना '' इत्यनेन परिहर्तव्येति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति च ॥ ३७ ॥

---

१. यतो भगवतो लोकविक्षणानन्दादिकं विना निषेध्यस्य आनन्दवतीदृशानन्दो न भवतीति निषेधवचनार्थस्य सिद्धिरेव न भवति । आनन्दवति ईदृशानन्दाभोवोऽलौकिकानन्दं विनाऽनुपपद्यमानस्तं गमयतीत्यर्थत एव सिद्ध्यतीति श्रीनिवासतीर्थाः ।

**सत्त्वं रजस्तम इति त्रिवृदेकमादौ**
**सूत्रं महानहमिति प्रवदन्ति जीवम्।**
**ज्ञानक्रियार्थफलरूपतयोरुशक्ति**
**ब्रह्मैव भाति सदसच्च तयोः परं यत्॥ ३८॥**

---

मुमुक्षुणा विद्याविद्ये ज्ञातव्ये। ''विद्यां चाविद्यां च यस्तद् वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'' इति श्रुतेः। तत्र विद्यां निरूप्याविद्यां निरूपयति **सत्वमिति**। जीवं हरे रूपमिति प्रवदन्त्यज्ञा इति शेषः। केचिदादौ स्थितमेकं त्रिवृत् त्रिगुणात्मकं प्रधानमिति संगिरन्ते। प्रधानादिदमुत्पन्नमिति श्रुतेः। सत्वं रजस्तम इति केचित्। सूत्रं वायुर्महान् ब्रह्मा अहं रुद्र इत्येके हरे रूपमिति वदन्ति। किं बहुना ? उरुशक्ति ब्रह्मैव ज्ञानक्रियार्थफलरूपतया, ज्ञानक्रियाशब्देन ज्ञानकर्मेन्द्रियाणि अर्थशब्देन शब्दादिविषयाः फलशब्देन सुखदुःखे चोच्यन्ते, एषां रूपत्वेन भातीत्यपरे। सदसत्कार्यकारणरूपत्वेनावभाति च। ननु सच्च त्यच्चाभवदिति श्रुतेः कार्यकारणादिरूपदर्शनस्याविद्यात्वं कथम्। अत्राह **तयोरिति**। तयोः कार्यकारणयोः परं विलक्षणं भिन्नं ब्रह्मेति यद् यस्मात् तस्मात् तदात्मना दर्शनमविद्येत्यर्थः। ''त्रिगुणात्मकं प्रधानं च रजः सत्वं तमस्तथा। प्राणो महानहंकारो जीवास्तदभिमानिनः। ज्ञानात्मकानीन्द्रियाणि तथा कर्मात्मकानि च। शब्दाद्यर्थाः सुखं दुःखमिति प्रोक्तं द्विधा फलम्। एतत् सर्वं हरेरूपमित्याहुर्ज्ञानदुर्बलाः। स एव बहुशक्तित्वाद् भाति चैषां तथातथा। एके कारणकार्याख्यं समस्तं हरिमेव तु। केचित् पश्यन्ति च व्यस्तं केचिदाहुरपण्डिताः। एवं कारणकार्येभ्यः परमानन्दरूपिणम्। अज्ञानाद् बहुधा प्राहुरेकं सन्तं सुदुर्जनाः। रूप्यत्वात् तद्वशत्वाच्च तद्रूपं चैतदीर्यते। न तु तस्य स्वरूपत्वान्निर्दोषानन्दरूपिणः। कथं जडाजडैक्यं स्यात् कुतः पूर्णाल्पमोदयोः। पूर्णाल्पज्ञानयोश्चैव पूर्णशक्त्यल्पशक्तयोः। निर्दुःखदुखान्वितयोः स्वतन्त्रपरतन्त्रयोः। अतः सर्वगुणैर्युक्तं सर्वदोषविवर्जितम्। अन्याभेदेन विज्ञाय तम एव प्रपद्यते। निष्कृष्टं सर्वतो विष्णुं सर्वतश्च विलक्षणम्। ज्ञात्वा पूर्णगुणं यान्ति मुक्तिं नास्त्यत्र संशयः'' इति प्रमाणसिद्धत्वादुक्त एवार्थो नतु सदनुविद्धत्वात् सर्वस्य तद्रूपत्वमिति ॥३८॥

किञ्च कार्याद्यभिन्नत्वे तद्वज्जन्मादिमत्वं प्रसज्यते, न च तत्तथा, तस्माद् भिन्नमेवेति युक्तिमाह - **नासाविति**। कालत्रयसम्बन्धित्वान्नौपचारिकोऽयं निषेधः। तथा जन्मादिमत्पदार्थत्वेन तद्धर्मत्वं नौपचारिकं ब्रह्मण इत्यत्राह **सर्वत्रेति**। सर्वेषु जन्मादिमत्सु पदार्थेषु शश्वदेकविधं न विकारि अत

नासौ जजान न जनिष्यति नैधतेऽसौ
न क्षीयते स च न विध्यति चारिणा हि।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत्॥ ३९॥

अण्डेषु पेशिषु तरुष्ववनिस्थितेषु
प्राणेन जीव उपधावति तत्र तत्र।
छन्ने मतीन्द्रियगुणेऽहमि च प्रसुप्ते
कूटस्थ आस यमृते तदनुस्मृतीर्न॥ ४०॥

---

एवानपायि विनाशरहितम्। तत्र हेतुगर्भविशेषणमुपलब्धिमात्रमिति। प्रकृत्यादिमिश्ररहित-ज्ञानात्मकत्वादित्यर्थः। अदृष्टत्वादसत्कल्पमिदमत्राह **इन्द्रियेति**। सद् ब्रह्म इन्द्रियेषु दृश्यमानदर्शनादिबलेन विकल्पितं विविधं कल्पितं दर्शनशक्तिदं श्रवणशक्तिदं ज्ञानशक्तिदमिति। कथमिव। यथेन्द्रियगतः प्राणः इन्द्रियशक्त्या दर्शनादिशक्तिप्रदत्वेन विकल्पितः (तथा) इति। तदुक्तम् - ''यथेन्द्रियगतः प्राणस्तेषां शक्त्या विकल्प्यते। दृष्टिदः श्रुतिदश्चेति मतिदो ज्ञानदस्तथा। इत्यादिभेदतो वाच्य एक एव महाबलः। दृष्ट्यादिशक्तिस्तस्यैव यतो नान्यस्य कस्यचित्। एवं सद्रूपकं ब्रह्म तत्तच्छक्त्या विकल्प्यते। एकमेव महाशक्ति प्राणस्यापि बलप्रदम्'' इति। जीव प्राणधारण इति धातोः हरेर्जीवशब्दवाच्यत्वं प्राणस्यापि शक्तिप्रदत्वं च युज्यते। ''अहं हि जीवसंज्ञो मयि जीवः सनातनः। मैवं त्वयानुमन्तव्यं दृष्टो जीवो मयेति ह'', ''अहं श्रेयो विधास्यामि यथाधीकारमीश्वरः'' इति प्रमाणात्। दह्यमानगृहान्तरस्थितयोगिवद् ब्रह्मणोपि तत्तत्पदार्थस्थत्वेपि तत्तद्दोषलेपसम्बन्धो नास्तीति युक्तम्॥ ३९॥

नानायोनिषु वर्तमानस्य जीवस्य हेहाद्देहान्तरप्राप्तौ सुप्तौ चास्वातन्त्र्यप्रतीतेरस्यैक्यानुपपत्त्या प्राणस्य क्षीरनीरवत् सहावस्थानेपि परमात्माधीनत्वाच्च हरेः सर्वोत्कृष्टत्वमप्रतिहतमिति भावेनाह **अण्डेष्विति**। जीवस्य तत्र तत्र तेषुतेषु अण्डेषु पक्ष्यादिकोशेषु, तज्जन्येष्वित्युपलक्ष्यते। पेशो जरायुः तद्वत्सु पेशिषु जरायुजेष्वित्यर्थः। पेशो जरायुरुद्दिष्टः सुवर्णं पेश उच्यते। मृदुपिण्डश्च पेशः स्यात् क्वचिद् भद्रमपीष्यते'' इत्यभिधानम्। तरुषु उद्भिज्जेषु। अवनिस्थितेषु स्वेदजेषु भूस्वदेन जातमत्कुणादिशरीरेषु प्रवेक्ष्यन् पूर्वं देहं हित्वा प्राणं प्रविश्य परमात्मानं प्रविष्टेन प्राणेन परमात्मना

यर्ह्यब्जनाभचरणेषणयोरुभक्त्या
चेतो मलानि विधमेद् गुणकर्मजानि।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं
साक्षाद् यथाऽमलदृशौ सवितृप्रकाशः ॥ ४१ ॥

---

सहोपधावति गच्छति प्रविशति। “ देहाद् दहान्तरगतौ प्रविशेत् प्राणमेव तु। जीवः प्राणः परात्मानमेवं सुप्तावपि स्फुटम्। तदन्या देवताः सर्वाः प्राणस्यैव वशे स्थिताः। ईषच्च सुप्तवद् यान्ति नैव मानुषजीववत्। स्वर्गस्थानां नतु स्वापः प्रायो देहेपि नाज्ञाता। मृतिसुप्तिप्रबोधादेर्नियन्ता हरिरेकराट्। तमृते नैव चावस्था नावस्थावान् न च स्मृतिः। ततस्तु देवदेवेशः प्राणः प्राणेश्वरो हरिः। न हरेरीशिता त्वन्यः स हि सर्वाधिको मतः” इति (वचनम्) उक्तार्थे मानम्। मतीन्द्रियगुणे बुद्धीन्द्रियाणां गुणे शब्दादिविषयवृत्तिलक्षणव्यापारे छन्ने संवृते, मतीन्द्रियगुणे मतीन्द्रियदेवा गुणा उपसर्जनीभूता यस्य तस्मिन् प्राणे च्छन्ने भगवन्तं प्रविष्टे सति, प्राणेन सह तत्रतत्र अण्डादिशरीरेषु उपधावति। मतीन्द्रियगणे इति पाठे मत्यादिदेवसमुदाये प्राणस्य गुणभूते प्रसुप्ते ईषत्सुप्ते सति अहमि च जीव च प्रसुप्ते सति, सुप्तावप्रकाशायामिति यावत्[१], जीवः प्राणेन सह भगवन्तमुपधावति[२]। अहमि च अहंकारे च प्रसुप्ते सर्वेन्द्रियप्रवृत्त्युपरमे देहाभिमानाभावलक्षणायां सुप्तौ प्राणं प्रविश्य च्छन्नः प्राणेन कूटस्थे निर्विकारे हृदयस्थे परमात्मन्यास। परमात्मानं विशिनष्टि **यमृत इति**। यं परमात्मानमृते तदनुस्मृतिः सुप्त्यनुस्मृतिरेव न स्यात्। एतावन्तं कालं सुखमस्वाप्समिति सुखपरामर्शो न स्यादित्यर्थः। तदा परमात्माकृष्टशक्तित्वेनाभिमानिदेवानां ज्ञानजनकशक्त्यभावो न दोषाय। तदन्या देवताः सर्वा इत्युक्तत्वात् ॥ ४० ॥

इदानीं सर्वोत्कृष्टत्वेन सर्वस्माद् भिन्नस्य सर्वोपकारकत्वेन प्रेष्ठस्य परमात्मतत्वस्यापरोक्ष्यं कदा नु स्यादिति सोदाहरणं तत्साधनमाह **यर्हीति**। यर्हि यदा पद्मनाभचरणेषणया अनुदिनं प्रवृद्धयोर्व्या भक्त्या चेतसः सत्वादिगुणकर्मजातानि मलानि विधमेत् परिहरेत् तदा तस्मिन् चेतसि शुद्धे आत्मतत्वं परमात्मस्वरूपं साक्षादुपलभ्यते अपरोक्षीक्रियते। कथमिव। यथा सवितृप्रकाशोऽमलदृशौ निर्मलचक्षुषि दृश्यत इति ॥ ४१॥

---

१. बाह्यार्थस्य मानसार्थस्य वा प्रकाशाभावरूपायां सुप्ताविति यावत्।

२. एतद्वाक्यमेकस्मिन्नेव लिखितकोशे वर्तते। तात्पर्यानुगुणं च। मुद्रितपुस्तके नास्ति। एवमेव विजयध्वजटीकायां तत्रतत्रोद्धापः सञ्जातः।

**राजोवाच -**

**कर्मयोगं वदत नः पुरुषो येन संस्कृतः ।**
**विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४२ ॥**

**एवं प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके ।**
**नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४३ ॥**

**आविर्होत्र उवाच -**

**कर्माकर्मविकर्मेति वेदवादो न लौकिकः ।**
**वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः ॥ ४४ ॥**

**परोक्षवादो वेदोऽयं बालानामनुशासनम् ।**
**कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४५ ॥**

---

निमिर्ज्ञानयोगं श्रुत्वा कर्मयोगं पृच्छति **कर्मयोगमिति** । येन केन प्रकारेण । संस्कृतः शुद्धः ॥ ४२ ॥ ब्रह्मणः पुत्राः सनकादयः । कारणं परिहारावचने निमित्तम् ॥ ४३ ॥

आविर्होत्रः "जानन्तोऽपि हि दुर्ज्ञेयः प्रश्नोऽयं ज्ञानिनामपि । इति ज्ञापयितुं ब्रह्मपुत्रा नोचुर्निमेः पुरा" इति वाक्यात् ज्ञानिनामपि दुर्ज्ञेयत्वं निमित्तमित्यभिप्रेत्य तैः प्रश्नपरिहार आदौ न कृत इति सूचयन् प्रश्नं प्ररिहरति **कर्मेति** । इदं कर्म प्रशस्तमिदं कर्म कर्तुमयोग्यमिदं विकर्म विरुद्धं कर्मेति वेदगतो विचारो न लौकिकः लोकविषयः, वेदबहिर्मुखजनगोचरो न भवति । किन्तु वेदविचार-कुशलपुरुषविषय एवेत्यर्थः । कुतोऽत्राह **वेदस्येति** । चशब्द एवार्थे । ईश्वरात्मत्वाच्च ईश्वरविषय-त्वादेव । वैदिकानामपि तत्प्रसादं विना सुज्ञेयो नेति भावेनाह **तत्रेति** । तत्र वेदार्थविचारे ॥ ४४ ॥

ननु वेदस्येश्वरविषयत्वं कथं युज्यते स्वर्गकामो यजेतेत्यादिकर्मविषयत्वप्रतीतेरत आह **परोक्षेति** । परोक्षतो वादो वचनं यस्य स तथा । अयं वेदो मुख्यया वृत्त्या साक्षाद् ब्रह्म वक्ति, अमुख्यया कर्म च । किमर्थमेवं कल्प्यत इत्यत्राह **बालानामिति** । अल्पज्ञानिनामनुशासनं कुर्वन् वेदोऽन्तःकरणशुद्धये दुष्कर्ममोक्षाय च ब्रह्मार्पणबुद्ध्या तदुद्दिश्य कर्माणि विधत्ते, कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समा इत्यादिलक्षणः, हि यस्मात् तस्मादुभयथापि ब्रह्मविषयत्वमविहतं वेदस्य । एकस्योभयविषयत्वं कुत्र दृष्टमत्राह **अगदं यथेति** । यथा यदेकमेव द्रव्यमपथ्यजनकं तदेवौषधीकृतमपथ्यं

**नाऽऽचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।**
**विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४६ ॥**

**वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।**
**नैष्कर्म्यां लभते सिद्धिं रोचनार्थं फलश्रुतिः ॥ ४७ ॥**

---

परिहर्तृ भवति तथेत्यर्थः । यद्वा एकं पर्पटकं चिकित्साभेदाज्ज्वरवातयोः परिहाराय भवति प्रकृतेपि तथेति ॥ ४५ ॥

वेदस्यापौरुषेयत्वेन विप्रलंभादिदोषाभावादज्ञेनापि वेदोक्तं कृतं सुकर्मेत्याशंक्य भगवदज्ञकृतं कर्म विकर्म तत्, ज्ञानिकृतमेव सुकर्मेति विविनक्ति **नाऽऽचरेदिति** । स्वयं सर्वपूजितमिदमिष्टप्रदं दैवं न जानातीत्यज्ञः, अत एवाजितेन्द्रियो विषयलम्पटो यो ना पुरुषो वेदोक्तं कर्माचरेत् करोति स मृत्योर्मृत्युमतीवदुःखमुपैति । केन कारणेनेत्यत उक्तं **विकर्मणेति** । वेदोक्तकर्मणो विकर्मत्वं कुत इत्यत उक्तम् **अधर्मेणेति** । ''एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद् भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा'' इति भीष्मोक्तेरनेवंवित्कर्मणोऽधर्मत्वात् । यद्यप्यनेवंवित्महत्पुण्यं करोति तद्धास्यान्ततः क्षीयत एवेति श्रुतिं हिशब्द आददाति ॥ ४६ ॥

[१]अनेनेश्वरार्पणमौषधं कर्मणो नश्वरफलरोगं विनाश्य नित्यसुखहेतुरित्युक्तं भवति । तर्हि स्वर्गे लोके न भयं किञ्चनास्तीति श्रुतिः कथं सङ्गच्छत इति तत्राह **रोचनार्थमिति** । अल्पबुद्धेर्बहिर्मुखस्य योग्यस्य व्युतिपादायिषुर्दयालुरिव तस्मिन् बुद्ध्यवतारार्थं गुडजिह्विकान्यायमनुसन्दधानो मधुरं मक्तिफलं गर्भीकृत्य स्वर्गादिपुष्पं मधुररसमिव प्रकाश्य तदर्थे कर्म विदधानः, अधीतश्रुतवेदार्थस्य समुत्पन्नजिज्ञासस्य क्षणभङ्गुरफलत्वात् स्वर्गादौ वैराग्यमुत्पाद्य श्रीनारायणचरणारविन्दभक्तिमुत्पाद्य तदुपासनासंभूतसंवित्संजातप्रसादसुलभापवर्गे तात्पर्यपर्यवसायिनी फलश्रुतिः सङ्गता भवतीति । ''अज्ञात्वा कुर्वतां कर्म स्खलनात् पापकारणम् । तदेवार्पयतो विष्णोर्नैव पापाय तद् भवेत् । मनोदोषविहीनस्य न तु दोषवतः क्वचित् । सत्सु केशवपूर्वेषु क्रमशो भक्तिहीनता । असद्भक्तिस्तथा स्नेहो बहुमानमथापि वा । स्वोत्तमानां प्रियत्यागादात्मप्रियचिकीर्षुता । अधिकेष्वेव नीचोच्चभक्ति-व्यत्यास एव वा । स्वोत्तमस्यात्मनश्चैव समस्नेहोऽथवा भवेत् । कार्येषु बहुमानो वा स्वात्मनः समतापि वा । आधिक्ये किमु वक्तव्यमात्मनः शक्तिहापनम् । शक्तस्याशक्तवत् कर्म मनोदोषा इतीरिताः'' इत्यनेनोक्ततात्पर्यार्थो बोद्धव्यः ॥ ४७ ॥

---

१. अत्र सर्वेष्वपि कोशेषु पाठो गलितः । विजयध्वजतीर्थटीकायां तत्रतत्र लेखकप्रमादा वर्तन्त इत्यत्रेदं निदर्शनम् ।

य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद् देवं तन्त्रोक्तेन च केशवम् ॥ ४८ ॥

लब्ध्वा चाव्यग्रमाचार्यं तेन सन्दर्शितागमः।
महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः ॥ ४९ ॥

शुचिः संमुख आसीनः प्राणसंयमनादिभिः ।
पिण्डं संशोध्य संन्यासकृतरक्षोऽर्चयेद् हरिम् ॥ ५० ॥

अर्चादौ हृदये वापि यथालब्धोपचारकैः ।
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५१ ॥

पाद्यादीनुपकल्प्याथ सन्निधाय समाहितः ।
हृदयादिकृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५२ ॥

साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ।
पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥ ५३ ॥

---

इदानीं भगवदर्चनप्रकारं कथयति य आश्विति । तन्त्रोक्तेन पञ्चरात्रोक्तेन ॥ ४८ ॥ तन्त्रोक्तसम्प्रदायमजानतः कथमर्चना घटत इति तत्राह लब्ध्वेति । अव्यग्रमिति क्रियाविशेषणं बहुकालं परीक्ष्याचार्यं लब्ध्वेत्यर्थे वर्तते । तेनाचार्येण सन्दर्शितागमः सम्यग् दर्शितशास्त्रसम्प्रदायः ''परीक्ष्यैव गुरुः शिष्यं शिष्योपि गुरुमाव्रजेत् । अन्यथा नरकायैव प्रायश्चित्तं गुरोस्तथा'' इत्यनेनाव्यग्रत्वमुभयोरप्यपेक्षितमिति अत्र क्रियाविशेषणत्वेन **प्रयुक्तमिति** । अव्यग्रत्वेन आचार्यं लब्ध्वेत्यत्र (तात्पर्यवाक्ये) इत्थंभूतलक्षणे तृतीया। कंचित्प्रकारं प्राप्त इत्थंभूतः, तज्ज्ञापके तृतीया ॥ ४९ ॥

पिण्डं शरीरम् । सम्यङ् मन्त्राक्षरन्यासेन कृतात्मरक्षः ॥ ५० ॥

अधिकारिणां बाहुविध्यादधिष्ठानविशेषमाह **अर्चादाविति** । द्रव्यलिङ्गं शिलाद्यं, क्षितिलिङ्गं स्थण्डिलम्, आत्मलिङ्गं मनोलक्षणम् । ''द्रव्यलिङ्गं शिलाद्यं स्यादात्मलिङ्गं मनोमयम् । अथवा स्थण्डिले चैव विष्णोर्लिङ्गं प्रकीर्तितम् '' इत्यस्मादयमेवात्र विवक्षितोऽर्थः ॥ ५१ ॥

हृदयादिकृतमन्त्रन्यासः ॥ ५२ ॥ साङ्गोपाङ्गामङ्गमन्त्रवाच्यमूर्तिभिः सहिताम् ॥ ५३-५४ ॥

गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ।
साङ्गं सम्पूज्य विधिवत् स्तवैःस्तुत्वा नमेद् हरिम् ॥ ५४ ॥

आत्मानं तन्मयं ध्यायन् मूर्तिं सम्पूजयेद् हरेः ।
शेषमाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५५ ॥

एवमग्न्यर्कतोयादावर्चयेद् हृदये च यः ।
यज्ञेश्वरं स्वमात्मानमचिरान्मुच्यते हि सः ॥ ५६ ॥

॥ इति तृतीयोऽध्यायः ॥

॥ अथ चतुर्थोऽध्यायः ॥

राजोवाच -

यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ।
चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥१॥

द्रुमिल उवाच -

यो वा अनन्तस्य गुणाननन्तानुक्रमिष्येत् स तु बालबुद्धिः ।
रजांसि भूमेर्गणयेत् कथंचित् कालेन नैवाखिल सत्वधाम्न ः ॥२ ॥

---

तन्मयं तत्प्रधानम् । " विष्णोर्भृत्योहमित्येव सदा स्याद् भगवन्मयः । नैवाहं विष्णुरस्मीति विष्णुः सर्वेश्वरो ह्यजः" इति वचनात् स्वामित्वमेवार्थो न तु तत्स्वरूपत्वम् । स्वमात्मानमित्युत्तरत्रैक्य-विधानादत्रापि स एवार्थः किं न स्यादिति चेन्न । स्वं स्वतन्त्रमात्मानं व्याप्तमित्यर्थोपपत्तेः। "स्वादानात् स्वात्मनो व्याप्त्या विष्णुः स्वात्मेति कथ्यते । न तु जीवस्वरूपत्वात् स हि विश्वेश्वरः प्रभुः " इति प्रमाणोपेतत्वात् । हि शब्देनास्यार्थस्य बहुप्रमाणप्रसिद्धिं द्योतयति ॥ ५५-५६ ॥

॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां पदरत्नावल्यां एकादशस्कन्धस्य तृतीयोऽध्यायः ॥

स्वच्छन्दजन्मभिः स्वेच्छावतारैः । कर्ता करिष्यति । १॥

द्रुमिलो भगवद्गुणानामनन्तत्वात् प्रश्नो दुष्परिहर इति भावेनाह - **यो वा इति** ॥२॥

**भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।**
**स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥३ ॥**

**यत्काय एष भुवनत्रयसन्निवेशो**
**यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।**
**ज्ञानांशकेन विशतो[१] बलमोज ईहा**
**सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥ ४ ॥**

---

नन्वेवं चेल्लोके प्रश्नप्रतिवचने गुरुशिष्यभावौ च न स्त इति दोषपरिहाराय यथाशक्ति प्रवक्ष्यामीत्यभिसन्धायाह - **भूतैरिति** ।भूतैरित्युपलक्षणम् । महदहंकारौ पञ्चभूतानि च यदा ससर्ज तदा पुरुषाभिधानमवाप ।यदा च महदादिचतुर्विंशतितत्त्वैः विराजं ब्रह्माण्डाख्यं पुरं विरचय्य स्वांशेन तस्मिन् प्रविष्टस्तदा (पुनः ) पुरुषाभिधानमवाप ।यदा चात्मसृष्टैः पृथिव्यादिपञ्चभूतैः ब्रह्माण्डान्तःपुरं, जातावेकवचनं, पुराणि शरीराणि विरचय्य स्वांशेन तस्मिन् विष्टस्तदा (पुनः) पुरुषाभिधानमवाप । ''विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाण्यथो विदुः । प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् । तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यते'' इति पुरुषरूपविष्णुज्ञानस्य मुक्तिहेतुत्वोक्तेः साक्षात् सच्चिदानन्दानि पुरुषरूपाणि विष्णोरभिन्नानीति ज्ञातव्यम् । नरः पुरुषः, तेन सृष्टं नारम् , तस्याश्रयो नारायणः । नरसृष्टत्वान्नारं ब्रह्माण्डं तदाश्रयोपि । नरस्य विद्यमानं नारं शरीरं तदाश्रयोऽपि । संसारिव्यावृत्त्यर्थमादिदेव इति ॥ ३ ॥

एतदेव विवृणोति **यत्काय इति** । भुवनत्रयसन्निवेशो यस्य काये शरीरे, भगवच्छरीराधारत्वेन वर्तत इत्यर्थः । तनुभृतामुभयेन्द्रियाणि ज्ञानकर्मोत्पादकानीन्द्रियाणि यस्य हरेः इन्द्रियैः प्रेरितानि वर्तन्ते । अनेन शरीरान्तःस्थत्वमुक्तम् । कथं प्रेरकत्वमित्यत उक्तं **ज्ञानांशकेनेति** । ज्ञान-स्वरूपेणान्तःशरीरं विशतो न केवलं श्रवणादीनीन्द्रियाणि प्रेरितानि, अपि तु बलादीन्यपीत्याह **बलमिति** । सत्वादिभिर्गुणैः स्थितिश्च लयश्च उद्भवश्च यस्मात् स तथा । अत आदिकर्तेत्युच्यते ॥ ४ ॥

---

१. विशतेति यादवेन्द्रतीर्थपाठः । विशत इत्येव टीकाकृतः । सर्वत्र कोशेषु तथैव दर्शनात् । टीकायां बलमितीत्यस्यावतारिका कथञ्चिन्नेया । विशतो यस्येन्द्रियैरिति मूलान्वयः ।

**आदावभूच्छतधृती रजसाऽस्य सर्गे**
**विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ।**
**रुद्रोऽप्ययाय तमसा पुरुषः स आद्य**
**इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥**

**धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्या**
**नारायणो नर इति स्वतपःप्रभावः ।**
**नैष्कर्म्यलक्षणमुवाच चचार योगं**
**योऽद्यापि चास्त ऋषिवर्यनिषेवितांघ्रिः ॥ ६ ॥**

---

एतदेव विवृणोति **आदाविति** । अस्य जगतः सर्गे, तादर्थ्ये सप्तमी, सृष्ट्यर्थं रजसा गुणेन तं ब्रह्माणं सृष्ट्वा आदावग्रे तदन्तर्यामित्वेन नाम्ना शतधृतिःशातानन्दो ब्रह्मेत्यभूत् । अस्य स्थितौ नाम्ना विष्णुरभूत् । स्थित्यै हेतुत्वं व्यनक्ति **क्रतुपतिरिति** । क्रतवो द्विजधर्माश्च निमित्तानि एतैर्जगत् स्थापयतीत्यर्थः । सत्वेनेति ग्राह्यम् । तमसा गुणेनास्याप्ययाय तं रुद्रं सृष्ट्वा तदन्तर्यामित्वेन नाम्ना रुद्रोऽभूत् । अतः स आद्यः पुरुषाकारेणैतत्साधनात् नाम्ना पुरुषोऽभूदिति भावः । उपसंहरति **इतीति** । सततमिति वीप्सोपलक्षणम् । कालं कालं प्रजासूद्भवस्थितिलया इत्येवं प्रकारेण हरेर्वर्तते नान्यस्मादिति निश्चितम् । तदुक्तम् - "ब्रह्मणिस्थोऽसृजद् विष्णुः स्थित्वा रुद्रे त्वभक्षयत् । पृथक् स्थित्वा जगत् पाति तद् ब्रह्माद्याह्वयो हरिः" इति । अत इयं कल्पना क्लिष्टेति न मन्तव्यम् ॥ ५ ॥

हरी रूपान्तरैरपि जगत्स्थितिं करोतीत्याशयेन माहात्म्यप्रकटनपूर्वकं तान्याह **धर्मस्येत्यादिना** । धर्मस्य सकाशात् । तप आलोचन इति धातोरालोचनं निश्चयज्ञानम् । स्वमात्मानं तपति जानातीति स्वतपाः। स्वरूपभूतः प्रभावो यस्य सः स्वप्रभावः । स्वविषयज्ञानरूपश्चासौ स्वरूपभूतप्रभावरूपश्चेति स्वतपःप्रभावः । स्वशब्दः पदद्वयेन संबध्यते । अवतारप्रयोजनमाह **नैष्कर्म्येति** । नैष्कर्म्यलक्षणं योगं मुक्तिसाधनं ज्ञानमवदत् । स्वयं च जनशिक्षार्थं योगमुपासनालक्षणं ध्यानं चचार । कृतावतार-प्रयोजनोपि लोकानुग्रहकातरो भूमावेकत्राश्रमविशेष आस्त इत्याह **अद्यापीति** । ऋषिवर्यैः ज्ञानि-श्रेष्ठैर्ब्रह्मादिभिर्निषेवितांघ्रिः ॥ ६ ॥

इन्द्रोपि नाक्यसुखमेष जिघृक्षतीति
कामं न्ययुङ्क्त सगणं च स बदर्युपाख्यम् ।
गत्वाऽप्सरोगणवसन्तसुमन्दवातैः
स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥

विज्ञाय शक्रकृतमक्रममादिदेवः
प्राह प्रहस्य गतविस्मय एजमानान् ।
मा भैर्विभो मदनमारुतदेववध्वो
गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥

इत्थं ब्रुवत्यभयदे नरदेवदेवे
सव्रीडनम्रशिरसः सघृणं तमूचुः ।
नेयं विभो त्वयि परेऽविकृतिर्विचित्रा
स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥

---

श्रीनारायणं प्राणं च विनाऽन्यान् सुरानपि परे ज्ञानप्रतिबन्धिनः कामादय आविशन्ति किमुतान्यानिति भावेनेन्द्रस्याज्ञानं हरेर्महिम्नोऽप्रतिहतत्वं च प्रकटयितुं वक्ति **इन्द्रोपीति**। एष नारायणो नाक्यसुखं नाके विद्यमानं सुखमैश्वर्यलक्षणं जिघृक्षति गृहीतुमिच्छतीति निरूप्य कामं मदनं न्ययुङ्क्त आज्ञापितवान्। बदरीत्युपपदा आख्या यस्य तमाश्रमं बदरिकाश्रमं प्रति गत्वा नारायणस्य तपोविघ्नं कुर्विति कामं न्ययुङ्क्त। स कामो बदर्युपाख्यं गत्वेति वा। अप्सरोगणादिभिर्वातैः सहितैः स्त्रीणां प्रेक्षणेषुभिः नयनेक्षणशरैरविध्यत् । अमुं भगवन्तमिति शेषः । तस्य परमात्मनो माहात्म्यं न जानातीत्यतन्महिज्ञः। ''ज्ञानरूपानपि सुरान् विना प्राणं क्वचित् परे। आविशन्ति ततस्तेषामज्ञानादि न तु स्वतः'', ''अथैनमेव नाप्नोद् योयं मध्यमः प्राणः'', ''एवमेता देवताः पाप्मना विद्धाः'' इत्यादिश्रुतिस्मृतिभ्योऽयमर्थः सिद्धः । स कामो बदर्युपाख्यं बदरीत्युपपदाश्रमेत्याख्या यस्य स तथा तं बदरिकाश्रमं अप्सरोगणादिभिः सह गत्वा स्त्रीणां प्रेक्षणेषुभिर्नयनलक्षणशरैः अविध्यत्, अमुं भगवन्तमिति शेषः । तस्य हरेर्महिं माहात्म्यं न जानतीत्यतन्महिज्ञः । उपलक्षणमेतत् । इन्द्रादिरप्येवम् । अनेन मुख्यप्राणोपि भगवदनुग्रहादसुरकृतपीडाया अविषयः किमुत हरिरसुराविष्टकामादिपीडाया इति न्यायो दर्शितः। ''तं हासुरा ऋत्वा विदध्वसुर्यथाऽश्मानमाखणमृत्वा विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुः'' इति श्रुतेः ॥ ७ ॥

अक्रममस्थाने प्रपदन्यासलक्षणमन्यायम् । इममाश्रमम् । अविकृतिः; अविकारः । स्वारामाश्च धीराश्च स्वारामधीराः, तेषां निकरः समूहः, तेनानतं पादपद्मं यस्य स तथा तस्मिन् ॥ ८-९ ॥

**त्वां सुन्वतां सुरकृता बहवोऽन्तरायाः**
**कस्तान् विलंघ्य व्रजतात् परमं पदं ते ।**
**नान्यस्य बर्हिषि बलिं ददतः स्वभागं**
**धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥**

**क्षुत्तृट्त्रिकालगुणमारुत जैह्वशैश्न्या-**
**दस्मादपारजलधेरतितीर्य केचित् ।**
**क्रोधस्य यान्ति विफलस्य वशे पदे गो-**
**र्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥ ११ ॥**

---

भवतामल्पशक्तित्वादविकारः किं न स्यादित्याशंक्य वयं भवन्तं प्रत्यल्पबला अन्यान् प्रति बलवन्त इति भावेनाहुः **त्वामिति** । सुन्वतां यजमानानां ये अन्तरायाः कस्तान् विलंघ्य ते परमं पदं व्रजतात् । न कोपि । व्रजति चेत् को वायुरेव नान्य इत्यर्थः । ''सा वा एषा देवतैतासां देवतानां मृत्युमपहत्याथैनां मृत्युमत्यवहत् सा यदा मृत्युमत्यमुच्यत सोग्निरभवत्'' इति श्रुतिश्चोक्तार्थे बलवत्प्रमाणम् । नन्वेवं तर्हि वायुमन्तरेण भजतामितरेषां भगवत्प्राप्तिलक्षणमुक्तिर्न स्यादित्याशंक्य भगवदनुग्रहे सति काप्यापद् दुस्तरा स्यादिति भावेनाहुः **नेति** । भवानमविता बर्हिषि स्वभागं ददतः पुंसो यदि विघ्नमूर्ध्नि पदं धत्ते तर्हि स बलिरन्यस्य न तवैव । यदि विघ्नमूर्ध्नि पदं न दध्यात् तर्हि बलिरपि त्वत्प्रीतिजनको न स्यात्[१] । न चायं तथा । तस्मादिति । तर्केण भक्तेः प्राधान्यं तयैव विघ्ननिवृत्तिरिति दर्शितं भवति ॥ १० ॥

किं बहुना, कामादिजयादपि क्रोधजय एव दुःसाध्यः, तव सोपि गोष्पदतरणवत् सुशक इति विज्ञापयन्ति **क्षुत्तृडिति** । चत्वारो मासाः शीतकराः,चत्वार उष्णहेतवः, चत्वारो वर्षहेतव इति त्रिकालगुणाः शीतोष्णवर्षसंज्ञाः । जैह्वं जिह्वाभवं शैश्नं शिश्नभवं व्यसनम् । क्षुदादिव्यसन-मयादपारजलधेरतितीर्य उत्तीर्य ये केचिदपण्डिता भवदनुग्रहरहिताः विफलस्य प्रतिक्रियाकरण-शक्त्यभावेन फलरहितस्य आत्मनाशादिविविधफलस्य क्रोधस्य वशं यान्ति ते गोष्पदे मज्जन्ति । दुश्चरतपश्च वृथोत्सृजन्ति ॥ ११ ॥

---

१. अत्र काप्यस्पष्टता वर्तते । लेखकप्रमादः स्यात् ।

इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ।
दर्शयामास शुश्रूषामर्चनं कुर्वतीर्विभुः ॥ १२ ॥

ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।
गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥

तानाह देवदेवेशः प्रणतान् प्रहसन्निव ।
आसामेकतमां वृङ्ध्वं सुवर्णां स्वर्गभूषणाम् ॥ १४ ॥

ओमित्यादेशमादाय नत्वा तं सुरबन्दिनः ।
उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥

इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ।
ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥

हंसस्वरूप्यवददच्युत आत्मयोगं
दत्तः कुमार ऋषभो भगवान् पिता नः ।
विष्णुः शिवाय जगतां कलयाऽवतीर्ण-
स्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥

---

इति शब्दः प्रवृत्तिवचनः ॥ १२ ॥ रूपिणीः प्रशस्तरूपाः । वृङ्ध्वं स्वीकुरुत । सुराणां बन्दिनः बन्दिग्रहणपटवः ॥ १३-१६॥

ये ये हरेरवातारास्ते सर्वेऽप्येवंविधमाहात्म्याम्बुधय इति ज्ञाप्यते **हंसस्वरूपीति** । विष्णुः कलया हंसरूप्यवतीर्णो जगतां शिवाय आत्मयोगं परमात्मज्ञानमवदत् । एवं दत्तादावप्यन्वेतव्यम् । कुमारो नाम हरे रूपान्तरं सनत्कुमारादियोगेश्वरज्ञानोपदेष्टृ । ''कुमारनामा तु हरिर्ब्रह्मचारिवपुः स्वयम् । सनत्कुमाराय परं प्रोवाच जगदीश्वरः'' इत्यनया स्मृत्या ''विष्णोः सनत्कुमाराख्याच्छुश्रुवुर्ज्ञान-मुत्तमम् । सनत्कुमारप्रमुखा योगेशाः परमेश्वरात्'' इत्यनया चोक्तार्थः सिद्धः । हयास्ये हरग्रीवावतारे तेन मधुभिदा श्रुतय आहृताः ॥ १७ ॥

गुप्ताऽप्यये मनुरिला ऋषभश्च मात्स्ये
क्रोडे हतो दिविज उद्धरतोऽम्भसे क्ष्माम् ।
कौर्मे धृतोऽद्रिरमृथोन्मथने स्वपृष्ठे
ग्राहात् प्रपन्नमिभराजममुञ्चदार्तम् ॥ १८ ॥

संस्तुन्वतोऽब्धिपतिताञ्छ्रमणान् ऋषींश्च
शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।
देवस्त्रियोऽसुरगृहे पिहिता अनाथा
जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥

देवासुरे युधि स दैत्यपतीन् सुरार्थे
हत्वाऽन्तरेषु भवनान्यदधात् कलाभिः ।
भूत्वांऽथ वामन इमामहरद् बलेः क्ष्मां
याश्चाछलेन समदाददितेः सुतेभ्यः ॥ २० ॥

---

मात्स्येऽवतारे इला भूमिर्गुप्ता । अप्यये प्रलये सत्यव्रतो नाम मनुः सप्तर्षयश्च गुप्ताः । अम्भसः क्ष्मामुद्धरतो हरेः क्रोडे वराहावतारे दितिजो हिरण्याक्षो हतः । अमृतोत्पत्तये क्षीरसमुद्रमन्थने मन्दराद्रिः कौर्मे धृतः । तापसो नाम हरिरिभराजं ग्राहादमुञ्चत् ॥ १८ ॥

व्यासावतारे संस्तुन्वतः श्रमणान् निःसङ्गान् ऋषींश्च संसाराब्धिपतितान् संसाराब्धेरमूमुचत् । ''सुपर्णा ऋषयो व्यासं नाथमाना ययुः सदा । ध्वांतं निवर्तयास्माकं मुमुग्धीति च वादिनः '' इति वचनाद् व्यासावतारे इयं कथेति ज्ञायते । नृसिंहे नरसिंहावतारे तमसि प्रविष्टं कर्तव्यमूढमिन्द्रं वृत्रवधतो दोषादमूमुचत् । सतामभयाय असुरेन्द्रं जघ्ने । असुरगृहे पिहिता अनाथा देवस्त्रियः अप्सरसश्च व्यमोचयदिति । ''स्मरणात्तु नृसिंहस्य शक्रो मुक्तो बृहद्वधात् । हिरण्यकहृताश्चापि तथैवाप्सरसां गणाः'' इति वचनसिद्धेयं कथा ॥ १९॥

उपेन्द्ररूपी हरिर्देवासुरयुद्धे सुरार्थे दैत्यपतीन् हत्वा अन्तरेषु मन्वन्तरेषु भुवनान्यदधात् । वामनो भूत्वा याश्चाछलेन बलेरिमां क्ष्मामहरत् । हृत्वा च तामदितेः सुतेभ्यः समदादित्यन्वयः । तदुक्तम् ''उपेन्द्ररूपी भगवान् प्रतिमन्वन्तरं विभुः । असुरान् हन्ति नियतं श्राद्धदेवे च वामनः'' इति ॥ २० ॥

निःक्षत्रियामकृत गां च त्रिसप्तकृत्वा
रामस्तु हैहयकुलाप्ययभार्गवाग्निः ।
सोऽब्धिं बबन्ध दशवक्त्रमहन् स लङ्कां
सीतापतिर्जयति लोकमलंध्यकीर्तिः ॥ २१ ॥

भूमेर्भरावतरणाय यदुष्वजन्मा
जातः करिष्यति सुरैरपि दुष्कराणि ।
वादैर्विमोहयति यज्ञकृतोऽतदर्हान्
शूद्रान् कलेः क्षितिभुजो न्यहनिष्यदन्ते ॥ २२ ॥

एवंविधानि कर्माणि जन्मानि च जगत्पतेः ।
भूरीणि भूरियशसो वर्णितानि महाभुज ॥ २३ ॥

॥ इति चतुर्थोऽध्यायः ॥

॥ अथ पञ्चमोऽध्यायः ॥

**राजोवाच -**

भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ।
तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥

---

निःक्षत्रियां क्षत्रियरहिताम् । हैहयकुलाप्ययार्थमुज्वलितः भार्गवाग्निः भृगुकुलोत्थवह्निः । लङ्कामहन् हतवान् दशवक्त्रं चाहन् । लोकं जयति ॥ २१ ॥ बुद्धो यज्ञकृतो वादैर्विमोहयति । कल्की कलेरन्ते शूद्रान् क्षितिभुजो न्यहनिष्यत् ॥ २२ ॥ निगमयति एवंविधानीति ॥ २३ ॥

**॥ इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां पदरत्नावल्यां एकादशस्कन्धस्य द्वितीयोऽध्यायः ॥**

श्रुतभगवद्भक्तलोकविशेषो राजा भगवद्विमुखानां कस्मिन् स्थाने स्थितिरिति पृच्छति **भगवन्तमिति** । हे आत्मवित्तमाः । न भजन्ति श्रोतैर्यज्ञादिकर्मभिरिति शेषः । निष्ठा स्थितिः, स्वरूपमिति यावत् ॥ १ ॥

**चमस उवाच -**

**मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।**
**चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥ २॥**

**य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्।**
**न भजन्त्यवजानन्ति स्थानभ्रष्टाः पतन्त्यधः॥ ३॥**

**दूरेहरिकथाः केचिद् दूरेचाच्युतकीर्तनाः।**
**स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम्॥ ४॥**

**विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम्।**
**श्रौतेन जन्मना वाऽपि मुह्यन्त्याम्नायवादिनः॥ ५॥**

**कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः।**
**वदन्ति वादकान् मूढा यया माध्व्या गिरोत्सुकाः॥ ६॥**

---

हरेः पितृत्वेनात्यन्तोपकर्तृत्वात् तदभजनादिद्वेषोऽधःपातहेतुरिति तदभक्तानां तमस्येव निष्ठेति वक्तुं भगवदवयवेभ्यो वर्णाश्रमाणामुत्पत्तिप्रकारमाह **मुखेति**। शामादिगुणैः॥ २॥

एषाम् उत्पन्नानां मध्ये। आत्मप्रभवं स्वोत्पादकं पितरमित्यर्थः। पितुर्हरेः स्थानाद् वैकुण्ठादिलक्षणाद् भ्रष्टाः॥ ३॥

श्रुत्याद्यर्थविचारानधिकृतत्वेन दूरीकृतहरिकथाश्रवणकीर्तनादिसाधनानां स्त्रीशूद्रादीनां श्रेयःसाधनमाह **दूर इति**। भवादृशानामनुकम्पाविषयत्वेन हरिकथाश्रवणाद्यधिकारिणः स्युरिति भावः। अच्युतस्य कीर्तनं येषामस्ति ते अच्युतकीर्तनाः, ते च दूरे॥ ४॥

विप्रादीनां हरिभक्त्यभावे श्रुतिविचारो न मोक्षहेतुरित्याह **विप्र इति**। विप्रादयः श्रौतेन श्रुतिविचारयोग्येन जन्मना हेतुना हरेः पदान्तिकं प्राप्ताः हरिपदसमीपप्राप्तियोग्या यद्यपि अथापि आम्नायेन सह वादो विवादो येषामस्तीति आम्नायवादिनः हरिभक्तिलक्षणमुख्यार्थापरिज्ञानात् मुह्यन्ति तत्वं न जानन्तीत्यतो जन्मादिकमप्रयोजकं किन्तु हरिभक्तिरेवेत्यर्थः॥ ५॥

ननु वेदोक्तकर्मणा तत्त्वज्ञानोत्पत्तेः कथं तेषां मोहः, कर्मणा ज्ञानमातनोतीति श्रुतेः, इत्याशंक्य

**रजसा घोरसंकल्पाः कामुका अभिमन्यवः ।**
**दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ।। ७ ।।**

**वदन्ति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ।**
**यजन्त्यसृष्टान्नविधानदक्षिणा वृत्त्यै परं घ्नन्ति पशूनतद्विदः ।। ८ ।।**

**श्रिया विभूत्याऽभिजनेन विद्यया**
**त्यागेन रूपेण बलेन कर्मणा ।**
**जातस्मयेनान्धधियः सहेश्वरान्**
**सतोऽवमन्यन्ति हरिप्रियान् खलाः ।। ९ ।।**

---

आम्नायवादित्वेन सम्यकृतदुदितकर्मतत्वापरिज्ञानादिदोषग्रहग्रस्तत्वादित्याह **कर्मणीति** । अकोविदत्वे हेतुः स्तब्धा इति । तत्र (हेतुः) मूर्खा इति । मूढत्वे अन्यतः श्रोतुं शक्यमित्यतः पण्डितमानिन इति । अतो मूढाः । यया माध्व्या स्वर्गादिमधुरवादिन्या गिरा सद्यो मधूनि गिरतीव स्थितया वाचा उत्सुकाः जिह्वारसं स्रवन्तः तथावादकान् स्वर्गादिविषयवचनविशेषान् वदन्ति ।। ६ ।।

किञ्चात इत्यत आह **रजसेति** । तत्र जनितेन रजसा रागेण घोरो निष्ठुरः पश्वालम्भनादिलक्षणः संकल्पो येषां ते तथा । कामुका विषयलोलुपाः । तद्विघ्नकर्तॄन् अभिमन्यवः अभितो मन्युरेव प्रधानो येषां ते तथा । एवंविधाः पापा अच्युतप्रियान् विहसन्ति पृथक्पृथग् दोषानुक्त्वा हसन्तीत्यर्थः ।। ७ ।।

एतदेव विवृणोति वदन्तीति । गृहेषु स्थित्वा अन्योन्यमाशिषो वाक्यप्रबन्धान् निजगुणोत्कर्ष-लक्षणान् वदन्ति । तत्र हेतुरुपासितस्त्रिय इति । किञ्चासृष्टान्नविधानदक्षिणाः अदत्तान्नविध्युक्तदक्षिणाः परं केवलं वृत्त्यै जीवनोपायार्थं पशूनजादीन् घ्नन्ति नत्वालम्भते । कुतः । अतद्विदः तत्वज्ञानशून्याः ।। ८ ।।

श्रिया शरीरकान्त्या । विभूत्या अणिमाद्यैश्वर्येण । श्रीविभूत्यादिना जातस्मयेन समृद्धमदेन अवमन्यन्ति अवजानन्ति ।। ९ ।।

**सर्वेषु शश्वत् तनुभृत्स्ववस्थितं**
**यथा स्वमात्मानमभीष्टमीश्वरम् ।**
**वेदोपगीतं च न शृण्वतेऽबुधा**
**मनोरथानां प्रवदन्ति वार्तया ॥ १० ॥**

**लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना ।**
**व्यवस्थितिस्तेषु विहाय यज्ञान् सुरागृहैरासुरवृत्तिरिष्टा ॥ ११ ॥**

---

हरिप्रियावज्ञानमेव हर्यवज्ञानं तथापीदमधिकमिति भावेनाह **सर्वेष्विति** । हरेः शशविषाण-वदसिद्धस्यावज्ञा कथंकारं संगच्छत इत्यतो वा तदवज्ञानप्रकारमाह **सर्वेष्विति**। तत्र हेतुमाह **अबुधा इति** । हर्यवज्ञानेपि श्रीसेवाया विष्णुसेवात्वात् तद्वतां कथमधःपातः स्यदितीयमाङ्का "ये तु विष्णु-मवज्ञाय श्रियमेव ह्युपासते । उपेक्ष्य वा हरिं ते तु भूत्वा याज्याः पतन्त्यधः" इत्यनेन परिहर्तव्या । राजप्रीत्यभावे प्रकृतिवर्गप्रीत्या किं प्रयोजनमभीष्टफलानुदयात् । हृदयंगमजनप्रीत्यभावे परिवृढदृढप्रीतिरपि नोदेति, तत्साधकाभावात् । एवं प्रकृते विष्णुप्रीत्यभावे लक्ष्म्यादिप्रीतिरप्यभीष्टफलदा न स्यात् । लक्ष्म्यादिप्रीत्यभावे विष्णुप्रीतिरप्यभीष्टवर्षिणी न स्यात् । अतो यथायोग्यं विष्णुप्रीतेरनुकूला अन्यप्रीतिरिति शास्त्रगुरूपदेशेन तत्तद्विष्णुजनभक्तिः कर्तव्येत्यत इयमेव विधेया नान्या । तस्याश्चोदनाभावेऽपि निम्नजलस्यन्दनवत् स्वतः प्रवृत्तेः ॥ १० ॥

एवं कुर्वाणा असुरप्रकृतयो न देवप्रकृतयः, तेषां वर्षायुतायुतकालेनापि प्रवृत्त्यदर्शनात्, उक्त-निदर्शनसाम्याच्चेत्याह **लोक इति** । लोके जन्तोः जन्ममृतिमतः प्राणिनो व्यवायादिसेवा नित्याः सदातनाः सन्ति । तुशब्दो द्रव्यसद्भावसूचकः । तत्र मद्यादिसेवायां वामदेव्यादियज्ञान् विहाय चोदना विधिर्नहि । तेषामस्ति । तदुक्तम् -"व्यवायामिषमद्यानि हरेः पूजार्थमेव तु । वामदेव्यो नाम यज्ञो व्यवायो हरिपूजनम् । पितृयज्ञो देवयज्ञो मांसेन हरिपूजनम् । व्यवाययज्ञे मद्यं तु सोमात्मक-तयेष्यते । क्षत्रियादेर्न विप्राणां विप्रो दोषेण लिप्यते । अरागतः प्रवृत्तिः स्याद् रागो दोषस्य कारणम् । घ्राणभक्षोऽथवा यज्ञे दैवे सर्वस्य चेष्यते । पैष्टमद्यस्य माध्व्यादि क्षत्रियस्य न दुष्यति । दैवे रत्यैव च प्रीतिर्विष्णोः पुत्रात्तु मानुषे । तस्माद् विहितमात्रेषु रागं मुक्त्वा यथाविधि । समाहितो हरिं स्मृत्वा वर्तन् याजी हरेर्भवेत्"इति । विधिर्नास्ति चेत् किमिति तत्रास्थीयत इति तत्राह व्यवस्थिति रिति । यज्ञान् विहाय तेषु व्यवायादिषु स्थितिः । सुरैव गृहं शरणं येषां ते तथा हरिविमुखाः, तैरिष्टा । ततः किम् । तत्राह **आसुरेति** । निषिद्धक्रियात्वादसुरजनस्य वृत्तिर्जीविका । न सुरां पिबेदिति श्रुतेः ॥ ११ ॥

**धनं हि धर्मैकफलं यतोऽस्य ज्ञानं सविज्ञानमनुप्रशान्तिः ।**
**गृहेषु युञ्जन्ति कलेवरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥**

**यद् घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ।**
**एवं व्यवायः प्रजया न रत्यै इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥**

**ये त्वनेवंविदोऽसन्तस्तथा सदभिमानिनः ।**
**पशून् द्रुह्यन्ति विस्रब्धान् प्रेत्य खादन्ति ते च तान् ॥ १४ ॥**

---

एतदेव विवृणोति **धनमिति** । यतो यस्माद् धर्माद् अस्य सविज्ञानं ज्ञानमुत्पद्यते । अनु ज्ञानोत्पत्तेरनन्तरं प्रशान्तिः प्रकृष्टा मुक्तिर्भवति । यो धर्मश्च धनाद् भवति तादृक् धर्मैकफलं धनं ये कलेवरस्यार्थे गृहेषु कलत्रादिषु युञ्जन्ति प्रयुञ्जते । कामस्यापि पुरुषार्थत्वात् तदर्थमर्थप्रयोगो युक्त इति तत्राह **मृत्युमिति**। अनेन कामलक्षणपुरुषार्थस्य क्षणभङ्गुरत्वमुक्तम्। अत ईदृशी प्रवृत्तिरासुरी-त्यर्थः । धनं पुष्टिलक्षणमोक्षहेतुरिति एवंविधधनस्यान्यविषयत्वं कुर्वतामासुरी प्रवृत्तिरिति किमु वक्तव्यमितीममर्थं हिशब्देन सूचयति ॥ १२ ॥

व्यवायादीनां यज्ञेषु विहितत्वमर्थादुक्तम्। तद्विधानप्रकारमाह **यद् घ्राणेति**। अयमर्थः। सुराया घ्राणभक्ष इति यः स विप्रादीनां दैवयज्ञविशेष विवक्षितः। तथा यत् पशोरालभनं तदेव यज्ञे विहितम्, पशुमालभेतेति। हिंसा न विहिता। न हिंस्यात् सर्वा भूतानीति च। यथा घ्राणभक्षादिकं विहितमेवं व्यवायः पितृयज्ञे प्रजया सन्तत्यर्थं विहितो रत्यै इन्द्रियभोगार्थं न । अत्रापि व्यवायाख्यपितृयज्ञे क्षत्रियस्य घ्राणभक्षमन्तरेण सुरा विहिता। व्यवाययज्ञे मद्यं त्वित्यादि चोक्तं (पूर्वश्लोके) किमत्र मथितम्। अत्राह **इमामिति**। धर्मस्वरूपाज्ञानमेव भ्रान्तिकारणमित्यर्थः। ''यज्ञेष्वालभनं प्रोक्तं देवतोद्देशतः पशोः। हिंसा नाम तदन्यत्र तस्मात्तां नाचरेद् बुधः। यतो यज्ञे मृता ऊर्ध्वं यान्ति दैवे च पैतृके। अतो लाभादालभनं स्वर्गस्य न तु मारणम्'' इति वचनाद् यज्ञे पशोरालभनं न हिंसेत्युक्तम् ॥ १३ ॥

तत्र के मारकाः, पशूनां मारकाणां किं फलमिति तत्राह **येत्विति**। असन्तः अप्रशस्तकर्माणः। ते पशवः। स्वहतपशुभिः खादनमेव यजनफलम् ॥ १४ ॥

**द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ।**
**मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥**

**ये कैवल्यमसम्प्राप्ता ये चातीताश्च मूढताम् ।**
**त्रैवर्गिकाभिजन्मानमात्मानं पातयन्ति ते ॥ १६ ॥**

**ये तत्रात्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ।**
**सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥**

**हित्वाऽत्यायासरचितगृहापत्यसुहृच्छ्रियः ।**
**तमो विशन्त्यनुच्छ्वासं वासुदेवपराङ्मुखाः ॥ १८ ॥**

---

किञ्चाभेदज्ञानात् ततोप्यधिकदुःखकरो लोकः स्यादित्याह **द्विषन्त इति** । स्वात्मानं स्वाधारम् । स्वस्मिन्नाप्तं च । स्वे महिम्नीति श्रुतेः। परकायेषु स्वकायेषु च सन्तं कायिनो जीवादन्यं द्विषन्तोऽसहमानाः । ''आप्तत्वादात्मशब्दोक्तं स्वस्मिन्नपि परेषु च । जीवादन्यं न पश्यन्ति श्रुत्वैवं विद्विषन्ति च । एतांस्त्वमासुरान् विद्धि लक्षणैः पुरुषाधमान्'' इति स्मृतिः प्रतीतार्थबाधिका ॥ १५ ॥

एतदेव विशदयति **ये कैवल्यमिति** । ये कैवल्यं यथार्थज्ञानमसंप्राप्ताः ये च मूढतां चातीताः पण्डितंमन्याः ते त्रिवर्गसाधनयोग्यमभिजन्म यस्य स तथा तादृशमात्मानं पातयन्ति, तमसीति शेषः। यद्वा अभेदज्ञानिनां गतिमुक्त्वेदानीं मिश्रज्ञानिनां स्थितिमाह **य इति** । केवलो हरिरिति ज्ञानरहिताः, अस्मादृशो न भवति भगवान् किन्तु ग्रामणीवत् प्रयोजक इति ज्ञानवन्तो ये ते भुक्तपुण्यफला आत्मानं स्वर्गान्मनुष्यलोकं पातयन्ति । ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्तीति वा ॥ १६ ॥

उभयेपि त्रैवर्गिका अधः पतन्तीत्युक्तम् । तत्र केषां कुत्र निपात इत्यतोऽधोनिपातं विविनक्ति **ये तत्रेति** । तत्रोभयेषु त्रैवर्गिकेषु ये आत्महनः परमात्मानं द्विषन्तः ते तमो विशन्तीत्यन्वयः । सीदन्ति अवसीदन्ति दःखैकभाजना भवन्ति । अशान्ता इत्यस्य विवरणं वासुदेवपराङ्मुखा इति । अत्यायासरचितगृहादीन् हित्वा कालात्मना भगवता ध्वस्तो ब्रह्मत्वं गमिष्यामीत्यादिमनोरथो येषां ते तथा । अनुच्छ्वासं श्वासमोक्षलक्षणसुखरहितं तमो विशन्ति ॥ १७-१८ ॥

राजोवाच -

कस्मिन् काले स भगवान् किंवर्णः कीदृशो नृभिः ।
नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥

करभाजन उवाच -

कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥

कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।
कृष्णाजिनोपवीताक्षान् बिभ्रद् दण्डकमण्डलू ॥ २१ ॥

मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ।
यजन्ति तपसा देवं शमेन च दमेन च ॥ २२ ॥

हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः ।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते । २३ ॥

त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ।
हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥

तं तदा मनुजा देवं सर्वदेवमयं हरिम् ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥

---

मुमुक्षुभिरधोक्षज ईक्षणीय इति निरणायि । तत्र राजा पृच्छति **कस्मिन्निति** । तत् सर्वम् ॥ १९-२० ॥

सामान्यत उक्तं विशिनष्टि **कृत इति** । कस्मिन् काल इत्यस्योत्तरं कृत इति । किंवर्ण इत्यस्योत्तरं शुक्ल इति । कीदृश इत्यस्योत्तरं चतुर्बाहुरित्यादि । केन नाम्नेत्यस्योत्तरं हंस इत्यादि । केन विधिनेत्यस्योत्तरं तपसेत्यादि । शान्त इत्याद्यधिकारिलक्षणम् । एवमुत्तरत्रापि ॥ २१-२३ ॥

त्रिमेखलः त्रिगुणितमेखलः । सर्वदेवमयं सर्वदेवप्रधानम् ॥ २४-२५ ॥

विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥

द्वापरे भगवान् श्यामः पीतवासा निजायुधः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥

तं तथा पुरुषं मर्त्या म[illegible]जोपलक्षणम् ।
यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ॥ २८ ॥

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥

नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय रामाय सर्वभूतात्मने नमः ॥ ३० ॥

इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥

कृष्णवर्णं कलौ कृष्णं साङ्गोपाङ्गं सपार्षदम् ।
यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतभक्तभवाब्धिपोतं
वन्दामहे पुरुष ते चरणारविन्दम् ॥ ३३ ॥

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्
वन्दामहे पुरुष ते चरणारविन्दम् ॥ ३४ ॥

---

कलावपि यथेज्यते तथा शृणु ॥ २६-३१ ॥

यच्चरणारविन्दमार्यवचसा पितृवचनेन अरण्यमगात् यच्च दयितयेप्सितं मायामृगमन्वधावत् तच्चरणारविन्दं वन्दामह इत्यन्वयः ॥ ३२-३४ ॥

एवं युगानुरूपोऽसौ भगवान् युगवर्तिभिः ।
मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥ ३५ ॥

कलिं संभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र संकीर्तनादेव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥

नह्यतःपरमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्देत परमां शान्तिं नश्येत संसृतिः ॥ ३७ ॥

कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ।
यत्र संकीर्तनान्नृणां हरिर्दास्यत्यसंभवम् ॥ ३८ ॥

कलौ तथा भविष्यन्ति नारायणपरायणाः ।
क्वचित् क्वचिन्महाराज द्रुमिलेषु च भूयशः ॥ ३९ ॥

ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।
कावेरी च महापुण्या प्रतीची च महानदी ॥ ४० ॥

ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ।
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥ ४१ ॥

---

उपसंहरति **एवमिति**। सामान्यविधानमिदम्। विशेषविधिस्तु स्वगुरूपदेशगम्य इति शास्त्रहृदयं रहस्यत्वान्नोक्तं शास्त्रान्तरसिद्धत्वाच्चेत्यदोषः । तदुक्तम् - ''ध्रुवं तयैव मुच्येत यां मूर्तिं प्रदिशेद् गुरुः। शिष्याणां योग्यताभिज्ञो विघ्नहानिस्तु तद्युगे। अवतीर्णहरेर्मूर्त्या तत्पूर्वयुगजेन च। नृसिहंमूर्त्या च तथा यां चान्यां प्रदिशेद् गुरुः'' इति । यस्मिन् युगे स्वयमुत्पन्नः तत्पूर्वयुगावतीर्णहरिणा गुरूपदिष्टेनाभीष्टसिद्धिर्भवति ॥ ३५ ॥

कृतादेः कलेः पुण्यहेतुत्वात् तं स्तौति **कलिमित्यादिना** । सारभागिनः सारग्राहिणः ॥ ३६-३८ ॥

तथा कलौ भविष्यन्ति जायन्ते। क्वचित् क्वचिद् देशे। तथा संभूता नारायणपरायणाः स्युः। यत्र द्रुमिलेषु ताम्रपर्ण्यादिनद्यः सन्ति । प्रतीची महानदी नाम्ना वेत्रवती वराहक्षेत्रात् सह्यगिरिं भित्त्वा पश्चिमसमुद्रं स्यन्दमाना ॥ देवर्षिपितृभूताप्तनृणां पूजकाः स्युः ॥ ३९-४१ ॥

देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिचर्यया च ॥ ४२ ॥

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः।
विकर्म यच्चोत्पतितं कथञ्चिद् धुनोति सर्वं हृदि सन्निविष्टः ॥ ४३ ॥

**नारद उवाच -**

धर्मान् भागवतानित्थं श्रुत्वा स मिथिलेश्वरः।
जायन्तेयान् मुनीन् प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४४ ॥

---

सामान्यमुक्त्वा विशेषमाह **देवर्षीति**। योऽसाधारणपरिचर्यया सर्वात्मना शरण्यं मुकुन्दं शरणं गतो भवति सोऽयं देवादीनां किङ्करः ऋणी च न भवति, स्वोत्तमान् विनोति शेषः। तेषां तु किङ्कर ऋणी च। अत्रेदं तात्पर्यम्। सर्वात्मना हरिभक्ताः, सर्वथा हरिभक्ताः, भक्ता इति त्रिविधाः। तत्र देवेशाः सर्वात्मना भक्ताः, देवाः सर्वथा भक्ताः तदितरे भक्ता इति। अत्रापि ये ये भक्त्यधिकास्ते ते अपरेषां स्वामिन उत्तमर्णाश्च स्वावरेषां किङ्करा ऋणिनश्च न स्युः। ''सर्वात्मना हरेर्भक्ता देवेशा एव केवलम्। देवास्तु सर्वथा भक्ता भक्ता एवेतरे स्मृताः। हरिभक्त्यधिकेष्वेव किङ्करश्चाप्यृणी तथा। हरिभक्तो नेतरेषां वासुदेवव्यपाश्रयात्। द्विधैव स्वोत्तमर्णानि दातव्यानीतराणि च। दातव्येभ्यो विमुच्येत नेतरेभ्यः कथञ्चन। कथं देवाद्यनुपकृतो मनो[१] मोक्षेपि वर्तयेत्। बिम्बत्वात् तदधीनं हि स्वरूपं सर्वशो यतः'' इत्यादिस्मृतिश्चशब्दगृहीता ॥४२॥

एवंविधस्यापि हरिभक्तस्य पूर्वादृष्टोपनतविकर्मणा अधःपातः स्यादिति तत्राह **स्वपादमूलमिति**। त्यक्तः अन्यः स्वतन्त्रोऽहमिति भावो येन स तथा तस्य। सर्वदा भगवदधीनोस्मीति भावयुक्तस्येत्यर्थः। कथञ्चिद् बलवददृष्टवशाद् यदुत्पतितं विकर्म तद् धुनोति। इतरभक्तैर्देवा उदकादिभिरपि श्रीहरिस्मरणपूर्वकं पूज्याः, अन्यथा मोक्षो न स्यात्। तदुक्तम् - ''उदकैश्च नमस्कारैः स्मृतिभिर्मनसा तथा। यतिभिश्चापि सम्पूज्या देवा मोक्षं यियासुभिः। मध्ये विष्णुमनुस्मृत्य नान्यथा तु कथञ्चन'' इति। तत्रापि प्राधान्येन श्रीहरिध्यानं कर्तव्यं तत्सन्निधानसम्बन्धविशेषाद् देवतास्मरणम्। ''प्राधान्येन हरिर्ध्येयः तत्सम्बन्धात् सुरादयः। ध्येया नान्यत् क्वचिद् ध्यायेद् हरेरनुपयोगि यत्'' इति विशेषवचनात् ॥ ४३ ॥

नारदः सिद्धेभ्यो भगवत्तत्त्वं विज्ञाय ततो राजा किमकरोदिति वसुदेवस्य हार्दं प्रश्नं परिहरति **धर्मानिति** ॥४४ ॥

---

१. मननान्मनो जीवः। 'कथं हि देवानुपकृतो मोक्षेपि वर्तयेत्' इति हृषीकेषतीर्थ पाठः।

ते चान्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ।
राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४५ ॥

त्वमप्येतान् महाभाग धर्मान् भागवतान् श्रुतान् ।
आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥ ४६ ॥

युवयोः खलु दम्पत्योर्यशसा पूरितं जगत् ।
पुत्रतामगमद् यद् वां भगवानीश्वरो हरिः॥ ४७ ॥

दर्शनालिङ्गनालापैः सशय्यासनभोजनैः ।
आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः॥ ४८ ॥

वैरेण यं नृपतयः शिशुपालपौण्ड्र-
शाल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियः पुनःकिम् ॥ ४९ ॥

माऽपत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ।
मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥ ५० ॥

---

आत्मा देहः ॥ ४५-४८ ॥

मुक्तेरन्तरङ्गसाधनं भक्तिरेवेति दर्शयितुं वैरप्रधानासुरावेशाद् वैरमिश्रभक्तानामपि भक्त्या स्वस्वयोग्यं फलं भवति किमुत नित्यानुरक्तबुद्धीनामिति कैमुत्यन्यायमाह **वैरेणेति**। शिशुपालादिषु स्थिता असन्तस्तन्नामानः तत्साम्यं द्वेषयोग्यफलं नरकादिलक्षणमापुः । तत्रस्थाः सन्तश्च तस्य हरेः साम्यं निर्दोषत्वादिलक्षणं फलमापुः । अनुरक्तधियः केवलभक्ताः किं पुनः भक्तियोग्यफलमापुरिति किं वक्तव्यम् । अतो भक्तिरेव मुख्येत्यर्थः । “ पौण्ड्रकादिषु दैत्येषु सुरांशाः सन्ति सर्वशः । बहुमानफलं विष्णोस्ते यान्त्यादाय सद्गतिम् । विद्वेषस्य फलं यत्तु तदादायसुरा-स्तमः । यान्त्यतो नैव विद्वेषो विष्णोः कार्यः कथञ्चन” इति वचनात् प्रामाणिकोऽयमर्थः । आकृतधियः स्वबुद्धौ तदाकारवन्तः ॥ ४९ ॥

उक्तार्थमुपसंहरन् कृष्णेऽपत्यबुद्धिं विहाय सर्वेश्वरबुद्धिरेव कर्तव्येत्याह **माऽपत्यबुद्धिमिति** ॥ ५० ॥

भूभारासुरराजन्यहन्तवे गुप्तये सताम् ।
अवतीर्णोऽस्य निर्वृत्त्यै यशो लोके वितन्वति ॥ ५१ ॥

श्रीशुक उवाच -

एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः ।
देवकी च माहभागा जहतुर्मोहमात्मनः ॥ ५२ ॥

इतिहासमिमं पुण्यं धारयेद् यः समाहितः ।
स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५३ ॥

॥ इति पञ्चमोऽध्यायः ॥

॥ अथ षष्ठोऽध्यायः ॥

बादरायणिरुवाच -

अथ ब्रह्मात्मजैर्दैवैः प्रजेशैरावृतोऽभ्यगात् ।
भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥ १ ॥

इन्द्रो मरुद्भिर्भगवानादित्यो वसवोऽश्विनौ ।
ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ २ ॥

गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ।
ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ ३ ॥

---

हन्तवे हन्तुम्, हन्तवा उ इति श्रुतिः ॥ ५१ ॥ ब्रह्मभूयाय स्वयोग्यपूर्णानन्दत्वाय ॥ ५२-५३ ॥

**॥ इति श्रीविजयध्वजतीर्थयतिविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य पञ्चमोऽध्यायः ॥**

स्वाभीष्टस्वलोकप्राप्तये भक्तमुख्यब्रह्मादिप्रार्थनासुधाद्रीकृतचित्तस्य हरेस्तदभ्यनुज्ञानं स्वकुलसंहरणोपक्रमश्च समृद्धभक्तिसमुद्रमग्नोद्धवोपसत्तिप्रकारश्चास्मिन्नध्याये कथ्यते । तत्र प्रथमं ब्रह्मादिप्रार्थनाप्रकारः प्रारभ्यते **अथेत्यादिना** । आत्मजैः आत्मनो मनसो जातैः सनकादिभिः । संक्षिप्योक्तं

द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः ।
वपुषा येन भगवान् नरलोकमनोरमः ।
यशो वितन्वन् लोकेषु सर्वलोकमलापहम् ।। ४ ।।

तस्यां विभ्राजमानायां समृद्धायां महर्षिभिः ।
व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ।। ५ ।।

स्वर्गोद्यानोद्भवैर्माल्यैश्छादयन्तो यदूत्तमम् ।
गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ।। ६ ।।

देवा ऊचुः -

नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः ।
यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ।। ७ ।।

त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं
व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ।।

नैतैर्भवानजित कर्मभिरज्यते वै
यः स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ।। ८ ।।

---

विवृणोति **भवश्चेत्यादिना** । ऋभवो नाम केचन देवाः । अङ्गिरसः बृहस्पत्यादयः । रुद्राः प्रधानादन्ये ।। १-३ ।।

दिदृक्षुत्वे हेतुमाह - **वपुषेति** । सर्वलोकमलापहं यशो लोकेषु वितन्वन् । भगवान् नरलोकमनोरम इति येन (करणेन) तस्मादिति शेषः ।। ४ ।। या स्वयं कारिता तस्यामासीनम् ।। ५ ।। माल्यैः पुष्पैः ।। ६ ।। यत्पादारविन्दमन्तर्हृदि बुद्धीन्द्रियप्राणमनोवचोभिमानिदेवैश्चिन्त्यते । बुद्धीन्द्रियाणि ज्ञानेन्द्रियाणि, बुद्धिश्चेन्द्रियाणि चेति वा ।। ७ ।।

ब्रह्मादिदेवैश्चिन्त्यत्वे ततोऽप्युत्कृष्टगुणेन भाव्यम् । तत् किमस्य निर्गुणस्यास्तीत्यत्राह **त्वमित्यादिना** । मायया त्वदिच्छया नियतया त्रिगुणया प्रकृत्या । आत्मनि आत्माधारत्वेन । व्यक्तं ब्रह्माण्डम् । अचेतनस्य पुरुषसम्बन्धित्वेन प्रवृत्तिदर्शनादिच्छामात्रेण प्रकृत्या सृष्ट्यादिकं

**शुद्धिर्नृणां नतु तथेड्य दुराशयानां**
**विद्याश्रुताध्ययनदानतपःक्रियाभिः ।**
**सत्वात्मनामृषभ ते यशसि प्रवृद्ध-**
**सच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥ ९ ॥**

**स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुः**
**क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ।**
**यः सात्विकैः समविभूतिभिरार्द्रहृद्भि -**
**र्व्यूह्यार्चितः सवनशः समविक्रमैश्च ॥ १० ॥**

---

कथमुपपद्यत इत्यत उक्तं **तद्गुणस्थ इति** । प्रकृतिगुणेषु स्थित्वा स्वनियतैर्गुणैः । ननु गुणसम्बन्धाज्जीववत् पुण्यपापलक्षणकर्मबद्धता स्यादेवेति तत्राह **नैतैरिति** । एतैर्गुणैर्निमित्तैः । अनेन दुःखानुभवोपि नास्तीत्युक्तं भवति । अत्र हेतुगर्भविशेषणमाह **य इति** । यः प्रकाशरूपः । या प्रापण इति धातोर्यात्यवगच्छति सर्वमिति सर्वज्ञ इत्यर्थः । अत एवाव्यवहिते स्वरूपसुखेऽभिरतः । अत एवानवद्यः दुःखादिनिमित्तदोषाभावात् ॥ ८ ॥

तव कीर्तिश्रवणपूर्णसच्छ्रद्धया संसारिणामपि सात्विकानां गुणनिमित्तपापादिलेपाभावेनात्यन्तिकी शुद्धिर्भवति किमु तवेति भावेनाह **शुद्धिरिति** । हे ईड्य दुराशयानां नृणां तथा विद्यादिभिः शुद्धिर्न स्यात् यथा सत्वात्मनां पुंसां ते तव यशसि प्रवृद्धसच्छ्रद्धया शुद्धिः स्यादित्यन्वयः । अनेन त्रयोपि गुणा अशुद्धिहेतव उत नेति शङ्का परास्ता । सत्वगुणस्य भगवत्कथारतिहेतुत्वात् शुद्धिकरत्वेन ज्ञानजनकत्वेन मोक्षहेतुत्वात् ॥ ९ ॥

अस्तु नित्यनिर्दुःखानन्दः सृष्ट्यादिकर्ता च, ततः किं युष्माकमिति तत्राहुः **स्यान्न इति** । यो मुनिभिः क्षेमाय आर्द्रहृदोह्यमानः यश्च सवनशः त्रिकाले आत्मविद्भिः स्वरूपविज्ञानविद्भिः सात्विकैः पुरुषैः समविभूतिभिः समविक्रमैर्वासुदेवादिभिर्व्यूह्यार्चितः तव सोऽघ्रिरशुभाशयधूमकेतुः स्यादित्यन्वयः ॥ १०॥

**यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ**
**त्रय्या निरुक्तविधिना स्वहविर्गृहीत्वा ।**
**अध्यात्मयोग उत योगिभिरात्ममाया -**
**जिज्ञासुभिः परमभागवतैः परीष्टः ॥ ११ ॥**

**पर्युष्टया पतितया वनमालयेयं**
**संस्पर्धिनी भगवती प्रतिपक्षवच्छ्रीः ।**
**यः सुप्रणीतममुयाऽर्हणमाददानो**
**भूयात् सदांघ्रिरशुभाशयधूमकेतुः ॥ १२ ॥**

**केतुस्त्रिविक्रमसतस्त्रिपतत्पताको**
**यस्ते भयाभयकरोऽसुरदेवचम्वोः ।**
**स्वर्गाय साधुषु खलेष्वितराय भूम्नः**
**पादः पुनातु भगवान् जगतामघं नः ॥ १३ ॥**

---

पुनरप्यंघ्रिं विशेषयन्ति **यश्चिन्त्यत इति** । त्रय्या वेदत्रयेण निरुक्तविधिना स्वहविर्गृहीत्वा प्रयतपाणिभिर्याजकैः अध्वराग्नौ विचिन्त्यते । उताप्यर्थविकल्पयोरित्यभिधानम् । यश्चाध्यात्मयोगे उत परमात्मध्यानेपि आत्ममायाजिज्ञासुभिः योगिभिः परमभागवतैः परीष्टः सम्यक् पूजितः ॥ ११ ॥

किञ्च येयं श्रीर्भगवती पर्युष्टया वर्जितम्लानभावया नित्योत्फल्लया असंद्वये पतितया वनमालया सह प्रतिपक्षवत् संस्पर्धिनी अस्पर्धिनी स्पर्धावतीव तिष्ठतीत्यर्थः । ''अस्पर्धिनी स्पर्धतीव श्रीरास्ते वनमालया । नहि स्पर्धादयो दोषाः संविद्रूपां स्पृशन्ति ताम्'' इति वचनात् । यश्चामुया श्रिया सुप्रणीतमर्हणमर्चनमाददान आस्ते । यद्वा अवयविनो धर्म आदानादिरवयवस्य कथं युज्यत इत्यत्राह **य इति** । यः प्रकाशरूपः । पूर्वत्र यच्छब्दरूपः, अत्र तु अकारान्त इति । अनेन लोकविलक्षणत्वेन हरेरवयवस्य पादस्यावयविवत् स्वातन्त्र्येणादानादिधर्मो युक्त इति ज्ञातव्यम् ॥ १२ ॥

पुनस्तमंघ्रिं स्तुवन्तः प्रार्थयन्ते **केतुरिति** । हे भगवन् भूम्नः ते पादो नोऽस्माकं जगतां चाघं पुनातु । यस्त्रिविक्रमसतः त्रयो विक्रमा एव सन्ति प्रशस्तकर्माणि यस्य स तथा तस्य । प्रशस्ते कर्मणि तथेत्यादेः । ते तव केतुर्ध्वजः त्रयो वेदा एव पतन्त्यश्चलन्त्यः पताका यस्य स तथा । यश्चासुर-

**नस्योतगाव इव यस्य वशे भवन्ति**
**देवाश्च यस्तनुभृदायुषि रज्यमानाः ।**
**कालस्य ते प्रकृतिपूरुषयोः परस्य**
**शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥**

**अस्यासि हेतुरुदयस्थितिसंयमानां**
**अव्यक्त जीवमहतामपि कालमात्रः ।**
**सोयं त्रिणाभिरखिलापचये प्रवृत्तः**
**कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥**

---

देवचम्वोः भयाभयकरः । किञ्च यः साधुषु स्वर्गाय सुखाय खलेष्वितराय दुःखाय भवतीति ॥ १३ ॥

सुखदुःखयोः कारणत्वेन हरेः स्वातन्त्र्यं प्रत्यक्षमिति भावेनाह **नस्योतगाव इति** । सुख-दुःखयोर्नियन्तार इन्द्रियाभिमानिदेवाश्च यस्य पादस्य वशे वर्तन्ते । नसि नासिकायामोतगावः स्वामिन इव । यश्च तनुभृतां शरीरिणमायुषि शतवर्षलक्षणे रज्यमानः संबद्ध्यमानः । तावत्कालं स्थित्वा अश्च शश्वद् दुःख्यहमित्यभिमानशून्यश्चेति तनुभृदायुषि रज्यमानाः । पुरुषोत्तमस्य ते चरणः शं नः तनोत्वित्यन्वयः । ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते नर इत्यनेन श्रीहरिसम्बन्धो देहिनां विज्ञायते । तदभिमानशून्यत्वे हेतुमाह **प्रकृतीति** । अत्रापि हेतुमाह **कालस्येति** । कालप्रेरकस्य तस्य सकाशात् परस्य वा ॥ १४ ॥

स्रष्टृत्वादिगुणपूर्णत्वाच्च काल इत्याशयेनाह **अस्येति** । यद्वा पुरुषोत्तमत्वं सनिमित्तं विवृण्वन्ति **अस्येति** । अस्य जगत उदयादीनां हेतुरसि । प्रधानादिदमुत्पन्नमिति श्रुतेः प्रकृत्यादीनां जगद्धेतुत्वात् इदं कथम् । अत्राह **अव्यक्तेति** । अव्यक्तादीनां हेतुरसि । अतः कालः । कालनिर्मातृत्वाच्च काल इत्याह **कालमात्र इति** । सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधीति श्रुतेः । हरेर्विधान्तरेण कालशब्दवाच्यत्वमाह **त्रिणाभिरिति** । तिस्रश्चातुर्मास्यलक्षणा नाभयो यस्य स तथा । गभीररयः अतर्कितापारवेगः सोयं कालस्त्वम् । त्वमिति क इति तत्राह **उत्तम इति** । पुरुषोत्तमशब्दवाच्यः । संहारकर्तृत्वं विशिनष्टि अखिलेति । अधुना यादवाद्यखिलजगन्निरासे प्रवृत्तः । यद्वा पुरुषोत्तमत्वं

**त्वत्तः प्रधानमधिकृत्य पुमान् स्ववीर्यं**
**धत्ते महान्तमिव गर्भममोघवीर्यः ।**
**सोऽयं त्वयाऽनुगत आत्मन आण्डकोशं**
**हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥**

---

विवृणोति **अस्येति** । अनेन कथं तद् विवृतमभूदित्यत उक्तम् **अव्यक्तेति** । कालस्वरूपाज्ञाने अस्यायमुत्पत्तिसमय इति निश्चयो न स्यादत्रोक्तम् **कालेति** । कालस्वरूपज्ञाता तं निर्माता च । कीदृशः कालो येन तद्विशेषज्ञानी स्यादत्राह **सोयमिति** । हरिर्यं कालं विशेषतो जानाति सोऽयं काल एवंविशिष्ट इत्यन्वयः । कथमत्राह **त्रिणाभिरिति** । अखिलस्य समस्तस्य प्रपञ्चस्यापचये संहारे च प्रवृत्तः । अनेन सृष्ट्यादिविशेषविशिष्टं कालं जानतीत्युक्तं भवति । अतश्च किमवसितमत्राह **उत्तमेति** । एवंविधात् कालादप्युत्तमस्त्वमित्यर्थः । अनेन प्रकृतिपुरुषकालमहत्तत्वेभ्य उत्तमत्वात् पुरुषोत्तम इत्युक्तं भवति । तदुक्तम् - ''कालाज्जीवात् तथाऽव्यक्तान्महतश्चोत्तमो यतः । उत्तमः पुरुषस्तस्माद् भगवान् विष्णुरुच्यते'' इति ॥ १५ ॥

व्यक्तं सृजस्यस्यासि हेतुरिति श्लोकद्वयेन कथितं सर्जनं विवृणोति **त्वत्त इति** । त्वत्तो ब्रह्माण्डं जगदुत्पद्यत इति यदुक्तं तत् प्रधानमधिकृत्य प्रधानशब्दवाच्यान् रमादीनधिकरणं कृत्वा वर्तते । तथा हि । महाप्रलये लक्ष्म्या सह रममाणान्नारायणाख्यात् त्वत्तोऽवतीर्णः पुमान् पुरुषनामा अमोघवीर्यो भवान् प्रधानाभिमानित्वात्तन्नाम्न्यां रमायां महान्तमिव स्थितं स्ववीर्यं धत्ते पुरुषनामानं चतुर्मखं प्रधानाख्यां गायत्रीं च सृष्टवानित्येकोऽर्थः । स पुमांश्चतुर्मुखो महान्तमिव गर्भं महत्तत्वाभिधमात्मानं श्रद्धाभिधां गायत्रीं च प्रधाननाम्न्यां गायत्र्यां धत्ते सृष्टवानित्यपरः। ताभ्यां महत्तत्वाख्यश्रद्धाख्याभ्यां शेषोऽहंकारापरनामा जात इत्यन्योर्थः । ''नारायणाख्यः परमः शेते लक्ष्म्यान्विते लये । स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः । कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् । प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः । चतुर्मुखः स पुरुषो महत्तत्वाभिधं पुनः । प्रधाननाम्न्यां गायत्र्यां ससर्जात्मानमेव तु । श्रद्धाभिधां च गायत्रीं ताभ्यां शेषोऽन्वजायत'' इत्यादिवाक्यात् सकृदुक्तवाक्यस्यान्वयभेदो युज्यते । सोयं महत्तत्वाख्यो ब्रह्मा यो नारायणादभिव्यक्तः पुरुषनामा स तेन त्वयाऽनुगतः प्रविष्टः श्रद्धाख्यगायत्रीं सृष्ट्वा अहंकारादितत्वैः सह आत्मनः परमात्मनः प्रवेशसामर्थ्यादुत्पादन-समर्थैर्बहिर्नवभिरावणैरुपेतं हैमं आण्डकोशं ससर्जेत्यन्वयः । ब्रह्मण आण्डकोशसृष्ट्यंगीकारे व्यक्तं सृजसीत्यस्य विरोधपरिहारार्थं त्वयानुगत इत्युक्तम् ॥ १६ ॥

**तत् सस्थुषश्च जगतश्च भवानधीशो**
**यन्माययोत्थगुणविक्रिययोपनीतान् ।**
**अर्थान् जुषन्नपि हृषीकपते न लिप्तो**
**येऽन्ये स्वतः परिहृतानपि बिभ्यति स्म ॥ १७ ॥**

**स्मायावलोकलवदर्शितभावहारि -**
**भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।**
**पत्न्यस्तु षोडशसहस्रमनङ्गबाणै -**
**र्यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ १८ ॥**

---

ननु तव सहकारिकारणत्वं मुख्यकारणत्वं चतुर्मुखस्य[१], अतः स्वामित्वं च तस्येति तत्राह **तत् तस्थुष इति** । यद्वा ननु सदा देवदत्तवत् विषयान् सेवमानस्य कथमीश्वरत्वमित्यत आह **तदिति** । यतो यदनुप्रवेशमन्तरेण एषां तत्वानां सर्जनशक्तिर्नास्ति तदनुप्रवेशे च साऽस्ति तस्माद् भवान् तस्थुषां जगतश्चाधिक ईशः । नन्वेतदधीशत्वं कथं ज्ञायत इति तत्राह **यदिति** । मायया इच्छयोत्थगुणविक्रियया संबद्धप्रकृतिगुणविकारेणोपनीतान् प्राप्तानर्थान् विषयान् तदिन्द्रियेषु स्थित्वा जुषन्नपि न लिप्त इति यत् तेनाधीश इति ज्ञायते । हृषीकपत इति संबुद्ध्या इन्द्रियस्वामित्वस्य जीवस्य सत्वेपि तदनियतत्वदर्शनादीशनियतत्वदर्शनाच्च हरेरिन्द्रियेशत्वं मुख्यमिति ज्ञायते । ननु योगिष्वनेकान्तोऽर्थालेपहेतुरत्राह येन्य इति । येऽन्ये योगिनः सनकादयः । परिहृतानिति द्वितीया पञ्चम्यर्थे । स्वतो भवतः प्रसादात् परिहृतेभ्यो विषयेभ्यो बिभ्यति स्म । अनर्थं स्मृत्वेति शेषः । भीत्रार्थानां भयहेतुरित्यतः पञ्चमी । अनेन विषयालेपनं योगिनां यत् तद् भगवत्प्रसादात् सादि च । भगवतस्तु स्वतः, नान्यनियतं नित्यं चेत्युक्तं भवति ॥ १७ ॥

विषयालेपो नाम तदजितत्वमित्याह **स्मायेति** । स्मायो मन्दहासः तेन सहितोऽवलोकः तस्य लवेन सह दर्शितो भावः शृङ्गारचेष्टा तया हारि मनोहरं भ्रूमण्डलं तेन सह प्रहितः प्रयुक्तः सौरतः सुरते विद्यमानो मन्त्रः तेन शौण्डैर्निशितैरनङ्गस्य बाणायमानैः करणैः आलिङ्गनादिलक्षणैः साधनैः । विमथितुं विलोडयितुं जेतुमित्यर्थः ॥ १८ ॥

---

१. ननु तव सहकारित्वं कारणत्वं च चतुर्मुखस्य इति पाठोऽनेकेषु कोशेषु ।

**बिभ्रत् तवामृतकथोदवहास्त्रिलोक्याः**
**पादावनेजसरितः शमलानि हन्तुम्।**
**आनुश्रुवं श्रुतिभिरंघ्रिजमङ्गसङ्गैः -**
**स्तीर्थद्वयं शुचिषदस्तदुपस्पृशान्ति ॥ १९ ॥**

**बादरायणिरुवाच -**

**इत्यभिष्टूय विबुधैः सेशः [१]सत्यधृतिर्हरिम्।**
**अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥**

---

यद्ययं भगवान् विषयलम्पटत्वेन स्त्रीजितः तर्हि तत्कथानदीस्नानं पापनाशनं न स्यात्, न च तथा, अतो निःसङ्गत्वेन स्त्रीजितो नैवेति तर्कं गर्भीकृत्य स्तुवन्ति **बिभ्रदिति**[२]। सप्तसु प्रथमेति सूत्राद् बिभ्रदिति प्रथमा षष्ठयर्थे। त्रिलोक्याः यदनन्यसाध्यं तत् सर्वं बिभ्रतस्तव अमृतकथोदवहाः अमृतकथालक्षणा नद्यः पादावनेजसरितश्चेति यत् तीर्थद्वयं तद् उपस्पृशन्ति स्नानादियोग्यं कुर्वन्ति[३]। अत्र किं प्रमाणमत्राह **आनुश्रवमिति**। श्रुतिप्रसिद्धमित्यर्थः। सम्यक् स्रवन्ति सरितोऽनघेनान्तर्हृदा मनसा पूयमाना इत्यादेः[४]। कुतोऽभूदित्यत उक्तम् अंघ्रिजमिति[५]। अन्यत्तु प्रसिद्धम्। अधिलघिगत्यर्थाविति धातुपाठः। कैः करणैः श्रुतिभिः श्रवणैरङ्गसङ्गैश्च। किं फल-मुद्दिश्य। शमलानि मलानि हर्तुम्। मलं विष्ठाघयोर्नस्त्रीति यादवः। शुचावग्नौ सीदति निषीदति तिष्ठतीति शुचिषत् तस्य। चन्द्रार्कमण्डलस्थस्य वा ॥ १९ ॥

सत्यधृतिर्ब्रह्मा ॥ २० ॥

---

१. शतधृतिरिति पाठान्तरम्।

२. विपयजितत्वाभावादेव त्वत्कथाश्रवणादिकं जगत्पावनमिति स्तुवन्ति बिभ्रदिति इत्यवतारिका एकस्मिन् कोशे।

३. अत्रान्वयस्तु नातिहृद्यः। किमपि गलितं स्यात्।

४. एतस्माद् परम् "गुरूच्चारणानन्तरं श्रूयमाणत्वादनुश्रवो वेदः। तत्सम्बन्धादानुश्रवं वैदिकं भगवद्यज्ञ-प्रतिपादकभारतादिशास्त्रम्" इत्यधिकः पाठ एकस्मिन् कोशे।

५. अङ्घ्रिजं क्रमणम्। क्रमणं च रूपाणां पराक्रमलक्षणकथा इत्यधिकः पाठ एकत्र।

**ब्रह्मोवाच -**

**भूमेर्भारावतराय पुरा विज्ञापितः प्रभो ।**
**त्वमस्माभिरशेषात्मंस्तत् तथैवोपपादितम् ।। २१ ।।**

**धर्मश्च स्थापितः सत्सु सत्यसंधेषु वै त्वया ।**
**कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ।। २२ ।।**

**अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ।**
**कर्माण्युदारवृत्तानि हितानि जगतोऽकृथाः ।। २३ ।।**

**यानि ते चरितानीश मनुष्याः साधवः कलौ ।**
**शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ।। २४ ।।**

**यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ।**
**शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ।। २५ ।।**

**नाधुना तेऽखिलाधार देवकार्येऽवशेषितम् ।**
**कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ।। २६ ।।**

**ततः स्वधाम परमं विशस्व यदि मन्यसे ।**
**सलोकं लोकपालान् नः पाहि वैकुण्ठकिङ्करान् ।। २७ ।।**

---

पञ्चविंशाधिकं पञ्चविंशत्यधिकम् । तदुक्तम् -''वत्सराणां शतं चैव ऋतूनां पञ्चविंशकम् । अवतीर्णस्य कृष्णस्य यदा प्रागात् तदा हरिम् । स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामरः'' इति ।। २१-२५ ।।

अवशिष्टदेवकार्यापेक्षयापि न स्थेयमित्याह **नाधुनेति** । यदुकुलमवशिष्टमपेक्ष्यापि न स्थेयमित्याह **कुलमिति** ।। २६ ।।

यादवानां देवत्वात् तत्स्थितौ कलेरप्रवेशात् तस्य चापेक्षितत्वात् तत्कुलसंहारार्थं किञ्चित्काल-स्थित्यपेक्षायां तत् कृत्वा झटिति स्वधाम प्रवेष्टव्यमित्याशयेनाह ततः **स्वधामेति** । तदुक्तं च - ''संवत्सरद्वयं चैव पश्चात् स्थित्वा जनार्दनः । अभिपेदे परं स्थानं चतुर्मासाधिकं पुनः'' इति ।। २७ ।।

श्रीशुक उवाच -

संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ।
प्रतिनन्द्याह तान् राजन् मायामनुज ईश्वरः ।। २८ ।।

श्री भगवानुवाच -

अवधारितमेतन्मे यदात्थ विबुधेश्वराः।
कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ।। २९ ।।

तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।
लोकं जिघृक्षत्यूर्ध्वं मे वेलामिव महार्णवः ।। ३० ।।

यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।
गन्तास्म्यनेन लोकोऽयमुल्बणेन विनङ्क्ष्यति ।। ३१ ।।

इदानीं नाश आरब्धः कुलस्य द्विजशापतः ।
यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ।। ३२ ।।

श्री शुक उवाच -

इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तम् ।
सह देवगणैर्देवः स्वं धाम समपद्यत ।।३३ ।।

---

अवधारितं निश्चितम् ।। २८-२९ ।। तर्हि कालक्षेपे किं कारणं तत्राह **तदिदमिति** । मे ऊर्ध्वं ममोर्ध्वलोकगमनानन्तरम् । ।लोकं जिघृक्षति प्राप्तुमिच्छति, अन्यायेनेति शेषः ।। ३० ।।

अनुपसंहारे को दोष इति तत्राह **अनेनेति** । उल्बणेन वीर्यशौर्यादिगुणैस्तीक्ष्णेन अनेन यादव-कुलेन । सतो यदुकुलस्योल्बणत्वं युगधर्मेण भविष्यतीत्यभिप्रायेणोक्तमाचार्यैः-''सतामपि कलौ प्राप्ते विकारो मनसो भवेत् । तस्माद् यदूंश्च संजह्रे नैते स्युः पापिनस्त्विति । पुनर्लोक-विवृध्द्यर्थमौत्तरेयादिकान् हरिः । आविश्य रक्षामकरोज्जगतः पुरुषोत्तमः । स्वात्मनःसहयानेन पुरुषार्थोधिको भवेत् । इत्यनुग्रहबुध्या च संजह्रे स्वकुलं विभुः ।'' इति ।। ३१ ।।

एतदन्ते एतस्य यदुकुलस्य संहारस्यान्ते । तव प्रीत्यै भवनं यास्यामि ।। ३२ ।।

अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान्।
विलोक्य भगवानाह यदुवृद्धान् समागतान्॥ ३४॥

श्रीभगवानुवाच -

एते वै सुमहोत्पाता ह्युत्तिष्ठन्तीह सर्वतः।
शापस्य नःकुलस्यासीद् ब्राह्मणेभ्यो दुरत्ययः॥ ३५॥

न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः।
प्रभासं सुमहापुण्यं यास्यामोऽद्यैव मा चिरम्॥ ३६॥

यत्र स्नात्वा दक्षशापात् गृहीतो यक्ष्मणोडुराट्।
विमुक्तःकिल्बिषात्सद्यो भेजे भूयःकलोदयम्॥ ३७॥

वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन् सुरान्।
भोजयित्वोषिजो विप्रान् नानागुणवतान्धसा॥ ३८॥

तेषु दानानि पात्रेषु श्रद्धयार्प्य महान्ति वै।
वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम्॥ ३९॥

श्री शुक उवाच -

एवं भगवताऽदिष्टा यादवाः कुरुनन्दन।
गन्तुं कृतधियस्तीर्थं स्यन्दनान् समयूयुजन्॥ ४०॥

तान् निरीक्ष्योद्धवो राजन् श्रुत्वा भगवतोदितम्।
दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः॥ ४१॥

विविक्त उपसंगम्य जगतामीश्वरेश्वरम्।
प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत॥ ४२॥

---

यत्र प्रभासे दक्षशापादुत्पन्नाद् यक्ष्मणःकिल्बिषात् प्रमुक्तोऽभूत्॥ ३३-३७॥

उशिजोऽग्नीन्॥ ३८॥

**उद्धव उवाच -**

देवदेवेश योगेश पुण्यश्रवणकीर्तन ।
संहृत्यैतत्कुलं नूनं लोकं संत्यक्ष्यते भवान् ।।
विप्रशापं समर्थोपि प्रत्यहन्न यदीश्वरः ।। ४३ ।।

नाहं तवांघ्रियुगलं क्षणार्धमपि केशव ।
त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ।। ४४ ।।

तव विक्रीडितं कृष्ण नृणां परममङ्गलम् ।
कर्णपीयूषमासाद्य त्यजत्यन्यस्पृहां जनः ।। ४५ ।।

शय्याटनासनस्थानस्नानक्रीडाशनादिषु ।
कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ।। ४६ ।।

त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ।। ४७ ।।

वाताशना महर्षयः श्रमणा ऊर्ध्वमन्थिनः ।
ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ।। ४८ ।।

वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ।। ४९ ।।

स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ।
गत्युत्स्मितेक्षणोत्केलि यन्नृलोक विडम्बनम् ।। ५० ।।

---

अरिष्टानि अशुभानि ।। ३९-४१ ।। भवान् समर्थोपि विप्रशापं न प्रत्यहन् यत् तस्मान्नूनमिदानीं लोकं सन्त्यक्ष्यते ।। ४२-४३ ।। शय्यासानादिषु त्वां सेवमाना भक्ताः प्रियम् ।। ४४-४६ ।। चर्चिता अलंकृताः । तवाधीनां मायां प्रकृतिम् ।। ४७ ।। श्रमणा भिक्षवः ऊर्ध्वमन्थिन ऊर्ध्वरेतस्काः । ।। ४८ ।। तावकैः तव भक्तैः सह त्वद्वार्तया ।। ४९।।

गत्युत्स्मितेक्षणोत्केलि यन्नृलोकविडम्बनं तानि तच्च स्मरन्तः । उत्पन्नतत्वज्ञानोऽप्युद्धवो भ्रमन्त

श्री शुक उवाच -

एवं विज्ञापितो राजन् भगवान् देवकीसुतः ।
एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥ ५१ ॥

॥ इति षष्ठोऽध्यायः ॥

॥ अथ सप्तमोऽध्यायः ॥

श्रीभगवानुवाच -

यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ।
ब्रह्मा भवो लोकपालाः सर्वे मामभिकाङ्क्षिणः ॥ १ ॥

मया निष्पादितं ह्यत्र देवकार्यमशेषतः ।
यदर्थमवतीर्णोऽहमंशेन ब्रह्मणाऽर्थितः ॥ २ ॥

कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योन्यविग्रहात् ।
समुद्रः सप्तमे ह्येनां पुरीं च प्लावयिष्यति ॥ ३ ॥

---

इत्यात्मनोऽवमतां वक्तीति यत् तत् साधूनां स्वभावप्रदर्शनाय । ''आत्मनोऽवमतां ब्रूयुरुत्तमा अपि सर्वशः । कदाचिदेव स्वगुणान् स्निग्धेष्वेव हि साधवः'' इति वचनादुक्तं युक्तमिति ॥ ५० ॥

एकः श्रीहरिरेव सर्वोत्तम इति भावो यस्य सः । एकान्तिनं मुख्यं प्रियमिति वा । एके मुख्यान्यकेवला इत्यभिधानम् । एकान्तिनमित्यवञ्चने हेतुः ॥ ५१ ॥

**॥ इति श्रीविजयध्वजतीर्थयतिविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य षष्ठोऽध्यायः ॥**

भगवान् यद्ववधूतसंवादकथनव्याजेनोद्धवाय स्वतत्वमुपदिशत्यध्यायत्रयेण । तत्रादावुद्धवोक्तं स्वाभीष्टमिति वदन् ब्रह्मादीनां स्वलोकगमनाभिलाषं देवकार्यकरणेनावतारप्रयोजनं स्वयात्रानन्तरं द्वारवत्याः समुद्रे मज्जनं लोकस्य पापबुद्धित्वेनामङ्गलत्वं कलिग्रस्तलोकादुद्धवस्य निर्याणप्रेरणं स्वस्मिन् मनः प्रविश्य महीपर्यटननियोगमित्यादि वक्ति **यदात्थ मामित्यादिना** । संहृत्यैतत् कुलमित्यादि यदात्थ । मां स्वलोकगतं कर्तुमभिकांक्षिणः । अभिकांक्षिता इति पाठे कर्तरि क्तः ॥ १-२ ॥

यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ।
भविष्यत्यचिरात् साधो कलिनापि निराकृतः ।। ४ ।।
न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ।
जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ।। ५ ।।

त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धनम् ।
मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम् ।। ६ ।।

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायां मनोमयीम् ।। ७ ।।

पुंसोऽयुक्तस्य नानार्थे भ्रमः स गुणदोषकृत् ।
कर्माकर्मविकर्मेति गुणदोषधियो भिदा ।। ८ ।।

तस्माद् युक्तेन्द्रियजयो युक्तचित्त इदं जगत् ।
आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ।। ९ ।।

---

स्वर्गारोहणानन्तरं सप्तमे दिवसे ।। ३ ।। यर्हि यदा ।। ४ ।। अधर्मरुचिरिति पदच्छेदः । समदृक् विधिरहितप्रीतिद्वेषहीनः ।। ५-६ ।।

क्षितिसञ्चरणे इत्थंभावविशेषमुपदिशति **यदिदमिति**। मन आदि सर्वेन्द्रियैर्गृह्यमाणं यदिदं विश्वं तदिदं नश्वरं क्षणभङ्गुरं विद्धि । नन्विदमनिर्वाच्यं तर्हीति तत्राह विद्धीति । विद्धीत्युभयत्र संबध्यते । मनोमयीं मायां च मन्मनःप्रधानप्रकृतिनिर्मितं विद्धि । मे बुद्धिं प्रधानीकृत्य प्रकृत्या रचितत्वान्नानिर्वाच्यं विद्धि (इति) । मृद्घट इतिवन्मायामयमिति प्रयोगो युज्यते । अचेतनप्रकृतेः कार्यात्मकत्वमस्तु चेतनायाः कथमितीयमाशङ्का ''प्रकृतिः सा परा मह्यं रोदसी लोकधारिणी । ऋता सत्याऽमराऽजय्या लोकानामात्मसंज्ञिता'' इत्यनेन परिहर्तव्या। प्राधान्यापेक्षयोपपद्यत इत्यर्थः ।। ७ ।।

एवं प्राधान्यज्ञानपूर्वकं भक्त्या मयि मनो युञ्जानस्य योगिनोऽनर्थोपशमो नान्यस्येत्याह **पुंस इति**। यद्वा जगतो मदधीनत्वं विद्धीत्युक्तम्। तत् कुत इत्याशंक्यान्यथाज्ञाने बाधकमाह **पुंस इति**। अयुक्तस्य मयि मनोयोगरहितस्य पुंसो मत्प्रेरितप्रकृतिरचिते नानाविधेऽर्थे यो भ्रमो मामन्तरेण

ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ।
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यते ।। १० ।।

दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।
गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः ।। ११ ।।

सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चलः ।
पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ।। १२ ।।

**श्रीशुक उवाच -**

इत्यादिष्टो भगवता महाभागवतो नृप ।
उद्धवः प्रणिपत्याह तत्वजिज्ञासुरच्युतम् ।। १३ ।।

---

स्वकर्तृत्वज्ञानं स गुणदोषकृत् स्वर्गनरककृत् । अनेन तद्भोज्यसुखदुःखात्मकोऽपारः संसारो लक्ष्यत इति ज्ञातव्यम् । तदुक्तम् -''स्वर्गाद्याश्च गुणाः सर्वे दोषाः सर्वे तथैव च । आत्मनः कर्तृताभ्रान्त्या जायन्ते नात्र संशयः । परमात्मानमेवैकं कर्तारं वेत्ति यः पुमान् । स मुच्यतेऽस्मात् संसारात् परमात्मनमेति च'' इति । भ्रमस्य निमित्तमाह **कर्मेति** । सर्वं हि परमेश्वरः करोतीतीश्वराधीनक्रियायां इदं मया क्रियते इदं मया न क्रियते इदं विपरीतं क्रियत इति कर्माकर्मविकर्मेति भिदाबुद्धिभ्रमो गुणाभ्यां रजस्तमोभ्यां दोषधियो दोषबुद्धेः पुरुषस्य भवतीति यत् तस्माद् भ्रमस्य मूलकारणं रजस्तमसोः शक्तिं विज्ञाय तौ परिहृत्य विषयादाहृत्य मय्येव स्थापनेन युक्तेन्द्रियजयो युक्तचित्तस्त्वम् इदं जगद् आत्मनि विरिञ्चे ईक्षस्व । कार्यकारणमात्मके जगति विततं विस्तृतशक्तिमात्मानं विरिञ्चिम् अधीश्वरे मयि ईक्षस्व मदाधारं पश्येत्यन्वयः । तदुक्तम् -''आत्मशब्दोदितो ब्रह्मा परमात्माभिधो ह्यहम् । सर्वं ब्रह्मणि वीक्षेत मयि ब्रह्माणमेव च'' इति ।। ८-९।।

बलवत्प्रतिबन्धके सत्यन्तरायैरुक्तवीक्षणप्रकारो विहतः स्यादित्यत्राह **ज्ञानेति** । शरीरिणामात्मभूतः आत्मवद् भूतः । आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुनेति वचनात् आत्मौपम्येन सर्वाणि भूतानि पश्यन्नित्यर्थः । आत्मनो परमात्मनोऽनुभवेनैव तुष्ट आत्मा मनो यस्य स तथा । अनेन तदधिगम उत्तरपूर्वाघयोरश्लेशषविनाशौ तद्व्यपदेशादिति सूत्रार्थो दर्शित इति ।। १० ।।

एवंविधज्ञानिनः कर्मकरणप्रकारं श्लोकद्वयेनाह **दोषबुद्ध्येति** । यः शान्तः क्रोधरहितः ज्ञानविज्ञानाभ्यां वैष्णवसिद्धान्ते निश्चलः पर्वतवत् स्थिरो विश्वं मदात्मकं मम सर्वस्वातन्त्र्यान्मदधीनं

**उद्धव उवाच -**

**योगेश योगविन्यास योगात्मन् योगसम्भव ।**
**निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १४ ॥**

**त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः ।**
**सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ १५ ॥**

---

पश्यन्, अत एव ममाधिष्ठनत्वेन सर्वभूतसुहृत् विश्वेषां भूतानां निरुपाधिकप्रीतिकृत्, अत एवोभयातीतः ऐहिकामुष्मिकविषयविरक्तो निषिद्धाचरणाद् दोषः स्यादिति दोषबुद्ध्या तद्दोषानुत्पत्तये निषेधात् निषेधवचनात् न निवर्तते । विहितकरणात् सुखादिगुणो भवतीति गुणबुद्ध्या विहितं न करोति । किं तर्हि । यथा अर्भकः फलानुसन्धानरहितः क्रीडालक्षणं कार्यं करोति तथा । किन्तु स्वतन्त्रकर्ता नारायण एव मयि स्थित्वा विहितकरणे प्रेरयति निषिद्धान्निवर्तयति तद्भक्तिरेव मम तत्फलमिति निरूप्य कर्म करोति । स पुनर्न विपद्येत संसारलक्षणां विपदं नाप्नोतीत्यन्वयः । ''कर्तृत्वमात्मनो यस्माज्ज्ञाननिष्ठो न मन्यते । अतोऽकुर्वन्नपि सदा दोषबुद्ध्या न निन्दित[illegible]बुद्ध्या न विहितं किन्त्वीशप्रेरितोऽस्म्यहम् । स एव च मयि स्थित्वा निन्द्यानिन्द्ये करोत्यजः । न मे दोषो न च गुणः कर्तृत्वाभावतः स्फुटम् । स्वतन्त्रत्वान्न चेशस्य येऽज्ञास्तेषु भवेदपि । इति मत्वा निवर्तेत निन्द्यात् कुर्याद् गुणानपि'' इति वाक्यसिद्धोऽयमर्थः । ये अज्ञास्तेषु अज्ञेषु दोषो गुणश्च भवेदित्यर्थः । अनित्या मे गुणा न स्युर्दोषा नैव कथञ्चन । इति मत्वा शुभं कुर्यान्निवर्तेदशुभादपि । ज्ञानी त्वकर्तृतामानादीशकर्तृत्वनिश्चयात् । किन्तु पूर्णगुणायैव नतु दोषापनुत्तये । न चाल्पगुणसिद्ध्यर्थं बालवत् कृतनिश्चयः'' इत्येतदप्युक्तार्थे मानम् । ''वैलक्षण्याद् हरेर्भिन्नं तत्तन्त्रत्वात् तदात्माकम् । इति विश्वं प्रपश्यन्ति ज्ञाननिष्ठा हरेः प्रियाः'' इत्येतद् ज्ञानार्थिना विश्वमेवं द्रष्टव्यमित्यस्मिन्नर्थे मानम् ॥ ११-१२ ॥

उद्धवः स्वाभिलषितं विज्ञापयिष्यन् प्रकरणानुगुणस्तुत्या भगवन्तमभिमुखीकुर्वन् उक्तमर्थमनुवदति **योगेशेति** । योगस्य यमनियमादेरीश । योगस्य ज्ञानस्य विशेषेण न्यासो देवादिषु येन स तथा, तस्य सम्बोधनं योगविन्यासेति । योगात्मन् ज्ञानस्वरूप । योगसम्भव उपायजनक । ''ज्ञानं तु योगशब्दोक्तं युज्यतेऽनेन यत् सुखम् । क्वचिद् योग उपायः स्यात् क्वचिच्चित्तनिरोधनम्'' इति । त्यागं दानाद् व्यावर्तयति संन्यासलक्षण इति । सर्वदुष्टसङ्गपरित्यागलक्षण इत्यर्थः ॥ १३-१४ ॥

ततः किमत्राह **त्याग इति** । कामानामयं त्यागः सुतरां त्वय्यभक्तैः दुष्करः ॥ १५ ॥

**सोऽहं ममाहमिति मूढमतिर्विगाढ -**
**स्त्वन्मायया विरचितात्मनि सानुबन्धे ।**
**तत्त्वञ्जसा निगदितं भवता यथाऽहं**
**संसाधयामि भगवन्ननुशाधि भृत्यम् ॥ १६ ॥**

**सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं**
**वक्तारमीश विबुधेष्वपि नानुचक्षे ।**
**सर्वे विमोहितधियस्तव माययेमे**
**ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥**

---

विषयात्मभिर्दुष्करत्वेपि तव किमित्यतः स्वेनापि दुष्करत्वमभिप्रेत्य स्वस्य विषयात्मतां वदन् स्वाभिलषितं विज्ञापयति **सोहमिति** । यस्त्वयाऽनुशिष्टः सोहं सानुबन्धे पुत्रकलत्राद्यनुबन्धसहिते त्वन्मायया त्वदिच्छया प्रकृत्या च विरचिते निर्मिते आत्मनि देहे ममाहमिति मूढमतिः विगाढो मग्नोऽस्मि । अतो भवता निगदितं तत्प्रमेयं यथाहमञ्जसा झटिति, द्राग् झटित्यञ्जसाह्नायेत्यभिधानम्, संसाधयामि तथा भृत्यं मामनुशाधि ॥१६ ॥

तव मत्स्वरूपोपदेष्टा मत्तोऽन्यः किं न स्यादत्राह **सत्यस्येति** । ते तव स्वरूपस्य वक्तारमात्मनः त्वत्तोऽन्यं पुरुषं नानुचक्षे न पश्यामि । कीदृशस्य । सत्यस्य साधुज्ञानादिगुणस्य । यद्वा सत्त्वं यापयति प्रापयतीति सत्यस्तस्य जगत्सृष्ट्यादिकर्तुः । अत्र हेतुमाह स्वदृश इति । स्वदृशः स्वयं प्रकाशमानस्य । यद्वा स्वत एव स्वपरगताशेषविशेषद्रष्टुः । आत्मनः सर्वव्यापिनः । एतेन सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्युक्तलक्षणस्येत्युक्तं भवति । मनुष्येष्वभावेपि देवेषु स्यादत उक्तम् **विबुधेष्विति** । उक्तं विशिनष्टि **सर्व इति** । ब्रह्मा आदिः कारणं येषां रुद्रादीनां ते तथोक्ताः[1] । ते तव माययेच्छया विमोहितधियः । कुतः[2] । तत्राह **तनुभृत इति** । शरीराभिमानिनः । अत एव बहिरर्थभावाः मोक्षतदुपयोगिभ्योऽन्यत्रापि कामनायुक्ताः । अस्य श्लोकस्यार्थः ''अशरीरः सदा विष्णुः पूर्णानन्दत्वतः सदा । इच्छा च क्रीडयैवास्य न फलाय यतो विभोः । अतो बाह्यार्थकामोऽपि निष्काम इति कथ्यते । ब्रह्मा निरभिमानित्वाच्छरीर्यप्यशरीरवान् । नित्यानन्दोपयोग्यन्यकामस्योज्झिततः सदा । बहिरर्थविनिर्मुक्तस्तथापि तनुधारणात् । अमूढो मूढ इतिवदुच्यते च सरस्वती ।

---

१. इदं वाक्यं स्फुटं प्रक्षिप्तम् । मूलविरोधात् तात्पर्याननुग्रहाच्च ।

२. अन्यच्च हेतुद्वयं तनुभृतः बहिरर्थभावा इति इति पाठान्तरम् ।

**तस्माद् भवन्तमनवद्यमनन्तपारं**
**सर्वज्ञमीश्वरमखण्डविकुण्ठधिष्ण्यम् ।**
**निर्वेदधीरहरहर्वृजिनाभितप्तो**
**नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥**

**श्री भगवानुवाच -**

**प्रायेण मनुजा लोके लोकतत्वविचक्षणाः ।**
**समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥**

---

रुद्राद्यास्तन्वभीमानाद् बहिरर्थ [illegible]नस्तथा । सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु । अभावस्त्वपरोक्षस्य मोहो ज्ञानस्य भण्यते । ब्रह्मणस्त्वंशरूपेषु भारत्या ज्ञानवर्जनम् । ब्रह्मगायत्रिभावे तु नांशावतरणं क्वचित् । शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते । अपरोक्षेण पारोक्ष्यात् पूर्णज्ञानं सदैव तु । शतजन्मगतायाश्च आपरोक्ष्योज्झितिर्भवेत् । क्वचित् क्वचित् सरस्वत्या अंशावतरणेष्विति'' इति शक्तिविवेकग्रन्थादवगत इति । अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराणि वा एतानीति श्रुतिरत्र मानम् । ''श्रुतिभिः स्तनितत्वात्तु स्तनयित्नुर्हरिः स्मृतः । अभ्रं भूताभिभरणाच्छ्रीर्वायुर्भरतः स्मृतः । विद्युत्तु भारती प्रोक्ता एत एव शरीरिणः । व्यत्यासेनापि नाम स्यादेतेषां महतां सदा'' इत्यनेन श्रुत्युक्ता एत एवेति विज्ञायते ॥ १७ ॥

यस्माद् भगवतोऽन्यो वक्ता नास्ति तस्मादहं नारायणं शरणं प्रपद्ये, मम ज्ञानोपदेशायेति शेषः । भवन्तं पूज्यम् । अनवद्यत्वं पूज्यत्वे हेतुः । अनवद्यत्वे हेतुरनन्तपार[illegible] यद्यनन्तपारत्वं तर्हि स्वस्याज्ञानं प्राप्तमत उक्तं **सर्वज्ञमिति** । बलवत्प्रतिबन्धकत्वेन क्वचित् [illegible]ानमलब्धं स्यादत उक्तं **ईश्वरमिति** । देशप्रभुवदीश्वरस्यापि स्थानच्युतिः स्यादत्राह **अखण्डेति** । अखण्डमविच्छिन्नमा[illegible]कुण्ठमविनाशि च धिष्ण्यं स्थानं यस्य स तथा । नञ् उभयत्र संबध्यते । शरणप्राप्तौ हेतुमाह **निर्वेदेति** । कुतो निर्वेद इत्यत्राह **वृजिनेति** । एवं विशिष्टोपि नारायणोऽन्यः किं न स्यादित्यत्राह **नरसखमिति** । एतद् विशेषणं हरेरिति कुत इतीयमाशङ्का ''विष्णोर्वायोरनन्तस्य त्रिभिरंशैर्नरः स्मृतः । सैन्द्रैश्चतुर्भिः पार्थस्तु द्वाभ्यां तु बललक्ष्मणौ'' इत्यनेन परिहर्तव्या ॥ १८ ॥

लोकतत्वविचक्षणस्योद्धवस्य पुनस्तत्वज्ञानप्रश्नः किमर्थ इत्याशंक्य परोक्षलोकतत्वज्ञानस्य सत्स्नेहमन्तरेणोत्पन्नस्य पुरुषार्थसाधनत्वं न स्यात् प्रत्युतानर्थहेतुत्वं च, अपरोक्षज्ञानानुत्पादादित्याशयेनाह **प्रायेणेति** । अस्येयमक्षरयोजना । प्रायेण बहुलं लोके ये मनुजा लोके तत्वे च विचक्षणाः

**आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ।**
**यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ २० ॥**

**पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ।**
**आविस्तारं प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥ २१ ॥**

---

सत्स्नेहनिर्मुक्तपरोक्षज्ञाननिपुणाः ते आत्मनैव प्रयत्नेनैव अशुभाशयात्, ल्यब्लोपे पञ्चमी, पापफलदुःखबहुलं तमः प्राप्यात्मानं समुद्धरन्ति निर्मूलयन्ति हि यस्मात् तस्मात् सत्स्नेहयुक्ता लोकतत्वपरोक्षज्ञानविद्याविशारदाः आत्मनैव सात्विकमनसैव आविर्भूतापरोक्षज्ञानेनैव अशुभाशयात् पापकारणात् संसारादात्मानं समुद्धरन्ति उन्नयन्ति पन्नगं कूपादिवेति । अनेन भगवद्भक्त्युत्पन्नं ज्ञानं पुरुषार्थोपयोगीति ज्ञानसमुद्रमग्नस्यापि मम श्रेयसे भगवदपरोक्षज्ञानोत्पत्तिप्रकारो वक्तव्य इति तत्प्रश्नः सार्थक इति । यत्नेऽर्केऽग्नौ मनस्यात्मेत्यभिधानादात्मशब्दो यत्नादौ वर्तत इति सिद्धम् । ''पारोक्ष्येणैव तत्वं तु लोकं चापि वदन्ति ये । तेऽपि सत्स्नेहनिर्मुक्तास्तमो यान्ति विनिश्चयात् । आपरोक्ष्यं न च ज्ञानं तेषामुत्पद्यते क्वचित् । ''इति वचानदुक्तोऽर्थभेदः सिद्ध इति सन्तोष्टव्यम् ॥ १९ ॥

आत्मनैवेत्येवकारेण श्रेयःसम्पत्तौ सात्विकमनसः प्राधान्यमुक्तम् । तदेव प्रतिपादयति **आत्मन इति** । आत्मनो जीवराशेः श्रेयःसम्पादने गुरुरुपेदेष्टा आत्मैव मन एव । मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहतीति श्रुतेः । अत सातत्यगमन इति धातोर्निष्पन्नेनात्मशब्देन शरीर्येव लक्ष्यते, तस्यैव गमनसंभवात् । तत्रापि विशेषतः पुरुषार्थलक्षणश्रेयःसम्पत्तौ पुरुषस्य मनुष्यशरीरं प्राप्तस्य आत्मन आत्मैव गुरुरिति संबध्यते । कुत एतदत्राह **यदिति** । असौ पुरुषो मानुषशरीरं प्राप्तो जीवः प्रत्यक्षानुमानाभ्यां श्रेयः पुरुषार्थं विन्दत इति यदत इति मनःपूर्वकं चक्षुषा कृष्यादिना व्रीह्यादि-सम्पल्लक्षणश्रेयःप्राप्तिदर्शनेन यागादिसाधनसामाग्र्या स्वर्गादि श्रेयः प्राप्यत इत्यनुमीयत इति ॥ २० ॥

एतदेव विशदयति **पुरुषत्व इति** । पुरुषत्वे मनुष्यशरीरप्राप्तौ सत्यां सांख्ययोगविशारदाः सांख्ययोगयोः भगवत्प्रीतिजनकज्ञानकर्मणोः विशारदाः, भगवत्प्रीत्यैव भगवदर्पण-बुद्ध्याऽनुष्ठीय-मानसाधना इत्यर्थः । धीराः धियि रममाणाः । सर्वशक्त्युपबृंहितं मामाविस्तारं स्वबुद्ध्यनुसारेण यथायोग्यं विश्वरूपपर्यन्तं प्रपश्यन्ति । यद्वा आ सन्तापः, आ संसारसन्तापं वि विविधं तारयतीत्या-विस्तारस्तम् । आस्तु सन्तापकोपयोरिति यादवः । नित्याविर्भूतनैर्मल्यं वा । यत्र विष्णुर्गुणाधिक्यं

**एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः ।**
**बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥**

**अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ।**
**गृह्यमाणैरात्मलिङ्गैः स्वबाह्यमनुमानतः ॥ २३ ॥**

**अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**अवधूतस्य संवादं यदोरमिततेजसः ॥ २४ ॥**

**अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ।**
**कविं निरीक्ष्य निपुणं यदुः पप्रच्छ धर्मवित् ॥ २५ ॥**

**कुतो बुद्धिरियं ब्रह्मन्नकर्तुस्ते विशारदा ।**
**यामासाद्य भवान् लोकान् विद्वांश्चरति बालवत् ॥ २६ ॥**

---

दर्शयेद् वस्तु तद् वरमिति पुरुषदेह एव पश्वादिदेहेभ्यः स्वसन्निधानातिशयेन बुद्धिवैशद्यसम्भवादिति भावः ॥ २१ ॥

बह्वीष्वासु पूर्षु का पूस्तव प्रेष्ठेति तत्राह **तासामिति** ॥ २२ ॥

तत्र कारणमाह **अत्र मामिति** । अत्र पुरुषशरीरे मनोयोगयुक्ता योगिनः स्वतो बाह्यमीश्वरं मामद्धा प्रत्यक्षीकर्तुं मार्गयन्ति विचार्य ज्ञातुं यतन्ते । कैः । हेतुभिः सद्युक्तिभिः । अनुमानतः विनिर्दोषपञ्चावयवलक्षणवाक्यात्मकैः । किं प्रमाणकैः । चक्षुरादिना गृह्यमाणै रूपादिभिरात्मनः परमात्मनो लिङ्गैः गमकैर्ज्ञापकैः । जीवस्य दर्शनादिस्वातन्त्र्याभावेन तत्कर्ता अन्य ईश्वरोऽप्यस्तीत्यनुमीयत इति ॥ २३ ॥

यथाहं संसाधयामि तथा मां शाधीत्युद्धववाक्यमवधारयन् उक्तमर्थमितिहासेन संवेदयति **अत्रेति** । अत्र पुरुषशरीरे अहं निर्मार्गणेन सुलभ इत्येतस्मिन्नर्थे अवधूतयदुसंवादरूपमितिहासं पुरावृत्तमुदाहरति । अस्यैव विवरणं पुरातनमिति । अमिततेजसः अनल्पबलस्य । तेजो बले प्रभावेऽग्नौ ज्योतिष्यर्चिषि रेतसीति च ॥२४॥

कुतो गुरोः । अकर्तुर्निषिद्धाचरणरहितस्य अशनादिप्रवृत्तिशून्यस्य च ॥ २५-२६ ॥

प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ।
हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥ २७ ॥

त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ।
न कर्तुमीहसे किञ्चिज्जडोन्मत्तपिशाचवत् ॥ २८ ॥

जनेषु दह्यमानेषु कामलोभदवाग्निना ।
न तप्यसेऽग्निना मुक्तो गङ्गाम्भस्थ इव द्विपः ॥ २९ ॥

त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥

श्री भगवानुवाच -

यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ।
पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥ ३१ ॥

---

बालवत् संचरणं ज्ञानसम्पादनाय किं न स्यादित्याशंक्य सत्यं नायं मनुष्यधर्मः किन्तु तेषां धर्मादिष्वेव प्रवर्तनं, आत्मतत्वविवित्सायां सत्यां चेत्याह **प्राय इति** । प्रायो मानवाः परमात्मतत्वविवित्सायां सत्यां चेह धर्मादिष्वेव समीहन्ते प्रवर्तन्ते आयुरादिप्राप्तये च । हेतुना तत्प्राप्तिसाधनसामग्र्येण ॥ २७ ॥

तद्वैलक्षण्यमाह **त्वंत्विति** । शक्त्यादिसाधनसामग्र्यभावादेवमवस्थानमिति तत्राह **कल्प इति** कल्पः समर्थः, ऊहापोहविशारद इति यावत् । कविर्विवेकी, दक्षो कायबलवान्, सुभगः सुन्दरः । कस्यचित् कर्मणः किञ्चिन्नेहसे च । न कर्तुमिच्छसे किञ्चिदिति क्वचित् पाठः । जडोन्मत्तपिशाचवच्चरसि ॥ २८ ॥

स्पर्शविहीनस्य विषयभोगविहीनस्य । केवलात्मनः शरीरमात्रपरिग्रहस्य ॥ २९-३० ॥

ब्रह्मण्येन सुमेधसेत्युपदेशार्हतामाह । निरपेक्षस्य प्रतिवचने हेतुं सूचयति **सभाजित इति** ॥ ३१ ॥

ब्राह्मण उवाच -

सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः ।
यतो बद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥ ३२ ॥

पृथिवी वायुराकाश आपोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद् गजः ॥ ३३ ॥

मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ।
कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥

एते मे गुरवो राजन् चतुर्विंशतिराश्रिताः ।
शिक्षावृत्तिभिरेतेषामन्वशिक्षमहं ततः ॥ ३५ ॥

यतो यदनुशिक्षामि यथा वा नाहुषात्मज ।
तत् तथा पुरुषव्याघ्र निबोध कथयामि ते ॥ ३६ ॥

भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ।
तद्विदां न चलेन्मार्गादनुशिक्षन् क्षितेर्व्रतम् ॥ ३७ ॥

शश्वत् परार्थसर्वेहां परार्थैकान्तसंभवम् ।
साधुः शिक्षेत भूमेश्च अनुशिक्षं व्रतान्तरम् ॥ ३८ ॥

---

बुद्ध्युपाश्रिताः बुद्ध्या संगृहीताः । यतो येभ्यः । शिक्षावृत्तिमुपादाय । शरीराभिमानमुक्तः । तान् गुरून् ॥ ३२ ॥ एतेषां पृथिव्यादीनां शिक्षावृत्तिभिः शिक्षाकरणीभिः वृत्तिभिः ॥ ३३-३५ ॥ यतो यस्मात् पृथिव्यादेः यद् वर्तनं अन्वशिक्षं शिक्षामि शिक्षेत् तत् तथा निबोध । बोधतिः परस्मैपदी ॥ ३६ ॥

क्षितेः शिक्षितां बुद्धिमाह **भूतैरिति** । तद् दैवं विन्दन्तीति तद्विदः तेषां दैवज्ञानां मार्गात् । तद्विद्वानिति पाठे तस्य दैवस्य वशानुगत्वं जानन् मार्गात्, सतामिति शेषः । क्षितेर्व्रतमचलत्वम् । अत एवाचलेति पृथिव्या नामान्तरम् ॥ ३७ ॥

भूमेः शिक्षितं व्रतान्तरं बुद्धिं चाह **शश्वदिति** । सर्वदा परेषां गुरुदेवादिसज्जनानामर्थे आत्मनः सर्वेहां सकलचेष्टां संभवं वृद्धिं च । ''सज्जनार्थेऽनुमन्येत ऐहिकीं वृद्धिमात्मनः'' इत्यादेरयमेवार्थ इति । शिक्षेत, नियमेनेति शेषः ॥ ३८ ॥

**प्राणवृत्त्यैव सन्तुष्यन् मुनिर्नैवेन्द्रियप्रियैः ।**
**ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ ३९ ॥**

**विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः ।**
**गुणदोषान्वयेनात्मा न विषज्जेत वायुवत् ॥ ४० ॥**

**पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ।**
**गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥ ४१ ॥**

**अन्तर्बहिश्च स्थिरजङ्गमेषु**
**ब्रह्मात्मभावेन समन्वयेन ।**
**व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो**
**मुनिर्नभोवद् विततस्य भावयेत् ॥४२॥**

---

एवंविधज्ञानानि शिक्षमाणस्य मुनेर्वृत्तिप्राकरमाह**प्राणवृत्त्येति**। मुनिर्यावत् प्राणवृत्त्या शरीरयात्रया सन्तुष्येत् तावत्यैव निर्वहेत् । एवकारव्यावर्त्यमाह **नैवेति** । तत्रापि ज्ञाननाशकारणानि मनोविक्षेपनिमित्तानि च द्रव्याणि न सेवेतेत्याशयेनाह **ज्ञानमिति** ॥ ३९ ॥

वायोः शिक्षिता का बुद्धिरिति तत्राह **विषयेष्विति**। विषयेष्वाविशन् विषयाननुभवन् योग्यात्मा योगी जीवः गुणदोषसम्बन्धेन न विषज्जेत संसक्तो न भवेत्। गानादिनानाधर्मेषु ॥ ४० ॥ पार्थिवेषु पृथिवीकार्येषु प्रविष्टः । तद्गुणाश्रयः जन्मदुःखादिदेहधर्माश्रयः । गुणैर्दुःखादिभिः ॥ ४१ ॥

नभसः शिक्षितमाह **अन्तरिति** । मुनिर्विततस्य व्याप्तस्याकृतितः । आत्मनः परमात्मनः । नभोवदव्यवच्छेदं व्याप्तत्वमखण्डत्वमित्यर्थः । असङ्गमसङ्गत्वं च भावयेत् चिन्तयेत् । कुत्र कथमत उक्तं **स्थिरजङ्गमेषु**। स्थिरजङ्गमेषु चराचरात्मकेषु वस्तुषु अन्तरात्मभावेन अन्तर्यामित्वेनाणुत्वव्याप्त्या बहिर्ब्रह्मभावेन बृहत्त्वेन महत्त्वव्याप्त्या (इति) । इदं केन सिद्धमत्राह **समन्वयेनेति** । उपक्रमादितात्पर्यलिङ्गयुक्तप्रमाणेन । आत्मभावेन स्वैक्येनेत्यन्यथाव्याख्यानं ''जीवान्तर्यामको विष्णुरात्मनामा समीरितः । तस्य तु ब्रह्मरूपत्वाद् बहिरन्तस्तथैव च । पश्येदाकाशवद् व्याप्तिमसङ्गस्य च नित्यशः'' इति प्रमाणविरुद्धम् । तस्मान्नांगीकर्तव्यः सोऽर्थ इति ॥ ४२ ॥

**तेजोम्ब्वन्नमयैर्भावै मेंघाद्यैर्वायुनेरितैः ।**
**न स्पृश्यते नभस्तद्वत् कालसृष्टैर्गुणैः पुमान् ।। ४३ ।।**

**स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थवन्नृणाम् ।**
**मुनिः पुनात्यघान्मित्रमीक्षणस्पर्शकीर्तनैः ।। ४४ ।।**

**तेजस्वी तपसा दीप्तो दुर्धर्षो दूरभाजनः ।**
**सर्वभक्षोपि युक्तात्मा नादत्ते पापमग्निवत् ।। ४५ ।।**

**क्वचिच्छन्नः क्वचित् स्पष्ट उपास्यः श्रेय इच्छताम् ।**
**भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम् ।। ४६ ।।**

---

असङ्गप्रकारमाह तेज इति । यथा नभो वायुनेरितैः मेघाद्यैर्न स्पृश्यते तद्वत् तथा पुमान् परः पुरुषः कालसृष्टैः तेजोम्ब्वन्नमयैः गुणैर्विषयैः न स्पृश्यत इत्यन्वयः ।। ४३ ।।

अद्भ्यः शिक्षितां बुद्धिमाह **स्वच्छ इति** । तीर्थवद् गंगादिशुद्धजलवत् । प्रकृतितः स्वभावतः स्वच्छः । प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारण इत्यभिधानम् । ननु जीवस्य स्वच्छगुणत्वे जीवपरयोः को विशेष इतीयमाशङ्का स्वच्छत्वादयो गुणा हरेः स्वतः सिद्धा जीवस्येष्टव्याः स्वीकर्तव्या इति परिहर्तव्या । तदुक्तम् ''गुणान् जीवस्य चेष्टव्यान् सिद्धान् विष्णोर्गुणांस्तथा । तत्तद् दृष्ट्वा विचिन्वीत पृथगेव सुधीः सदा'' इति । माधुर्यः सुखहेतुः । ''मधुनाम सुखं विद्यान्माधुर्यं सुखहेतुता । सुखे रतिर्वा सम्प्रोक्ता शब्दतत्वविचक्षणैः'' इति वचनात् । मुनिर्मित्रं स्वाश्रितं पुनाति । ईक्षणमीक्षा ।। ४४ ।।

अग्नेः शिक्षितां बुद्धिविशेषमाह **तेजस्वीति** । तेजस्वी प्रभाववान् । अन्यत्र अर्चिष्मान् । तपसा उपवासादिना, अन्यत्र सन्तापहेतुज्वालया दीप्तः प्रकाशनशक्तिमान् । दुर्धर्षः पराभावयितुमशक्यः । ''पराभावो धर्षणं स्यादवज्ञानमथापि वा । न तत् सत्सु सदा कुर्यात् सहासाशयनं न च'' इति वचनात् । दूरभाजनो दूरान्निषेव्यः । युक्तात्मा परमात्मनि युक्तमनाः । एवंविधो ज्ञानी सर्वभक्षोपि पापं नादत्ते । अपरोक्षज्ञानिनोपि हि सर्वभक्षणं सर्वान्नानुमतिः प्राणात्यये तद्दर्शनादित्यापद्विषये । कथम् । अग्निवत् ।। ४५ ।।

क्वचिच्छन्नः दुष्टजनसन्निधौ क्वचित् स्पष्टः सज्जनसमीपे । आत्मज्ञानादिलक्षणं श्रेय इच्छतां पुंसामुपास्यः दातॄणां प्रागुत्तराशुभं दहन् सर्वत्र सर्वं भुङ्क्ते । मुन्यग्न्योः साम्यमिदम् ।। ४६ ।।

**स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ।
प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि ॥ ४७ ॥**

**विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः ।
कलानामिव चन्द्रस्य कालेनालक्ष्यवर्त्मना ॥ ४८ ॥**

**कालनद्योघवेगेन भूतानां प्रभवाप्ययौ ।
नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथाऽर्चिषाम् ॥ ४९ ॥**

---

अग्नेः शिक्षितं परमात्मज्ञानमाह **स्वमाययेति** । स्वमायया स्वेच्छाधीनप्रकृत्या सृष्टं सदसल्लक्षणं स्थूलसूक्ष्मरूपं जगत् प्रविष्टः तत्तत्सरूपः तत्तत्पदार्थानुगुणरूप ईयते । कथम् । एधसि प्रविष्टः एधोरूपोऽग्निरिव । अत्र जीवस्य छन्नत्वं परमात्मनः प्रविष्टत्वं चेति विशेषणं ज्ञातव्यम् । "जीवस्य छन्नतां शिक्षेत् प्रविष्टत्वं परात्मनः । तत्तद्गुणविडम्बं च वह्नेः सर्वमथापि च" इति वचनात् । अल्पदारौ यथाऽल्पोऽग्निरेवमल्पशरीरगः । दृश्यते परमात्मापि स्थूलः स्थूलशरीरगः" इति ॥ ४७ ॥

चन्द्रमसः शिक्षितां बुद्धिमाह **विसर्गाद्या इति** । विविधाः सर्गाद्या जननाद्याः श्मशानान्ताः मरणान्ता देहस्यैव नात्मनो जीवस्य । चन्द्रस्य कलानां क्षयादिकं यथा न चन्द्रस्वरूपस्य ॥ ४८ ॥

कालवेगेन प्रतिक्षणमपि देहादीनां सूक्ष्मावुत्पत्तिनाशौ स्त इति सोदाहरणमाह कालेति । कालाख्यनद्योघवेगेन भूतानां प्राणिनामात्मनो देहस्य नित्यावपि सदातनावपि प्रभवाप्ययौ उत्पत्तिनाशौ न दृश्येते, सूक्ष्मत्वादिति शेषः । यथाग्नेरर्चिषां ज्वालानां प्रवाहविशेषः । यथा पुरूरवसो जरा अश्विभ्यामेव दृष्टेति गीतातात्पर्यवचनं तत्सद्भावे प्रमाणम्[१] । भूतानां चेतनानामात्मनः परमात्मनः प्रभवाप्ययावित्यन्यथा व्याख्यानं "अवयव्यवयवानां च गुणानां गुणिनस्तथा ।शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा । स्वरूपांशांशिनोश्चैव नित्याभेदो जनार्दने । [illegible]स्वरूपेषु तथा तथैव प्रकृतावपि । चिद्रूपायामतोऽनंशा अगुणा अक्रिया अपि । हीना अवयवैश्चेति कथ्यन्ते ते त्वभेदतः । पृथग् गुणाद्यभावाच्च नित्यत्वादुभयोरपि । विष्णोरचिन्त्यशक्तेश्च सर्वं सम्भवति ध्रुवम् । क्रियादेरपि नित्यत्वं व्यक्त्यव्यक्तिविशेषणम् । भावाभावविशेषेण व्यवहाराश्च तादृशः । विशेषस्य विशिष्टस्याप्यभेदस्तद्वदेव तु । सर्वं चाचिन्त्यशक्तित्वाद् युज्यते परमेश्वरे । तच्छक्त्यैव च जीवेषु

---

१. दृष्टेति वचनं सदाऽत्र प्रमाणमित्यपि पाठान्तरम् ।

**गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ।**
**न तेषु सज्जते योगी गोभिर्गा इव गोपतिः ॥ ५० ॥**

**बुद्धिसंस्थेन भेदेन व्यक्तस्थ इव तद्गतः ।**
**लक्ष्यते स्थूलमतिभिरात्मा चाम्बुस्थितार्कवत् ॥ ५१ ॥**

---

चिद्रूपप्रकृतावपि । भेदाभेदौ तदन्यत्र ह्युभयोरपि दर्शनात् । कार्यकारणयोश्चापि निमित्तं कारणं विना'' इति प्रमाणविरुद्धत्वाज्जडस्येत्यंगीकर्तव्यम्[१] । अनङ्गानां चेतनानां क्रियावत्त्वं चाचिन्त्येशशक्तिनियतत्वाद् युज्यत इत्यस्मिन्नर्थे आत्मनि चैवं विचित्राश्च हि, सर्वोपेता च तद्दर्शनात्, सर्वधर्मोपपत्तेश्च, स्वाभाविकी ज्ञानबलक्रिया च, यत्र सप्त ऋषीन् पर एकमाहुः, इत्यादिप्रमाणान्तरं च । न चेशशक्तिर्मायामयी । ''विना दोषान् श्रुतमद्धाऽवगम्यं तथा स्मृतं परमे सत्यरूपे । नैवासत्यं क्वचिदस्मिन् परेशे सर्वं युक्तं पूर्णशक्तेः सदैव'' इति श्रुतिविरोधात् ॥ ४९ ॥

सूर्यादनुशिक्षितां बुद्धिमाह **गुणैरिति** । योगी यथाकालं विहितकाले गुणैरिन्द्रियैर्गुणान् शब्दादीन् विषयान् उपादत्ते विमुञ्चति च । तेषु विषयेषु न सज्जते नातिसक्तो भवति । कथमिव । गोपतिः सूर्यः गोभिः रश्मिभिः गा इव जलानीव ॥ ५० ॥

न केवलमसङ्गत्वमेव सूर्यात् शिक्षितमपि तु जीवपरमात्मवैलक्षण्यं चेति[२] भावेनाह **बुद्धिसंस्थेनेति** । तस्य जीवस्य शरीरगत आत्मा परमात्मा स्थूलमतिभिः प्रमाणज्ञानरहितैः बुद्धिसंस्थेन भेदेन बाह्यान्तःकरणगतमिथ्याज्ञानेन व्यक्तं शरीरं तत्स्थो जीव इव सादृश्येन सुखी दुःखीति लक्ष्यते । दुःखाद्यधिकरणदेहगतत्वात् । कथम् । अम्बुस्थितार्कवत् । यथा परमार्कस्वरूपानभिज्ञैः बिम्बभूतो जले प्रतिबिम्बितार्कवदचेतनः शिरःपादादिरहितो वर्तुलश्चेति कथ्यते तथेति । तस्मात् तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीत्यादिश्रुतितात्पर्यवेदिभिर्निर्मलचित्तैः सूक्ष्मेक्षणैः जीवपरयोर्वैलक्षण्यं जानद्भिर्योगिभिर्भाव्यम् । अन्यथा असुरमते प्रवेश इति । दृष्टान्तेप्येवमेव ज्ञातव्यम् । बिम्बप्रतिबिम्बयोरिव जीवपरयोर्भेदो व्यावहारिको न तु यथार्थ इति मतं ''बुद्धिसंस्थस्त्वात्मभेदो व्यक्तस्थो जीव उच्यते । तेनैव सह संस्थानात् परात्मा स्थूलबुद्धिभिः ।

---

१. अन्यथा व्याख्यानमेतादृशप्रमाणविरुद्धमिति प्रभवाप्ययो जडस्येत्यंगीकर्तव्यमित्यर्थः ।
२. जीवपरमात्मभेदोपीति पाठान्तरम् ।

नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।
कुर्वन् विन्देत सन्तापं कपोत इव दीनधीः ॥ ५२ ॥

कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ।
कपोत्या भार्यया सार्धमुवास कतिचित् समाः ॥ ५३ ॥

कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ।
दृष्टिं दृष्ट्याऽङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ॥ ५४ ॥

शय्यासनाटनस्थानवार्ताक्रीडाशनादिषु ।
मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥

यद्यद् वाञ्छति सा राजन् तदर्थमनुकम्पितः ।
तं तं समानयत् कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ५६ ॥

कपोती प्रथमं गर्भं गृह्णती काल आगते ।
अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती ॥ ५७ ॥

तेषु काले व्यजायन्त रचितावयवा हरेः ।
शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥ ५८ ॥

प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ ।
शृण्वन्तौ कूजितं तासां रुवन्तौ कलभाषितैः ॥ ५९ ॥

---

जीववल्लक्ष्यते विष्णुर्यथैवाम्बुस्थितार्कवत् । परमार्कः पारिमाण्याद् वर्तुलत्वादिना तथा । अर्कस्वरूपानभिज्ञैः शिरःपाण्यादिवर्जितः । अचेतनश्च कल्प्येत तत्तेजोमात्रदर्शिभिः । सूर्यदेहादिभिन्नं तु तेजोमण्डलमेव तु । दृश्यते स्थूलमतिभिरेवमेव जनार्दनः'' इति प्रमाणविरुद्धत्वादुपेक्षणीयम् ॥ ५१ ॥

मुक्तिसाधनेषु प्रथमत आपाद्यं विरक्तिलक्षणं साधनमिति कपोतशिक्षितां विरक्तिमाह **नातिस्नेह इति** ॥ ५२ ॥ स्नेहगुणितहृदयावित्येतद् दर्शयति **दृष्टिमित्यादिना** ॥ ५३-५४ ॥ शय्यासनादिषु मिथुनीभूय वर्तमानौ ॥ ५५ ॥

तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ।
प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥ ६० ॥

स्नेहबद्धानुहृदयावन्योन्यं विष्णुमायया ।
विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ॥ ६१ ॥

एकदा जग्मतुस्तासामशनार्थं कुटुम्बिनौ ।
परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥

दृष्ट्वा तान् लुब्धकः कश्चिद् यदृच्छातो वनेचरः ।
जगृहे जालमातत्य चरतः स्वालयान्तिके ॥ ६३ ॥

कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ।
गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥

कपोती स्वात्मजान् वीक्ष्य बालकान् जालसंवृतान् ।
तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ६५ ॥

साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ।
स्वयं चाबध्यत शिचा बद्धान् पश्यन्त्यपस्मृतिः ॥ ६६ ॥

कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकप्रियान् ।
भार्यां चात्मसमां दीनां विललापातिदुःखितः ॥ ६७ ॥

अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ।
अतृप्तस्याकृतार्थस्य गृहास्त्रैवर्गिका हताः ॥ ६८ ॥

अनुरूपाऽनुकूला च यस्य मे पतिदेवता ।
शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥

सोऽहं शून्यगृहे दीनो मृतदारो मृतप्रजः ।
जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥ ७० ॥

तांस्तथाऽऽवृतान् शिग्भिर्मृत्युग्रस्तान् विचेष्टतः ।
स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥

तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ।
कपोतकान् कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ७२ ॥

एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत् ।
पुष्णन् कुटुम्बं कृपणः सानुबन्धोऽवसीदति ॥ ७३ ॥

यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् ।
गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः ॥ ७४ ॥

॥ इति सप्तमोऽध्यायः ॥

॥ अथाष्टमोऽध्यायः ॥

**ब्राह्मण उवाच-**

सुखमैन्द्रियकं राजन् स्वर्गे नरक एव च ।
देहिनां यद् यथा दुःखं तस्मान्नेच्छेत तद् बुधः ॥ १ ॥

---

शिचा पक्षिग्राहिजालेन ॥ ५६-६६ ॥ आरूढाद् वृक्षात् च्युतं पतितम् ॥ ६७-७४ ॥

**॥ इति श्रीविजयध्वजतीर्थयतिविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य सप्तमोऽध्यायः ॥**

न कर्तुमीहसे किञ्चिदिति यदुराजप्रश्नं परिहरन् एतत्संसारसुखं यथा दुःखशिरस्कत्वेन नाकांक्ष्यं न साध्यं च तथा स्वर्गसुखमित्याह **सुखमिति** । यथा ऐन्द्रियकं दुःखं पतननिश्चयात् स्वर्गे नरके चास्ति तथा श्रोत्रादीन्द्रियविषयशब्दादिसुखमस्त्येवेति यत् तस्माद् बुधो दुःखशिरस्कं सुखं नेच्छेत, कुत एव तत्साधने प्रवर्तत इत्यन्वयः । अनेनैहिकसुखाय न प्रवर्तनीयमिति किं वक्तव्यमित्युक्तं भवति ॥ १ ॥

**ग्रासं विसृष्टं दिष्टेन महान्तं स्तोकमेव च।**
**यदृच्छयैवापतितं ग्रसेदजगरोऽक्रियः ॥ २ ॥**

**शयीताहानि भूरीणि निराहारोऽनुपक्रमः ।**
**यदि नोपनमेद् ग्रासो महाहिरिव दिष्टभुक् ॥ ३ ॥**

**ओजःसहोबलयुतं बिभ्रद् देहमकर्मकम्।**
**शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि॥ ४ ॥**

**मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ।**
**अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥ ५ ॥**

---

तर्हि देहयात्रा कथङ्कारं वर्तेतेत्यतोऽजगरादुपात्तबुद्धिमाह **ग्रासमिति** । दिष्टेन दैवेन । दैवं दिष्टं भागधेयमित्यभिधानम्। ग्रासस्तु कवलार्धक इति च। विसृष्टं दत्तं यदृच्छयैवोपनतमतर्कितत्वेनोपपन्नम्, अक्रियो यत्नरहितः, अजगरो यथा ग्रसेत्, तथा मुनिरिति शेषः ॥ २ ॥

ननु यदृच्छयापि ग्रासालाभे किं कुर्यात्, तत्राह **शयीतेति**। अनुपक्रमः क्रियारम्भरहितः । यदि यदृच्छयापि ग्रासो नोपनमेत् तर्हि महाहिरिव बहून्यहानि शयीत । तत्र निमित्तं दिष्टभुगिति । यदृच्छाप्राप्तभोजनत्वादित्यर्थः ॥ ३ ॥

ननु तर्ह्यन्नबलस्य देहस्यान्नाभावे पतनं स्यादित्याशंक्य सत्यं बहिर्मुखस्यैतन्न योगारूढस्य । तस्य भगवद्गुणगणध्यानलक्षणामृतपानपूर्णबलवद्देहेत्वादिति भावेनाह **ओज इति** । ओजः पराभवशक्तिः सहः निष्ठुरवचनादिसहनशक्तिः, बलं भारवहनशक्तिः ओजःसहोबलैर्युतम्, अकर्मकं अन्नाद्यर्थं क्रियाहीनं देहं बिभ्रत्। करचणादीन्द्रियशक्तिमानपि योगारूढः शरीरयात्रार्थं नेहेत न चेष्टेत । कीदृशः । शयानः सर्वप्रवृत्तिशून्यः । तर्हि निद्रालुः स्यादत्राह **वीतनिद्र इति** । निद्रानिरासव्यापारसद्भावादित्याह **बिभ्रदिति**। अत्र भरणेन ध्यानं लक्षयति। ओजःसहोबलात्मना ब्रह्मणा युक्तं देहं बिभ्रद् ध्यायन् । अन्यत्र तादृशादृष्टनिर्मितम्[1] । ईशशक्तेरचिन्त्यत्वादित्यर्थः । अत एवाकर्मकं निश्चेष्टमुद्देश्यरहितं वा ॥ ४ ॥

समुद्राच्छिक्षितां मतिमाह **मुनिरिति** । अनन्तपारः अन्तपाररहितबुद्धिः । अनन्तेन पारः पूर्तिस्तृप्तिलक्षणा बुद्धिर्यस्येति वा । पारं तीरान्तरं प्रोक्तं पारः पूर्तिस्तथा पुमानित्यभिधानम् ।

---

१. ईशस्याचिन्त्यशक्त्या ओजआद्यपादकादृष्टनिर्मितशरीरं बिभ्रदित्यर्थः स्यात्।

**समृद्धकामो हीनो वा नारायणपरो मुनिः ।**
**नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥**

**दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ।**
**प्रलोभितः पतन्त्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥**

---

अन्यत्रानिश्चिततीरान्तरः । स्तिमितोदो निश्चलजलः । गम्भीरोऽनाविष्कृतनिजाशयः । तुष्टात्मा [१]प्रसन्नश्चासौ गम्भीरश्च । दुर्विगाह्योऽविज्ञेयमहात्म्यः, अन्यत्र प्रवेष्टुमशक्यः । दुरत्ययः अनुल्लंघ्यः, एकत्र तेजस्वित्वादन्यत्रातिविस्तृतत्वात् । भवेदिति शेषः ॥ ५ ॥

समृद्धकामः समृद्धाभीष्टार्थः नोत्सर्पेत उत्सिक्तो न भवेत् । हीनो वा, द्रव्यैरिति शेषः, न शुष्येत । यथा प्रावृषि समुद्रः समृद्धजलाभिः ग्रीष्मे शुष्कजलाभिः सरिद्भिः । तत्र हेतुः नारायणपर इति ॥ ६ ॥

शलभाच्छिक्षितां बुद्धिमाह **दृष्ट्वेति** । देवस्य मायां मोहकशक्तिम् । भावैः शृङ्गारचेष्टाभिः । अत्र ''महतां वनिताकामः पतत्यन्धे तमस्यलम् । अन्यत्र निरयं याति दुःखवान् स्याद् विपर्यये'' इति वचनादधःपाते विशेषोऽस्तीति ज्ञातव्यम् । मायाशब्दस्येन्द्रजालार्थमन्तरेण मोहकारणत्वार्थः कथमित्येतच्चोद्यम् ''मोहकारणभूता तु मायेत्याहुर्मनीषिणः । अविद्यमानं मेत्युक्तं तज्ज्ञापयति यत् स्वयम् । कुत्रचिज्ज्ञानरूपं सद् लाभरूपं च भण्यते । मयं प्राचुर्यमुद्दिष्टं माया स्यात् प्रचुरेत्यपि'' इत्यनेन परिहर्तव्या । परमार्थनिष्ठस्य स्वतन्त्रशब्दस्य गुणनिष्ठत्वं कथमित्येतत्[२] ''मतिमन्मतिभेदोपि न विष्णोः क्वचिदिष्यते'' इत्यनेन परिहृतम् । मायाया ईशेच्छावाचित्वे जगतस्तन्मयत्वं कथमितीदमपि ''पारमार्थ्येन नास्त्येव तदन्यत् तद्वशं यतः । अनाद्यनन्तकालेपि विद्यमानमपि ध्रुवम् । अतो मायामयं प्राहुः सर्वं तद्वशगत्वतः'' इत्यमुना परिहृतम् । किञ्च विश्वस्य पराधीनत्वादसदादिशब्दवाच्यत्वं मत्वविद्यमानत्वात् । तर्हि जगन्नास्त्येवेति कथम् । अस्वतन्त्रत्वादित्युत्तरम् । प्रवाहरूपेण नित्यत्वात् सदातनत्वं युक्तम् । श्रौतत्वाद् विश्वस्य मिथ्यात्वं किं न स्यादिति चेन्न । हरेरिच्छा-धीनत्वान्मायामात्रत्वात् । तर्हि श्रुतेः का गतिरिति चेन्न । एकस्यैव परमार्थत्वादिति (आशयेन

---

१. इदं प्रसन्नशब्दव्याख्यानं स्याद्वा ।

२. स्वतन्त्रं परमार्थाख्यं स्वतन्त्रैका हरेर्मति'' इति भाष्योदाहृतप्रमाणे स्वतन्त्रशब्दस्य कथं भगवन्मति-रूपगुणनिष्ठत्वमिति शङ्का मतिमदित्याद्युत्तरवचनेन परिह्रियत इत्याशयः ।

**योषित्सु तल्पाभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ।**
**प्रलोभितात्मा ह्युपभोगबुध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥**

**स्तोकं स्तोकं ग्रसेद् ग्रासं देहो वर्तेत यावता ।**
**गृहाद् व्रजेत् समातिष्ठन् वृत्तिं माधुकरीं मुनिः ॥ ९ ॥**

**अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।**
**सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥ १० ॥**

---

प्रवृत्तेः) । सर्वमिदं प्रमाणसिद्धम् । ''स्वाधीनं सदिति प्रोक्तं पराधीनमसत् स्मृतम् । अविद्यमानमेतस्माज्जगदाहुर्विपश्चितः । अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम् । अस्वातन्त्र्यात्तु नास्त्येवेत्येवं वाच्यं जगत् सदा । सदा वृत्तेर्विद्यमानमिति ब्रूयात् यदि क्वचित् । तथापि नाशवद्धीदं प्रवाहाद्धयस्य नित्यता । अतो निवर्त्यमित्याहुः प्रपञ्चो ह्यस्ति यद्यपि । विष्णोरिच्छावशत्वाच्च मायामात्रमिति स्फुटम् । परमार्थं चैकमेव स्वातन्त्र्याद् विष्णुमव्ययम् । यदि कल्पयतीदं स स एव विनिवर्तयेत् । विष्णुस्तस्मात् तद्वशत्वान्नास्तीति द्वैतमुच्यते । स्वातन्त्र्येण हरौ ज्ञाते पराधीनत्व-निश्चयात् । इत्याहुरुपदेष्टार आचार्यास्तत्त्ववेदिनः । यथैव राजनि ज्ञाते नान्योस्तीति स्फुटं वचः । स्वातन्त्र्यात् पारतन्त्र्याच्च तद्भृत्यादिषु सत्स्वपि । यथैकच्छत्रवांश्चैव एकवीर इतीव च । तथैव सर्वप्राधान्याददद्वितीयो हरिः स्मृतः । एवं मुक्ता विजानन्ति सायुज्यं प्रापिता विभोः । अनन्तकालं पश्यन्तो जगदेतच्चराचरम् । तस्यैकस्य ह्यविज्ञानात् केवलं भ्रान्तिरूपकम् । जगदुक्त्वा तमो यान्ति त्वीशितव्येशशापतः'' इति । अनेन प्रपञ्चो यदि विद्येतेत्यादिश्रुतिरपि विवृता सत्यत्वार्थे । ''पुत्रा मे यदि विद्यन्ते मरिष्यन्त्येव ते ध्रुवम् । यदि राज्यं करोत्येष नश्यत्येतदसंशयम्'' इति धृतराष्ट्रवचने यथा यदिशब्दस्य विर्पययपर्यवसानेऽवस्तुत्वार्थः प्रतीयते तथाऽत्रापि । ''यदि शब्दस्त्ववस्तुत्वे अस्वातन्त्र्ये च संशये । अवस्तुशब्दश्चाशक्ते ह्यल्पशक्तौ च कीर्त्यते'' इत्यनेन यदिशब्दस्यावस्तुत्वार्थोपि ज्ञायते ॥ ७ ॥

प्रागुक्तश्लोकार्थमेव विवृणोति **योषित्स्विति** । मायारचितेषु भगवदिच्छारचितेषु भोगसाधनेषु तल्पादिषु योषिज्जनेषु चोपभोगबुध्या विषयभोगसाधनबुध्या प्रलोभितात्मा विवशमनाः पतङ्गवन्नश्यतीत्यन्वयः ॥ ८ ॥

मधुकरशिक्षितमतिमुपदिशति **स्तोकमिति** । माधुकरीं मधुकरस्य विद्यामानां वृत्तिं समातिष्ठन्

**सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षितम् ।**
**पाणिपात्रोदरामत्रो मक्षिकेव न सङ्ग्रही ।**
**मक्षिका इव संगृह्णन् सह तेन विनश्यति ॥ ११ ॥**

**पदापि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि ।**
**स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १२ ॥**

**नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ।**
**बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ १३ ॥**

**न देयं नोपभोग्यं च लुब्धैर्यद् दुःखसञ्चितम् ।**
**भुङ्क्ते स्वमपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १४ ॥**

**सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ।**
**मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १५ ॥**

---

मुनिर्गृहाद् व्रजेदित्यन्वयः[१] ॥ ९ ॥ अत्राणुत्वमहत्वे संख्ययोच्येते न त्वर्थतः । सारं भगवज्ज्ञानजननीं भक्तिम् ॥१० ॥

भिक्षितं भिक्षया लब्धमन्नं सायन्तनं सायन्तनार्थं श्वस्तनं श्वस्तनार्थं च न संगृह्णीत । कथं तर्हि भोजनम् । अत्राह **पाणीति** । पाणिपात्रत्वेनोदरामत्रत्वेन वा, भञ्जान इति शेषः । संग्रहे को दोष इत्यत्राह **मक्षिका इति** । तेन धनादिना सह विनश्यति, चोरादिनेति शेषः ॥ ११ ॥

गजात् किमुपात्तमत्राह **पदेति** । करिण्या अङ्गसङ्गतः स्पृशन् करीव बध्यते ॥ १२ ॥ एतदेव विवृणोति **नाधिगच्छेदिति** ॥ १३ ॥

मधुहनोपि का बुद्धिरार्जितेति तत्राह न **देयमिति** । लुब्धैर्यद् दुःखेन सञ्चितं न देयं दानयोग्यं न नोपभोग्यं स्वस्योपभोगयोग्यं च न तत् स्वं वित्तम् अर्थविदन्यो भङ्क्ते । कथमिव । मधुहा मकरन्दसंग्रही मधुवत् ॥ १४ ॥ किमनेनात्मनो लब्धमत्राह **सुदुःखेति** ॥ यतिर्जितेन्द्रियग्रामः ॥ १५ ॥

---

१. भिक्षार्थमिति यावत् गृहस्थाश्रमाद् व्रजेदिति वा गृहान् व्रजेदिति सुधीन्द्रतीर्थपाठः ।

**ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः क्वचित्।**
**शिक्षेऽहं हरिणाद् बद्धान्मृगयोर्गीतमोहितात्॥ १६॥**

**नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम्।**
**आसां क्रीडनकान्धः स्याद् ऋष्यशृङ्गो मुनिर्यथा॥ १७॥**

**जिह्वयाऽथ प्रमाथिन्या जनो रसविमोहितः।**
**मृत्युमृच्छत्यतद्बुद्धिर्मीनस्तु बडिशैर्यथा॥ १८॥**

**इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः।**
**वर्जयित्वा तु रसनमसौ रस्ये हि वर्धते॥ १९॥**

**तावज्जितेन्द्रियो न स्याद् विजितान्येन्द्रियः पुमान्।**
**न जयेद् रसनं यावज्जितं सर्वं जिते रसे॥ २०॥**

**पिङ्गला नाम वेश्याऽऽसीद् विदेहनगरे पुरा।**
**तस्या मे शिक्षितं किञ्चिन्निबोध नृपसत्तम॥ २१॥**

**सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती।**
**अभूत् काले गृहद्वारि बिभ्रती रूपमुत्तमम्॥ २२॥**

---

हरिणाच्छ्रोत्रेन्द्रियजयो लब्ध इत्याह **ग्राम्येति**। अहं वनचरो यतिः ग्राम्याणां गीतं वचनं न शृणुयादितीममर्थं हरिणात् शिक्षे। कीदृशात्। मृगयोर्गीतमोहितत्वेन बद्धात्॥ १६॥

ग्राम्यगीतश्रवणे का हानिरिति तत्राह **नृत्येति**। क्रीडनकान्धः क्रीडासाधनवदन्धः॥ १७॥

मस्त्याज्जिह्वेन्द्रियजयप्रकारं कथयति **जिह्वयेति**। अतद्बुद्धिरतत्वज्ञः॥ १८॥

रसजयो दुश्शक इत्युपपादयति **इन्द्रियाणीति**। रसनं रसनेन्द्रियम्। असौ रसना रस्ये स्वविषये वर्धते॥ १९॥

जिह्वेन्द्रियजय एवेन्द्रियजयो नान्य इत्याह **तावदिति**। रसो रागः। रसो रागे विषे वीर्ये इति यादवः॥२०॥

मार्ग आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ ।
तान् शुल्कदान् वित्तवतः कान्तान् मेनेऽर्थकामुका ॥ २३ ॥

आगतेष्वपयातेषु सा सङ्केतोपजीविनी ।
अथान्यो वित्तवान् कोपि मामुपेष्यति भूरिदः ॥ २४ ॥

एवं दुराशयध्वस्तनिद्रा द्वार्यवलम्बिनी ।
निर्गच्छन्ती प्रविशती निशीथं प्रत्यपद्यत ॥ २५ ॥

तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ।
निर्वेदः परमो जज्ञे चिन्ताहेतिः सुखावहः ॥ २६ ॥

तथा निर्विण्णचित्ताया गीतं शृणु यथा मम ॥ २७ ॥

निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ।
नह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ॥ २८ ॥

पिङ्गलोवाच -

अहो मे मोहविततिं पश्यताविजितात्मनः ।
या कान्तादसदतः कामं कामये येन बालिशा ॥ २९ ॥

सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयादिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३० ॥

---

पिङ्गलाया वैराग्यमुपशिक्षितमिति वक्तुमुपक्रमते **पिङ्गलेति** ॥ सैकदा सङ्केतवित्तसमये[१] कान्तमुपनेष्यती आत्मसमीपं प्रापयन्ती गृहद्वार्यभूदित्यन्वयः । मार्ग आगच्छतः पुरुषान् वीक्ष्य तान् पुरुषान् वित्तवतः शुल्कदान् कान्तान् मेने ॥ अस्मादन्यो भूरिदो बहुद्रव्यप्रदः स्यादिति मत्वा ॥ २१- २५ ॥

वित्ताशया वित्तातितृष्णया । चिन्तायाः छेदनहेतिः शस्त्रम् ॥ यथा गीतं तथा मम सकाशात् शृणु ॥ श्रोतव्यत्वे हेतुमाह **निर्वेद** इति । यथा निशितोऽसिः पाशानां छेदने हेतुर्विहितस्तथा निर्वेदस्तृष्णालक्षणपाशानां हि यस्मात् तस्मात् । अत्रापि हेत्वन्तरमाह **नहीति** ॥ २६-२८ ॥

विततिर्विस्तारः । बालिशा येन तस्मात् ॥ कथं बालिशेत्यत्राह **सन्तमिति** । नित्यमविनाशिनम् ॥ २९-३०॥

---

१. सङ्केतितसमये इति स्याद्वा ?

**अहो मयात्मा परितापितो वृथा**
**सांकेत्यवृत्त्याऽतिविगर्हवार्तया ।**
**स्त्रैणान् नरांश्चार्थतृषाऽनुशोच्यान्**
**क्रीत्वा हि वित्तं रतिमात्मनेच्छती ॥३१ ॥**

**यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचारोमनखैः पिनद्धम् ।**
**क्षरन्नवद्वारमगारमेतद् विण्मूत्रपूर्णं मदुपैति काऽन्या ॥ ३२ ॥**

**विदेहानां पुरे ह्यस्मिन् अहमेकैव मूढधीः ।**
**याऽन्यमिच्छन्त्यतः स्वस्मादन्यस्मात् कान्तमच्युतात् ॥ ३३ ॥**

**सहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।**
**तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३४ ॥**

---

आत्मा मनः । अतिगर्ह्या वार्ता किंवदन्ती यस्याः सा तथा तया । संकेतस्य भावः सांकेत्यं द्रव्यं तेन वृत्तिराजीविका तया । या अहं वित्तमुद्दिश्यात्मना देहेन अर्थतृषा विषयतृष्णया अनुशोच्यान् स्त्रैणान्नरान् क्रीत्वा रतिमिच्छन्ती आसम्, तयेति शेषः ॥ ३१ ॥

यदर्थं ग्राम्यमाकांक्षन्ते तदीदृशं हीत्याह **यदिति** । त्वचारोमनखैरित्येकं पदम् । स्थूणाः स्तम्भाः । मदन्या कीदृशी एतद्देहाख्यमगारं गृहमुपैतीत्यन्वयः । वंशा दीर्घदारुविशेषाः । वंश्या वंशप्रोतास्तिरश्चीनवेणवः । क्षरन्ति स्रवन्ति नवद्वाराणि यस्य तत् तथा । अनेनान्यकान्तानां हेयत्वमुक्तं भवति ॥ ३२ ॥

इतोपि हेया इति भावेनाह **विदेहानामिति** । स्वस्मात् स्वकीयात्, स्वस्वामिन इत्यर्थः । अतो जगतः, अन्यस्माद्भिन्नादित्यर्थः । अ निषेधे पुमान् विष्णाविति यादवः । यद्वा अतोऽस्मात् सर्वमनोवृत्तिप्रेरकत्वेन प्रसिद्धात् ॥ ३३ ॥

योयं सुहृत्, प्रेष्ठानां प्रेष्ठः, नाथते ऐश्वर्येण वर्तत इति नाथः, शरीरिणामात्मा नियन्ता च तमात्मना मनसैव विक्रीयानेनाच्युतेन सह (रमे इत्यन्वयः)[१] इयं पिङ्गला सामान्यवेश्या न भवति किन्तु

---

१. ''अत एवं करिष्यामीति कर्तव्यं निर्धारयति **सुहृदिति** । सुहृदनिमित्तोपकारी, प्रेष्ठतमः प्रेष्ठानां प्रेष्ठः, नाथः स्वामी, न केवलं मम किन्तु शरीरिणां सर्वेषामात्मा । आत्मना देहेनैव मूल्येन विक्रीय क्रीत्वा, देहसमर्पणेनैनमात्मीयं कृत्वेति यावत्, रमा यथा तथाऽनेन रमे रंस्ये'' इति सुधीन्द्रतीर्थाः ।

**कियत् प्रियं ते व्यभजन् कान्ता मे कामदा नराः ।**
**आद्यान्तवन्तो भार्याया देवा वा कालविद्रुताः ।। ३५ ।।**

**नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा ।**
**निर्वेदोयं दुराशाया यन्मे जातः सुखावहः ।। ३६ ।।**

**मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ।**
**येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ।। ३७ ।।**

**तेनोपकृतमादाय शिरसा ग्राम्यसङ्गताः ।**
**त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ।। ३८ ।।**

---

विशिष्टाप्सरस्स्वेका । अन्यथा अस्या नैतादृशी बुद्धिरुत्पद्यते । तदुक्तम् ''भगवद्भार्यतायोग्याः काश्चिदप्सरसः स्त्रियः । रमावेशात् कदाचित् स्युस्तास्वेका पिङ्गला भवेत् । तदन्यासां महादोषो भगवद्भर्तृतास्मृतौ'' इति ।। ३४ ।।

लोकसिद्धकान्तत्यागे लोकविलक्षणकान्तस्वीकारे अलम्बुद्धिगोचरकामादातृत्वमाद्यन्तवत्त्वं च निमित्तमित्याह **कियदिति** । ते कामादा नरा भार्याया मे कियत् प्रियं व्यभजन् विभजेयुरित्यन्वयः । विभज्य दास्यन्तीत्यर्थः । तर्हि देवाः कान्ताः सन्तीत्यत्राह **देवा इति** । कालविद्रुताः कालनिर्धूता अत एवाद्यन्तवन्त इति । अतो भगवद्भर्तृकत्वमेवाशास्यं नेतरभर्तृकत्वमिति भावः ।। ३५ ।।

विश्वबन्धविध्वंसिनि भगवति प्रसन्ने किमसुलभमित्याह **नूनमिति** । नूनमिदानीम् ।। ३६ ।।

समुद्भूतप्रभूतभगवद्भक्तिसुधा पिङ्गला पुनः शब्दादिविषयनिमित्तक्लेशा मा भूवन्निति प्रार्थयते **मैवमिति** । येन निर्वेदेन संसारबन्धं निर्हृत्य परिहृत्य शं भगवन्निष्ठालभ्यं सच्चिदानन्दलक्षणं अं सर्वविलक्षणं ब्रह्म प्राप्नोतीत्यन्वयः ।। कुतो मा भूवन्नित्यतो वाह **येनेति** । पुरुषोऽनुबन्धं भगवद्भक्तिं निर्हृत्य भस्म कृत्वा शमं शमलं सुखोपरमं नरकमृच्छतीति, एतस्मादिति शेषः ।। ३६-३७ ।।

तन्निष्ठामाह **तेनेति** । तेन हरिणा उपकृतमनुगृहीतं निर्वेदं शिरसा आदाय सादरं गृहीत्वा ग्राम्यसङ्गता दुराशाः त्यक्त्वा ।। ३८ ।।

सन्तुष्टा श्रद्धधत्येतद् यथालाभेन जीवती ।
विहराम्यमुनैवाहमात्मना रमणेन वै ।। ३९ ।।

संसारकूपे पतितं विषयैर्मुषितेक्षणम् ।
ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्योऽस्मात् त्रातुमीश्वरः ।। ४० ।।

आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलम् ।
अप्रमत्त इदं पश्येद् ग्रस्तं कालाहिना जगत् ।। ४१ ।।

**ब्राह्मण उवाच -**

एवं व्यवसितमतिर्दुराशाः कान्ततर्षजाः ।
छित्वोपशममास्थाय शय्यामुपविवेश सा ।। ४२ ।।

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ।। ४३ ।।

**।। इत्यष्टमोऽध्यायः ।।**

---

एतदत्यन्तं श्रद्धधती श्रद्धधाना अमुनैवात्मना परमात्मना ।। ३९ ।। अस्मादन्यः क आत्मानं त्रातुम् । मुषितेक्षणं नष्टज्ञानम् ।। ४० ।।

आत्मनः स्वस्य गोप्ता आत्मा परमात्मैव । यदा अखिलान्निर्विद्येत तदा एतज्जगत् कालाहिना ग्रस्तं पश्येत् ।। ४१ ।। व्यवसितमतिः निश्चितमतिः । कान्ततर्षजाः कान्ततृष्णाजाताः ।। ४२ ।।

इममितिहासं श्रद्धापयति **आशेति** । यद्वा पिङ्गलातः शिक्षिततात्पर्यविषयं निष्कृष्याह **आशेति** ।। ४३ ।।

**।। इति श्रीविजयध्वजतीर्थयतिविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य अष्टमोऽध्यायः ।।**

## ।। अथ नवमोऽध्यायः ।।

**ब्राह्मण उवाच -**

**परिग्रहोऽयं दुःखाय यद्यत् प्रियतमं नृणाम् ।**
**अनन्तसुखमाप्नोति तद् विद्वान् यस्त्वकिञ्चिनः ।। १ ।।**

**सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ।**
**तदामिषं परित्यज्य स सुखं समविन्दत ।। २ ।।**

**न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ।**
**आत्मक्रीड आत्मरतो विचरामीह बालवत् ।। ३ ।।**

**द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ।**
**यो विमूढो जडो बालो यो गुणेभ्यः परं गतः ।। ४ ।।**

**क्वचित् कुमारी त्वात्मानं वृण्वानान् गृहमागतान् ।**
**स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ।। ५ ।।**

**तेषामभ्यवहारार्थं शालीन् दृषदि पार्थिव ।**
**अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ।। ६ ।।**

**सा तं जुगुप्सितं मत्वा महती व्रीडिता ततः ।**
**बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत् ।। ७ ।।**

---

तिरश्चीनात् कुररारव्यखगात् किं विशिष्टं ज्ञानं शिक्षितमत्राह **परिग्रह इति** । नृणां पियतमं यद्यद् वित्तं तस्य परिग्रहः तस्य वित्तस्यान्ततो नाशाद् दुःखाय भवति । ततः किं फलितमत्राह **तदिति** । तत् तस्मात् यो विद्वान् सोऽकिश्चनो भवेत् । त्यक्तपरिग्रहो भवेत् । स सुखमाप्नोति ।। १ ।। इममर्थं चित्तीकरोति **सामिषमिति** । परिग्रहो न कर्तव्य इति कुरराच्छिक्षितमिति भावः ।। २ ।। अर्भकाच्छिक्षितमाह **न म इति** । इह पुत्रवतां या वित्तैषणादिचिन्ता सापि मम नास्ति ।। ३ ।। ननु तर्हि कीदृशस्य चिन्ता नस्तीत्यत्राह **द्वाविति** । विमूढः सर्वथा ज्ञानशून्यः जडः जडसदृशः । गुणेभ्यः सत्वादिभ्यः परं तल्लेपरहितं विलक्षणमीश्वरं गतः ज्ञातः परमात्मगुणामृतमनुभवन्नित्यर्थः ।। ४ ।।

**उभयोरप्यभूद् घोषो अवघ्नन्त्याः स्म शङ्खयोः ।**
**तत्राप्येकं निरभिनदेकस्मान्न भवेत् ध्वनिः ॥ ८ ॥**

**अन्वशिक्षमिमं तस्या उपदेशमरिन्दम ।**
**लोकाननुचरन्नेताँल्लोकतत्वविवित्सया ॥ ९ ॥**

**वासो बहूनां कलहो भवेद् वार्ता द्वयोरपि ।**
**एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ॥ १० ॥**

**मन एकत्र संयुज्याज्जितश्वासो जितासनः ।**
**वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥ ११ ॥**

**यस्मिन् मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् ।**
**सत्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥**

---

कुमार्याः शिक्षितज्ञानमाह **कचिदिति** । वृण्वानान् वरणेच्छून् । अर्हणमभ्यागतपूजनम् ॥ ५ ॥ अभ्यवहारार्थम् अभ्यवाहारो भोजनम् । शालीन् व्रीहीन् । दृषदि व्रीहिकुट्टनपाषाणे । शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यपीत्यमरः शंखा वलयानि । यथा महत्परिमाणं भवति तथा स्वनं चक्रुरिति क्रियाविशेषणम् ॥ ६ ॥ बुद्ध्या महती कुमारी, महती विवाहोत्सवे वर्तमाना, तद्योगेत्यर्थः । अभ्यागतसमये व्रीहिताडनं दारिद्र्यसूचकमिति व्रीडिता लज्जिता स्वदेहस्यातिकृशत्वसूचकत्वेन च । तत् स्वनकरणं जुगुप्सितं मत्वा ॥ ७ ॥ घोषो अवघ्नन्त्या इत्यसन्धिकरणेनाभ्यागतैः शङ्खस्वनो न श्रुत इति सूच्यते । असन्धिश्च विवक्षावशात् क्रियत इति वैयाकरणैरुक्तत्वाच्च । निरभिनत् निरभिदत् ॥ ८ ॥

इदं कथं सम्भाव्यत इत्यत्राह **लोकानिति** ॥ ९ ॥ एकाकित्वस्य विपक्षे बाधकमाह **वास इति** । अत्र दुर्जनैः सह वासो निषिध्यते न तु सद्भिः तस्य विहितत्वात् । ''असज्जनैस्तु संवासो न कर्तव्यः कथञ्चन । यावद्यावच्च बहुभिः सज्जनैः स तु मुक्तिदः'' इति वचनात् ॥ १० ॥

इषुकाराच्छिक्षितबुद्धिप्रकारमाह **मन इत्यादिना** । एकत्र परमात्मनि ॥ ११ ॥ ब्रह्मणि मनोयोजनेन किं फलं येनावश्यं कर्तव्यं स्यादित्यत्राह **यस्मिन्निति** । यन्मनो दुष्कर्मरेणून् मुञ्चति तद् बाह्यमचिन्मनः

**तदेवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद् बहिरन्तरं वा।**
**यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥**

**एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः।**
**अलक्षमाण आचारैर्मुनिरेकोऽल्पतोषणः ॥ १४ ॥**

**गृहारम्भो हि दुःखाय विफलश्चाध्रुवात्मनः।**
**सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥**

**एको नारायणो देवः पूर्वसृष्टं स्वमायया।**
**संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥**

---

निर्वाणं नाशमुपैति। कथमिव। अनिन्धनं ज्योतिरिवेति लुप्तोपमा। ''बाह्यं मनो विलीनं स्यान्मुक्तौ चिन्मात्रकं मनः। तेनैवानुभवेत् सर्वं स्वात्माभिन्नेन मुक्तिगम्'' इति वचनात् बाह्यमेव नश्यति न चिन्मात्रं तन्नाशे विषयानुभवोक्तिर्विरुध्येतेति ॥ १२ ॥

अचिन्मनोनाशानन्तरं चिन्मनसा ध्यानप्रकरमाह **तदेवमिति** ॥ १३ ॥

अनिकेतनत्वेन एकत्वेन च सञ्चरणं दुःखहेतुकर्मानारम्भश्च सर्पाच्छिक्षितमित्याह **एकचारीति**। अत्रैकचारित्वादिकं विधेयं न तु विशेषणम्। गुहायां हृत्कमलमध्ये गूढायां परदेवतायामशयोऽन्तःकरणं यस्य स तथा, निरन्तरं भगवदुपासनापर इत्यर्थः। अल्पेनाशनादिना तोषणं तृप्तिर्यस्य स तथा ॥ १४ ॥

अध्रुवात्मनः अनित्यदेहस्य जीवस्य। अत्र लुप्तोपमामाह **सर्प इति** अनेन निवासोपायोपि दर्शित इति ॥१५॥

ऊर्णानाभेरुपशिक्षितमाह **एक इति**। एकः केवलो निरपेक्षः नारायणो देवः स्वमायया स्वेच्छया कल्पान्ते कालकलया संहारकांशेन पूर्वसृष्टमिदं जगत् संहृत्य एकत्वसंख्याविशिष्टोऽभूत्[1] ॥ १६ ॥

---

१. इत्युत्तरश्लोकस्थेनान्वयः।

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ।
कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ १७ ॥

सत्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ।
परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ १८ ॥

केवलानुभवानन्दसन्दोहो निरुपाधिकः ।
कालेनात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ १९ ॥

संक्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम ।
तामाहुस्त्रिगुणां व्यक्तिं सृजतीं विश्वतोमुखम् ।
यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥

---

कालादीनां तदा सत्वात् कथमिदमुपपद्यत इति तत्राह **अद्वितीय इति** । एतादृशोऽन्यो नास्तीत्येवोच्यते नतु सर्वात्मना सर्वनिषेधेन[१] । तथा सति सर्वस्य तनैक्यमुपपन्नं स्यात् । न च तद् युक्तम् । कुतोऽत्राह **अखिलाश्रय इति** । नह्याधाराधेययोरैक्यं क्वापि दृष्टचरम् । नन्वेतद्दृष्टान्तेन तस्याधारान्तरकल्पनं स्यादत्राह **आत्माधार इति** । नन्वेतद् युक्तिविरुद्धमत्राह **ईश्वर इति** । एतदेव विवृणोति **कालेनेति** । आत्मनः स्वस्यानुभावेन (सामर्थ्येन) तत्तत्कालोचितसृष्ट्यादिभावसूचकेन कालेन तदन्तर्यामिणा सत्वादिगुणशब्दवाच्यासु शक्यत्वात् शक्तिषु साम्यं साम्यावस्थां नीतासु सतीषु प्रधानपुरुषयोर्ब्रह्मसरस्वत्योरीश्वर आदिपुरषः, परावराणां कार्यकारणानां परमः, व्यापारमन्तरेणास्ते । तदा किं नामेत्यत्राह **कैवल्येति** । समाधिकरहित इति । सत्वादिगुणानां शक्तिशब्दवाच्यत्वे किं प्रमाणमित्येतच्चोद्यम् ''प्रकृतिश्च गुणाश्चैव शक्यत्वाच्छक्तयः स्मृताः । विष्णोः स्वरूपभूता तु शक्तत्वाच्छक्तिरुच्यते'' इत्यनेन परिहृतमिति ज्ञातव्यम् । कालप्रकृत्यादि-प्रवर्तनोदासीनत्वाभिप्रायेण एक इति वा पुनरुक्तम् । ''कालप्रकृतिजीवादौ लये सत्यप्रवर्तनात् । तन्निमित्तस्य कार्यस्य विष्णुरेक इतीर्यते । स हि कालादिकं सर्वं वर्तयत्यमितद्युतिः'' इति वचानात् ॥ १७-१८ ॥

संहारप्रकारमुक्त्वा तस्मात् सृष्टिप्रकारमाह **केवलेति** । निरुपाधिको जडदेहरहितः । कालेन

---

२. ईषदस्पष्टमिदं वाक्यजातम् । अन्यत् सर्वात्मना न निषिध्यते । तथा निषेधे सर्वैक्यमुपपद्यत इत्यद्वैताभि-मतिमाश्रित्येयं शङ्का ।

**यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः।**
**यथा विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः॥ २१॥**

**यत्र यत्र मनो देही धारयेत् सकलं धिया।**
**स्नेहाद् द्वेषाद् भयाद् वापि याति तत्तत्सरूपताम्॥ २२॥**

---

कालान्तर्यामिणा। आत्मनः स्वस्माद् अनुभावो जन्म व्यक्तिः यस्य स तथा तेन। सृष्ट्यभिमुखी कुर्वन् तया प्रकृत्या सूत्रं प्राणं ब्रह्माणं च सृजति। मायायाः स्वरूपमाह **तामिति**। विश्वतोमुखं सर्वदिक्षु यथा मुखं भवति तथा सृजतीम्। यस्मिन् प्रकृतिस्वरूपे। येन प्रधानेन। ''विलीनः प्रकृतौ संसारमेति'' इति श्रुतेः। कालेन सृष्ट्युपहितेन। नैतावता सापेक्षत्वम्। आत्मानुभावेन स्वसामर्थ्येनेति वा॥ १९-२०॥

अत्रोदहरति **यथेति**। ऊर्णां लालां वक्त्रतो मुखेन सन्तत्य विस्तृत्य। यथा यथेच्छम्॥ २१॥

पेशस्कृतः शिक्षितां बुद्धिमाह **यत्रेति**। देही यत्र यत्र स्नेहसंक्लिन्नया धिया मनो धारयेत् तत्तत्सरूपतां तस्य सदृशरूपतां याति। अत्रेदं तात्पर्यम्। स्निग्धया धिया ध्यायति चेत् स्निग्धरूपं सुखं याति, द्वेषधिया चिन्तयति चेद् द्विष्टरूपं दुःखं यातीत्यादि योज्यम्। तदुक्तम् ''भयादपि हरिं भक्त्या चिन्तयंस्तत्सरूपताम्। पेशस्कारिवदायाति द्विषन् द्वेषसरूपताम्'' इति। द्विष अप्रीताविति धातोः सुखरूपस्यापि हरेर्द्वेषस्य दुःखरूपत्वात् तत्सरूपतां यातीति युक्तम्। ''सुखरूपस्य विद्वेषो दुःखरूप इतीर्यते। तस्माद् दुःखं सदा याति द्वेषवान् पुरषोत्तमे'' इति च। रावणादीनां रामादिद्वेषान्निर्दुःखानन्दभगवत्स्वरूपप्राप्त्युक्त्या सुखावाप्तिरिति श्रुतेः का गतिरिति चेदुच्यते। तत्र रक्षोरूपादीनां द्वेषाद् दुःखावाप्तिः, जयादीनामेव तत्स्वरूपप्रवेशेन सुखावगतिः। ''नृसिंहद्वेषतो दुःखं रक्षोरूपेण रावणः। अगाच्च रामविद्वेषाच्छिशुपालस्तथैव च। ततो भक्त्या परं यातो द्वेषरूपात् तमोगतिः'' इति। ''तस्मात् सर्वगुणोद्रेकिविद्वेषः सर्वदोषवान्। भवेदिति सरूपत्वं द्वेषादेः पुरुषस्य हि'' इति मानात्। यथोपासनं फलानवाप्तौ श्रुतिव्याकोपश्च स्यात्। तं यथा यथोपासते तदेव भवतीति, तं भूतिरिति देवा उपासांचक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते पराबभूवुरित्यादिश्रुतेः॥ २२॥

**कीटः पेशस्करं ध्यायन् कुड्यां तेन प्रवेशितः ।**
**याति तत्साम्यतां राजन् पूर्वरूपमसंत्यजन् ॥ २३ ॥**

**एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ।**
**स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥**

**देहो गुरुर्मम विरक्तिविवेकहेतु -**
**र्बिभ्रत् स्म सत्वनिधनं सततात्युदर्कम् ।**
**तत्वान्यनेन विमृशामि यथा तथापि**
**पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥**

---

अत्रोदाहरति **कीट इति** । ननु भवदिष्टार्थे विषममुदाहरणम् । द्वेषात् तत्समताप्राप्त्यवगमात् । उच्यते । मह्यं भोजनं दास्यतीति स्नेहस्य बाहुल्येन क्रमेणाल्पस्य द्वेषस्य सर्वात्मना निवर्तनेन स्नेहस्य प्रवर्धनेन च तत्समतावाप्तिरिति ''सत्यप्यत्यल्पविद्वेषे भोजनं दास्यतीति तु । स्नेहबाहुल्यतः कीटः पेशस्कारिसमो भवेत् । द्वेषे सर्वात्मना नष्टे स्नेहे चैव विवर्धति । सरूपता तदैव स्यात् कीटस्यैवं हरेरपि'' इति । किञ्च हरेः फलदातृत्वविशेषात् पेशस्कृतस्तदभावादल्पद्वेषोपि हरेः प्रसादाजनक इत्यनयोर्न सर्वसाम्यम् । लोके च तथा दर्शनात् । ''अत्यल्पोपि हरेर्द्वेषः स्नेहस्यानुदयंकरः । सोऽयं विशेषो नान्यस्य फलदाता च केशवः । न हि पेशस्कृतः किञ्चित् फलदातृत्वमिष्यते । स्वातन्त्र्याद् विद्विषां चैव केशवो न सुखप्रदः'' इति वचनात् ॥ २३ ॥

उपसंहरति **एवमिति** । स्वदेहाच्छिक्षितमतिमाह **स्वात्मेति** ॥ २४ ॥

देहो मम गुरुरित्यवैहीत्यन्वयः । कुतोऽत्राह **विरक्तीति** । सत्वं बलज्ञानसमाहारो निधीयतेऽस्मिन् परमेश्वर इति सत्वनिधनः तम्, सततमतिशयेनोच्चैर्ज्ञानसुखस्वरूप उदर्कः भगवान् तं बिभ्रद् देहः । विरक्तिविवेकहेतुत्वात् सत्वनिधनस्य सततात्युदर्कस्य हरेरधिष्ठानत्वाच्च यथावत् तत्वविचार-साधनत्वाच्च गुरुत्वमित्यर्थः । तर्हि हेयत्वं कुत इति तत्राह **तथापीति** । पारक्यं परकीयं मातृपित्रादेरधीन इत्यवसितो निश्चितः ॥ २५ ॥

जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्
पुष्णाति यः प्रियचिकीर्षया[1] वितन्वन् ।
सोऽन्ते सुकृच्छ्रमावरुद्धमनाः स्वदेहं
सृष्ट्वा स्वबीजमवसीदति वृक्षधर्मा ॥ २६ ॥

जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्ति-
र्बह्व्यः सपन्त्य इव गेहपतिं लुनन्ति ॥ २७ ॥

सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतुष्टहृदयःपुरुषं विधाय
ब्रह्मावबोधधिषणं मुदमाप देवः ॥ २८ ॥

---

यो हरिणा करुणया मनुष्यजन्म प्रापितोऽनेन देहेन प्रेष्ठं (परमात्मानं) विना (विषयानेव) सेवते तस्यायं (देहः) वृक्षबीजमिव संसारपरम्परारम्भकबीजमित्यनर्थहेतुरित्याह **जायेत्यादिना**। जायादीनां प्रियचिकीर्षया कर्माणि वितन्वन् यो जायादीन् पुष्णाति स वृक्षधर्मा वृक्षसमानः अन्ते सुकृच्छ्राज्जायादीनां पोषण एवारुद्धमनाः स्वस्य बीजमिव स्थितं स्वदेहं सृष्ट्वा अवसीदति नित्यक्लेशवान् भवतीत्यन्वयः । यथैको वृक्षो बीजेन बीजान्तरपरम्परारम्भणहेतुस्तथायं देहोपि असज्जायादि-पोषणलक्षणबीजान्तरैर्देहान्तरपरम्पराकारणमित्यर्थः ॥ २६ ॥

अवसीदतीत्युक्तं विवृणोति **जिह्वेति** । अमुं संसारिणम् । कर्मशक्तिः पाण्यादिलक्षणा पूर्वादृष्टशक्तिर्वा ॥२७॥

अनेन सर्वभोगायतनेभ्यो विशिष्टज्ञानेन्द्रियादिमत्तया पुरुषार्थोपयोगित्वेनास्य श्रैष्ट्यादनेन रसादिविषयान् विजित्य पुरुषार्थाय साधनानुष्ठानं विधेयमन्यथाऽनर्थपरम्परा तदवस्थैवेत्युक्तम् । तत्र सर्वस्मादस्य शरीरस्य श्रैष्ठ्यं कथमवसीयत इति तत्राह **सृष्ट्वेति**। अजया प्रकृत्या। आत्मशक्त्या

---

१. चिकीर्षयेति विश्लिष्य पठितव्यम् । चिकीर्षतया, चिकीर्षुतया, चिकीर्षणया इत्यपिपाठाः अन्यान्यकोशेषु ।

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु याव -
न्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥

एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि ।
विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतिः ॥ ३० ॥

नह्येकस्माद् गुरोर्ज्ञानं सुस्थिरं स्यात् सुपुष्कलम् ।
ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥

**श्री भगवानुवाच -**

इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्याङ्ग धीरधीः ।
वन्दितोऽभ्यर्चितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥

---

स्वाधीनसामर्थ्योपेतया । पुराणि शरीराणि । पुरुषं पुरुषशरीरम् । अवबोधधिषणं ज्ञानाश्रयम् ॥ २८ ॥

इदानीं परमपुरुषार्थाय प्रयतनीयमित्यर्थतः सूचितं स्पष्टमाह **लब्ध्वेति** । बहुसम्भवान्ते बहुजन्मावसाने । अनुमृत्यु पृष्ठतोऽनुगतान्तकम् । धीरं अनित्यमर्थदमिदं शरीरं यावन्न पतेत् ततः पूर्वमेव निःश्रेयसाय यतेतेत्यन्वयः । शरीरयात्राप्रयत्नोपि नानुष्ठेय इत्याह **विषय इति** ॥ २९ ॥

स्वनिश्चितार्थमाह **एवमिति** । आत्मनि विज्ञानालोकः परमात्मविषयविज्ञानलक्षणप्रदीपप्रकाशः ॥ ३० ॥

एकस्माद् गुरोः स्वार्थे सिद्धे बाहुल्यात् किं प्रयोजनं सर्वस्मादसङ्गत्वादिक एव तात्पर्यार्थ इत्यत्राह[1] **नहीति** । सुष्ठु पुष्कलं पूर्णम् । तत्र हेतुमाह **ब्रह्मेति** । बहुधा गीयमानत्वादल्पबुद्धेर्निश्चियो न स्यादित्यर्थः । हीत्यनेन ''एकस्मात्तु गुरोर्ज्ञानं जायते नैव कस्यचित् । एकस्मादेव जायेत योग्याद्[2] ब्रह्मपदस्य तु ।

---

१. इत्याह इत्यपि पाठः ।
२. योग्य इति पाठो बहुकोशेषु । तदात्वेऽर्थोन स्पष्टः ।

अवधूतवचः श्रुत्वा सर्वेषां नः स पूर्वजः ।
सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥

॥ इति नवमोऽध्यायः ॥

॥ अथ दशमोऽध्यायः ॥

श्रीभगवानुवाच -

मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ।
वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥

अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ।
गुणेषु तत्वज्ञानेन सर्वारम्भविपर्ययम् ॥ २ ॥

---

स्वयं तूपदिशेज्ज्ञानं वैरिञ्चिपदयोगिनः[१] । अनुग्रहात् तेन चापि ज्ञानं दत्वा विमुक्तिदः । ज्ञानं प्राप्य बहुभ्योपि नर्ते मुक्तिश्चतुर्मुखात् । ज्ञानमप्राप्य तेषां तु ज्ञानदो विष्णुरेव हि'' । इति वाक्योक्तविशेषं सिंहावलाकनन्यायेन सूचयति ॥ ३१-३२ ॥

समे ब्रह्मणि चित्तं यस्य सः तथोक्तः ॥ ३३ ॥

**॥ इति श्रीविजयध्वजतीर्थविरचितायां श्रीभागवतटीकायां पदरत्नावल्यां एकादशस्कन्धे नवमोऽध्यायः ॥**

मुमुक्षुणा हरेरपरोक्षज्ञानमापाद्यमितीतिहासमुखेनोक्तम् । तत्साधनानि निरूपयत्यस्मिन्नध्याये। तत्रादौ वर्णाश्रमाचाराचरणप्रकारमाह **मयोदितेष्विति** । अकामात्मा फलाभिसान्धिरहितमना भूत्वा ॥ १ ॥

सर्वसाधनेषु वैराग्यं प्रथममापाद्यमित्याह **अन्वीक्षीतेति** । अन्तःकरणशुद्धिहेतुनानावर्णाश्रमादिविहिताचारेण विशुद्धात्मा पुमान् गुणेषु शब्दादिषु तत्वज्ञानेन पुरुषार्थासाधनतानिश्चयज्ञानेन[२]

---

१. वैरिञ्चपदयोगिनि इति हृषीकेशतीर्थपाठः ।
२. पुरुषार्थसाधनतानिश्चयज्ञानेनेत्येव सर्वकोशेषु पाठः ।

**सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ।**
**नानात्मकत्वाद् विफलस्तथाऽभेदोऽन्यधीगुणैः ॥ ३ ॥**

**निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।**
**जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम् ॥ ४ ॥**

---

विषयात्मनां विषयेष्वासक्तचित्तानां देहिनां सर्वेषां कर्मारम्भाणां विपर्ययं फलवैपरीत्यमन्वीक्षेतेन्यन्वयः । अन्वीक्षणं नाम यथावस्तुदर्शनम् । तदेव पुरुषार्थसाधनं नान्यत् ॥ २ ॥

शुक्तिरजतादिवन्मुमुक्षणा हेयमिदं ज्ञानमिति[1] भावेनोपपादयति **सुप्तस्येति** । यथा सुप्तस्य जाग्रत्त्वेन विषयालोको यथा वा ध्यायतो मनोरथाश्च नानात्मकत्वाद् वस्तुस्थितेरन्यथात्वाद् विफलः अत एवाविद्यमानः तथाऽन्यधीगुणैः स्वबाह्यबुद्धिस्थगुणैः अस्वरूपैः कामक्रोधादिभिरभेदः अहं क्रोधी अहं कामयितेत्यादिलक्षणो यः असौ हेय इत्यर्थः । ''वस्तुस्थितेरन्यथात्वं नानात्वमिति कीर्तितम् । ज्ञानस्यैव तु नानात्वान्न स्यात् कामाद्यहंमतिः । कामादिषु स्वधीस्थेषु केवलं जीव-संस्थितिः । इति बुद्धिरभेदः स्यात् स न कार्यः कथञ्चन । अदुष्टकामश्चिद्रूपो जीवाभिन्नस्वरूपतः । दुष्टकामो मनोधर्मस्तस्माद् हेयः सदैव सः'' इति प्रमाणेन हेयत्वं ज्ञायत इत्यर्थः ॥ ३ ॥

अकामात्मेत्युक्तं विवृणोति **निवृत्तमिति** । फलानपेक्षं[2] यथावस्तुज्ञानपूर्वकं यत् कर्म तन्निवृत्तं तदेव सेवेत कुर्यात् । अनीदृशं यत् कर्म तत् प्रवृत्तं त्यजेत् न कुर्यात् । अहमेव परो यस्य स मत्परः । अनेन कामात्मनोऽबुधस्य कर्मविधानं प्रतीतिविरुद्धमिति परास्तम्[3] । ''निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्'' इत्येतदत्र मानम् । ननु सकामस्य कर्मविधानात् तत्त्यागः कथमत्राह **जिज्ञासायामिति** । जिज्ञासायां ब्रह्मविचारे । कर्मचोदनां कर्मविधिम् । ब्रह्मज्ञानोत्पत्तौ प्रवृत्तानां सर्वशब्दानां कर्मादिविषयत्वांगीकारे विरोधापत्त्या तत्रानादरलक्षणत्यागो विधीयते न तु सर्वात्मना । अन्तःकरणशुद्धिद्वारा ज्ञानाङ्गत्वेनाङ्गी-काराहर्त्वादिति । अतो नाद्रियेदित्युक्तम् ॥ ४ ॥

---

१. अहं कामी क्रोधीत्यादिज्ञानम् ।
२. क्रियाविशेषणमिदम् ।
३. अस्पष्टमिदम् ।

**यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् ।**
**मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५ ॥**

**अमान्यमत्सरो दक्षो निगमे दृढसौहृदः।**
**असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥**

**जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ।**
**उदासीनः समं पश्येत् सर्वेष्वर्थमिवात्मनः ॥ ७ ॥**

**विलक्षणः स्थूलसूक्ष्माद् देहादात्मेक्षिता पृथक् ।**
**यथाग्निर्दारुणो दाह्याद् दाहकोऽन्यः प्रकाशकः ॥ ८ ॥**

---

ननु यमादिचोदनापि नादरणीया किम् । नेत्याह **यमानिति** । यमनियमा ''अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः । आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमा भयम् । शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् । तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ''इति वक्ष्यति । क्वचिद् विहितकाले । निवृत्तादिवत् ज्ञनोत्पत्तौ गुरूपासनमप्यन्तरङ्गमित्याह **मदभिज्ञमिति** । मय्येवात्मा ध्यानसमर्था बुद्धिर्यस्य स तथा तम् । ''मामेव नित्यं ध्यायेद् यो मदात्मा सम्प्रकीर्तितः'' इति वचनात् ॥ ५ ॥

तस्य गुरुप्रसादजनकगुणानाह **अमानीत्यादिना** । नितरां गमयतीति निगमो वैष्णवशास्त्रं तस्मिन् ॥ ६ ॥

सर्वेषु जायादिषु उदासीनो ममताशून्यः सर्वेषु स्वपरजायादिषु आत्मनः स्वस्य अर्थं प्रयोजनमिव परप्रयोजनमपि स्वप्रयोजनेन समं विर्विशेषं पश्येत् । अथवा सर्वेषु जायापत्यादिषु आत्मनः स्वस्यार्थमिव प्रयोजनमुभयोः समं नतु विशेषं पश्येत् । इवोभये च सादृश्य इत्यभिधानम् । यावत्प्रयोजनं पश्येदिति वा ॥ ७ ॥

किञ्च जीवपरमात्मानावपि परस्परं देहादेश्च भिन्नत्वेन ज्ञातव्याविति सदृष्टान्तमाह **विलक्षण इति** । स्वदृक् स्वयं प्रकाशः । ईक्षिता अस्य सर्वस्य द्रष्टा । आत्मा परमात्मा स्थूलसूक्ष्मदेहाद् विलक्षणो भिन्नश्च । आत्मा जीवश्च हरेर्देहादेश्च भिन्नः, इति ज्ञातव्यौ इति शेषः । दाह्याद् दारुणोऽन्यः पावकः ॥ ८ ॥

**निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् ।**
**अनुप्रविष्ट आधत्ते एवं देहगुणान् परः ॥ ९ ॥**

**योऽसौ गुणैर्विरचितो देहोयं पुरुषस्य हि ।**
**संसारस्तन्निबन्धोयं पुंसोऽविद्यास्थितात्मनः ॥ १० ॥**

**तस्माज्जिज्ञासयाऽऽत्मानमात्मस्थं केवलं परम् ।**
**संगम्य निरसेदस्य वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥**

**आचार्योऽरणिराद्या स्यादन्तेवास्युत्तरारणिः ।**
**तत्सन्धानं प्रवचनं विद्यावह्निः सुखावहः ॥ १२ ॥**

---

प्राप्तस्य हि प्रतिषेध इति न्यायादनयोरभेदशंकायाः किं बीजमत्राह **निरोध इति** । यथा जीवो निरोधादीन् तत्कृतान् देहगुणानाधत्ते । एवं परोपि देहमनुप्रविष्टो देहगुणानाधत्त इत्यन्वयः । निरोधो मरणम् । अणुत्वं बृहत्त्वं नानात्वं सुरनरादिनानाजातिविशिष्टत्वमनयोर्वैलक्षण्यज्ञानं बीजमित्यर्थः ॥ ९ ॥

यद्वा इदमेवाज्ञानं संसारकारणमित्याह **य इति** । योऽसौ सत्वादिगुणैर्विरचितो देहोऽयं पुरुषस्य जीवस्यार्थे हि यस्मात् अविद्यास्थितात्मनः अविद्यायामज्ञाने स्थितमनसः पूंसः अयं संसारस्तन्निबन्धः देहाभिमाननिमित्तकः ॥ १० ॥

''अदेहधर्मवान् विष्णुर्देहधर्मवदीयते । जीवस्त्वदेहधर्मोपि परतो देहधर्मवान् । स्वयं त्वनभिमानः सन्नज्ञानामेव दर्शयेत् । विष्णुर्जीवस्त्वमानी यावन्मुक्तिपदं व्रजेत्'' इति वचनाद् विष्णोर्देहधर्मवदाभानमज्ञानां नतु ज्ञानिनाम्, जीवस्य स्वतो देहधर्मरहितस्यापि (देहधर्मवदाभानं) देहाभिमानादिति विवेकलक्षणो विचारः कर्तव्य इत्युपसंहरति **तस्मादिति** । उक्तप्रकारेण जिज्ञासया आत्मस्थं देहान्तःस्थितं केवलं दुर्भगदेहिभोग्यदुःखरहितमात्मानं श्रीनारायणं परं विलक्षणं संगम्य ज्ञात्वा अस्य जीवस्य वस्तुबुद्धिं शक्तबुद्धिं निरसेत् त्यजेत् । कथम् । यथाक्रमं जिज्ञासया ब्रह्मादिजीवराशेः यथास्वरूपतारतम्यं विचार्य ज्ञात्वा परब्रह्मबुद्धिं त्यजेदित्यर्थः । ''अवस्त्वशक्तमुद्दिष्टं शक्तं वस्त्विह भण्यते । तस्मादेकं परं ब्रह्म वस्तुशब्दोदितं सदा'' इति लक्षणवचनात् ॥ ११ ॥

ननु ज्ञानोत्पत्त्यर्थं गुरूपास्तिः कर्तव्येत्युक्तम् । तत्र कथंकारं ज्ञानमुत्पद्यते येन जीवस्य ब्रह्मभावबुद्धितृणदहनं स्यादित्यतस्तत्तत्प्रकारमाह **आचार्य इति** ॥ १२ ॥

**वैशारदी साऽतिविशुद्धबुद्धिर्धुनोति मायां गुणसम्प्रसूतिम्।**
**गुणांश्च संदह्य यदात्म्यमेतत् स्वयं च शाम्यत्यसमिद् यथाग्निः ॥ १३ ॥**

**अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः।**
**नानात्वमथ नित्यत्वं लोककालागमात्मनाम्॥ १४ ॥**

**मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी तथा।**
**तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥**

---

विद्यावह्नेः सुखावहत्वं नित्यदुःखहेतुजीवब्रह्मैक्यबुद्धिशुष्कतरुदाहेन नित्यानन्दनिदानत्वादित्याह **वैशारदीति**। विविधं शारं सुखदुःखमिश्रलक्षणं संसारं द्यतीति विशारदो विष्णुस्तस्य विद्यमाना वैशारदी सा अतिविशुद्धबुद्धिः अपरोक्षबुद्धिः गुणसम्प्रसूतिं अयोग्यकामादिजननीं मायां पिशाचवत् स्थितां जीवस्वरूपाच्छादिकां निरस्य परमाच्छादिकां विधुनेति उद्‌घाटयति। अयोग्यकामादिगुणांश्च संदह्य एतद् दुःखादिकम् यदात्म्यं यस्या मायायाः स्वरूपाधीनं तादृशीं स्वयं सा बाह्यान्तकरणज-बुद्धिश्च तदन्तःकरणं च दग्ध्वा असमिन्निरिन्धनोऽग्निरिव शाम्यति[१]। स्वरूपज्ञानेनैव स्वस्वरूपमीश्वरादिकं चानुभवति, मुक्ताविति शेषः। "पिशाचवत् स्थिता माया तूच्यते जीवगा सदा। दह्यन्ते तद्गुणाः सर्वे साच प्रातिस्विकी नरे" इति प्रमाणवचनादुक्तं युक्तम्। अनेन बाह्यान्तःकरणं नश्यति स्वरूपान्तःकरणजन्यज्ञानेन स्वस्वरूपादिकमीश्वरं चानुभवतीत्येतत् सम्यङ् नावगतमतोऽन्यत् प्रमाणं वक्तव्यमितीयं शङ्का "बाह्यन्तःकरणाज्जन्यं ज्ञानं नश्यति मुक्तिगे। स्वरूपज्ञानतो भोगान् भुङ्क्ते मुक्तौ यथेष्टतः" इत्यनेन परिहर्तव्येति ज्ञातव्यम्। "एतच्छब्देन दुःखादिरपरोक्षतयोच्यते। क्वचिद् विश्वं क्वचिद् ब्रह्म क्वचिन्निन्द्यमितीर्यते" इति वचनादेतच्छब्देन दुःखादिकमत्रोच्यते इति युक्तम्। तप्तलोहाम्बुनाशवद् भेदज्ञानविनाशादात्मैकत्वमेव न नानात्वम्, अत एव तेषां नित्यत्वं च व्यावहारिकमेवेति यद् व्याख्यानं तदुत्तरग्रन्थविरुद्धत्वाद् विदुषां परिषदि न सामञ्जस्यं धत्ते ॥ १३ ॥

तत्कथमत्राह **अथेति**। एषामिति प्रत्यक्षं लोककालागमात्मनामित्यनेन प्रत्यक्षमनुमानमागमं च प्रमाणयति। लोके काले आगमे वेदे च आत्मा मतिर्येषां ते तथा तेषाम्, लोककालवेदज्ञाना-मित्यर्थः। अनेन ज्ञानतारतम्यं च सूचितम्। तस्मात् पुण्यकर्मकर्तॄणां पापकर्मकर्तॄणां मिश्रकर्मकर्तॄणामत

---

१.वैशारदी मतिः तां बाह्यान्तःकरणजां बुद्धिं तदन्तःकरणं च दग्ध्वा शाम्यतीति भावः।

**एवमप्यत्र सर्वेषां देहिनां देहयोगतः ।**
**कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥ १६ ॥**

**तत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते ।**
**भोक्तुश्च सुखदुःखानां कोन्वर्थो विवशं भजेत् ॥ १७ ॥**

---

एव सुखदुःखमिश्रभोक्तॄणामेषां नानात्वमथैषां नित्यत्वं च मन्यसे जानासि यदि त्वम्, तस्मान्न मया भेदसाधने प्रयतनीयमित्यत आत्माभेदोऽनुपपन्न इति । "देहापेक्षमनित्यत्वं जीवानां जननं तथा । स्वतस्त्वजाश्च नित्याश्च बहवः सुखरूपिणः । उत्तमा जीवसंघास्तु नीचा वै नित्यदुःखिनः" इत्यतोऽनित्यत्वं जननं सुखैकभोक्तृत्वं च युज्यते । इयं व्यवस्था कस्मादिति तत्राह **सर्वभावानामिति** । यथा सर्वेषां देवेश्वरमनुष्यादिजातिभिन्नानां भावानां जीवानां संस्था व्यवस्था योग्यता औत्पत्तिकी स्वाभविकी हि यस्मात् तस्मात्तत्तदाकृतिभेदेन देवासुरादिशरीरभेदेन तथा जायते जीवसंघः । तस्य धीर्ज्ञानं च योग्यतानुसारेण भिद्यते । अनेनोत्तमयोग्यतावतां भेदज्ञानेऽधिकार इतरेषामुभयेषां च यथासंभवमन्यत्रेत्युक्तं भवति ॥ १४-१५ ॥

ननु दृश्यमानत्वान्नित्यानामपि जन्मादिकमस्तु तन्मायामयमिति मा शङ्कीत्याह **एवमपीति** । एवमपि नित्यत्वेपि अत्र जननादिलक्षणसंसारे सर्वेषां देहिनां कालावयवतः रात्रिदिनाद्यवच्छिन्नेषु कालावयवेषु देहयोगतः देहम्बन्धेन जन्मादयो भावा असकृत् सन्ति, प्रवाहतः सत्या इत्यर्थः । देहापेक्षमनित्यत्वं जीवानामित्येतदत्राप्यनुसन्धेयम् ॥ १६ ॥

ननु सदनुविद्धत्वात् सत्यत्वं न स्वत इत्याशंक्यार्थक्रियायोग्यत्वात् स्वाभाविकमेवेति भावेनाह **तत्रापीति** । तत्रापि स्वतोऽनित्येष्वपि जन्मादिमति, जगत्यपीति वा, कर्मणां कर्तुः, जातावेकवचनम्, अस्वातन्त्र्यं कर्मफलसुखदुःखभोक्तुरस्वातन्त्र्यं च, उत्तमानामवरनियतत्वमवरजनस्योत्तमत्त्वं च, लक्ष्यते दृश्यते, भवतेति शेषः । ततः किमत्राह **कोन्विति** । कोन्वर्थः पुरुषार्थः सुखलक्षणः विवशं नीचवशं पुरुषं भजेत् । न कोपि पुरुषार्थः । कं पुरुषं पुरुषार्थः प्राप्नोतीत्यस्यापि इदं एवमेव व्याख्येयं विशिष्टपुरुषवशं पुरुषं भजेदिति । अत्र विशेषस्तु "स्वाधिकानां वशत्वात्तु परमं सुखमेव तु । तदन्येषां वशे यस्तु किं सुखं तस्य भण्यताम् । स्वाधिकानां वशत्वं च तेषां भक्तिमतः सुखम् । तदन्येषां तु दुःखाय तस्माद् भक्त्यधिको भवेत्" इत्यनेनावगन्तव्यः । अनेन मुक्तावप्यन्यनियतत्वे संसारधर्मत्वात् तदर्थे न प्रयतनीयमिति शङ्का निरस्ता ॥१७ ॥

**न देहिनां सुखं किञ्चिद् विद्यते विदुषामपि।**
**तथा च दुःखमूढानां वृथाऽहंकारिणां परम्॥ १८॥**

**यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः।**
**तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद् यथा॥ १९॥**

**कोन्वर्थः सुखयन्त्येव कामो वा मृत्युमन्तिके।**
**आघातं नीयमानस्य वध्यस्येव पदेपदे॥ २०॥**

**श्रुतं च दृष्टवन्नङ्क्ष्येत् स्पर्धाऽसूयाऽत्ययाप्ययैः।**
**बह्वन्तरायैर्विहतं कृषिवच्चापि निष्फलम्॥ २१॥**

---

अत्र कैमुत्यमाह **नेति**। विदुषामपि देहिनां देहाभिमानिनां यदा सुखं न विद्यते तथा तदा दुःखमूढानामहंकारिणां च सुखं नास्तीति किं पुनः। ''पुनःशब्दः प्रस्तुतार्थे तथाशब्द उदीर्यते'' इति वचनात् पुनःशब्दः तथाशब्दार्थे वर्तते। दुःखमूढेभ्योप्यहंकारिणामात्मन्यविद्यामानगुणारोपवतां किं पुनस्तरामिति च योज्यम्। यावद्देहाभिमानित्वमधिकं तावद्दुःखितं च ज्ञातव्यमित्यतो देहाभिमानिनश्च दुःखमूढाइत्युक्तम्। परमित्यनेनाभिमानित्वमेव प्रयोजकमिति॥ १८॥

नन्वस्त्वज्ञानां दुःखादिकं तत्परिहारप्राप्त्युपायानभिज्ञानात्, अग्निष्टोमादिना तदभिज्ञानां सुखप्राप्तिदुःखपरिहारौ स्यातामित्येतदनूद्य परिहरति **यदीति**। ये तु लोके विद्वत्त्वेन प्रसिद्धाः पुरुषा यदि सुखस्य प्राप्तिं दुःखस्य विघातं परिहारं जानन्तीति मतं तेऽप्यद्धा सत्यं यथार्थं योगमुपायं न विदुः। कुतो न विदुरत्राह **मृत्युरिति**। यथा येनोपायेन मृत्युः संसारो न प्रभवेत् नाङ्गीकुर्यात्[1] तम्। देहमानित्वे बहुतरदुःखग्रस्तत्वादित्यर्थः॥ १९॥

नन्वर्थकामौ तयोरुपायः स्यातामत्राह **कोन्विति**। अन्तिके स्थितमृत्युमेनं पुरुषम्। अत्र दृष्टान्तमाह **आघातमिति**। आघातं मरणस्थानं प्रति नीयमानस्य वध्यस्य पुंसो यथा सुखं नास्ति तथेति॥ २०॥

ननु स्वर्गकामस्य सुखहेतुत्वात्, अन्यथा तत्कर्मानुष्ठानं व्यर्थं स्यात्, अतः कथं कामो वा न

---

१. नाङ्कुरीकुर्यादिति पाठान्तरम्।

**अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः ।**
**तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥ २२ ॥**

**इष्ट्वेव देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ।**
**भुञ्जति देववत् तत्र भोगान् दिव्यान् निजार्जितान् ॥ २३ ॥**

**स्वपुण्योपचिते शुभ्रे विमान उपगीयते ।**
**गन्धर्वैर्विहरन् मध्ये देवीनां हृद्यवेषधृक् ॥ २४ ॥**

**स्त्रीभिः कामगयानेन किङ्किणीजालमालिना ।**
**क्रीडन् न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥ २५ ॥**

**तावत् प्रमोदते स्वर्गे यावत् पुण्यं समाप्यते ।**
**क्षीणपुण्यः पतत्यर्वागनिच्छन् कालचालितः ॥ २६ ॥**

---

सुखयतीति तत्राह **श्रुतमिति** । कामस्य कर्मद्वारा सुखहेतुत्वेपि तन्नित्यं न, क्षणिकत्वात् । दृष्टवत् कर्मनिर्मितमन्दिरादिवत् । विश्वकर्मीयशास्त्रसिद्धवस्तुत्वं त्वप्रयोजकम् । नच मुक्तिवन्नित्यत्वमिति वाच्यम् । ज्ञानसाध्यत्वविशेषात्[१] । स्वर्गकामेनानुष्ठीयमानमग्निष्टोमादिकं निश्चितफलं न स्याद् बह्वन्तरायविहतकृष्यादिकामवदित्याह **स्पर्धेत्यादिना** । यथा कृषिवाणिज्यादिकं मिथः स्पर्धासूयादि-बह्वन्तरायैर्विहतं भवति स्पर्धादिप्रयुक्ताभिचारिककर्मणा उन्मादादिनाप्यग्निष्टोमाद्यनुष्ठानमपि कुण्ठितम् । अत्ययो विध्यतिक्रमणम् । अप्ययोऽन्तराले मरणम् ॥ २१ ॥

ननु सत्कृष्यादिरिव स्वनुष्ठितोऽग्निष्टोमादिधर्मः कर्मफलजनकः किं न स्यादत्राह **अन्तरायैरिति** । तेन धर्मेण । अर्थकामयोः सुखहेतुत्वाभावेऽपि स्वनुष्ठितस्य धर्मस्य तद्धेतुत्वं स्यादित्यतो वाह **अन्तरायैरिति** ॥ २२॥ निजधर्मार्जितान् ॥ २३ ॥

देवीनामप्सरसाम् ॥ २४ ॥ सुराक्रीडेषु देवक्रीडास्थानवनेषु ॥ २५ ॥समाप्यते क्षीयते ॥ २६ ॥ स्वतोऽसुराणां वैष्णवाचार्यैर्यज्ञं कृत्वा स्वर्गं गत्वा कर्मफलं भुक्त्वा मर्त्यलोकमागतानां गतिमाह **यदिति** ॥ २७ ॥ आलभ्य हिंसित्वा ॥ २८ ॥ मनुष्ययाज्ञिकस्य स्थितिमाह **कर्माणीति** । मर्त्यधर्मिणो

---

१. अस्पष्टमिदम् । मुक्तेर्ज्ञानसाध्यत्वेन नित्यत्वं युज्यते कर्मसाध्यस्य स्वर्गादेर्न तथेत्यभिप्रायः स्यात् ।

यद्यधर्मरतः सङ्गादसतामजितेन्द्रियः ।
कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥ २७ ॥

पशूनविधिनाऽऽलभ्य प्रेतभूतगणान् यजन् ।
नरकानवशो जन्तुर्गत्वा यात्युल्बणं तमः ॥ २८ ॥

कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुमान् ।
देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥ २९ ॥

लोकानां लाकपालानां मद्भयं कल्पजीविनाम् ।
ब्रह्मणोपि भयं मत्तो द्विपरार्धपरायुषः ॥ ३० ॥

गुणाः सृजन्ति कर्माणि कालो नु सृजते गुणान् ।
जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥ ३१ ॥

यावत् स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः ।
नानात्वमात्मनो यावत् पारतन्त्र्यं तदैव हि ॥ ३२ ॥

यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।
य एतत् समुपासीरंस्ते मुह्यन्ति शुचर्पिताः ॥ ३३ ॥

---

मरणधर्मिणः पुरुषस्य तत्र देहे किं सुखं लभ्यते न किमपीत्यर्थः ॥ २९ ॥ न केवलं लोकत्रयस्यानित्यफलत्वम्, (किन्तु) तत उपरितनानां सत्यलोकपर्यन्तानामप्येवमेवेत्याह **लोकानामिति** ॥ ३० ॥

एवं मनुष्यादिब्रह्मपर्यन्तलोकानां लोकपालानां च सृष्ट्यादिकर्त्रा कालाख्येन भगवता मायागुणोपादानत्वेन तत्तत्कर्मानुगुणं प्रवर्त्यते । तस्मादस्य ज्ञानमेवात्यन्तदुःखनिवर्तकत्वेन नित्यं सुखदायीति भावेनोपसंहरति **गुणा इति** । गुणाः सत्वादयः । प्रकृतेः कर्मफलभोक्तृत्वमिति मतं प्रत्याह **जीवस्त्विति** । तुशब्देनाचेतनस्य भोक्तृत्वानुपपत्तिं दर्शयति । सत्वादिगुणयुक्तः ॥ ३१ ॥

एवं जीवपरभेदं प्रतिपाद्य तदभेदमतमनूद्य दूषयति **यावदिति** । यावदित्यारभ्य तावदीश्वरतो भयमित्यन्तो ग्रन्थः पूर्वपक्षीयः । ये एतन्मतं समुपासीरन् सेवन्ते तेऽन्धेतमसि मुह्यन्ति दुःखोद्रेकात् ॥ ३२-३३ ॥

काल आत्माऽऽगमो लोकः स्वभावो धर्म एव च।
इति मां बहुधा प्राहुर्गुणव्यतिकरेऽसति ।। ३४ ।।

गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः।
गुणैर्न बध्यतेऽदेही बध्यते वा कथं विभो ।। ३५ ।।

---

तर्हि स्वसिद्धान्तः क इति तत्राह **काल इति**। गुणव्यतिकरेऽसति मुक्तिदशायां बहुधा कालादिभिर्नामभिर्मामुपासत इति प्राहुः, वेदादय इति शेषः। ''कालः सर्वगुणोद्रेकादाप्तत्वादात्मनामकः। आगमोऽवगतेरस्य लोको ज्ञानस्वरूपतः। स्ववशत्वात् स्वभावोऽयं धारणाद् धर्म इत्यपि। उपासते सदा मुक्ताः परानन्दैकभागिनः। तदेतत् तत्वमज्ञात्वा प्राहुर्दुमतयः परे। यावत्तु गुणवैषम्यं तावन्नानात्वमात्मनः। भेदबुद्धिस्तु यावत् स्यात् तावदीश्वरतो भयम्। यावदीश्वरतन्त्रत्वं तावत् तस्माद् भयं भवेत्। उपासते य एतत्तु नित्यशोके पतन्ति ते। महातमस्यनानन्दे तस्मान्नैवं विचिन्तयेत्। तस्मान्नित्यं तु नानात्वं जीवानामीशतन्त्रता। स्वाधिकानां वशत्वं च मुक्तावपि सदेष्यते। एवं ज्ञात्वा विमुच्यन्ते परानन्दं व्रजन्ति च'' इति प्रमाणात् कालादिनामानि हरेरेव मुख्यार्थानीत्यतो[१] गुणपूर्णस्य हरेः दुःखसमुद्रमग्नेन जीवेनैक्यं दूरतोऽपाकृतमिति भावः। [२]कल कामधेनाविति धातोः कमनीयानां गुणानां धेनुराधार इति कालः। सर्वेषां सर्वस्मादाप्तत्वात् आत्मा, आगच्छति अवगच्छति जानाति सर्वमित्यागमः। लुक् प्रकाश इति धातोः प्रकाशापरपर्यायज्ञानस्वरूपत्वात् लोकः। स्वाधीनो भावः सत्तालक्षणो यस्य सः स्वभावः, स्वतन्त्र इत्यर्थः। धारयति सर्वमिति धर्मः ।। ३४ ।।

भगवदुक्त्या सम्यग्ज्ञातजीवपरभेदोप्युद्धवः स्थूलमतीनामपि निस्तुषं विविच्य भेदं ज्ञापयितुं पृच्छति **गुणेष्विति**। स्वतोऽनपावृतः अदेही परमात्मा देहजेषु गुणेषु स्पर्शादिविषयेषु वर्तमानोऽपि गुणैर्विषयैः न बध्यते उत बध्यते। द्वितीये कथं बध्यत इति ।। ३५ ।।

---

१. मुख्यानीत्यत इति स्वरसम्।

२. भाष्योदाहृतप्रमाणवचनव्याख्यानमेतत्।

उद्धव उवाच -

कथं वर्तेत विहरेत् कैर्वा ज्ञायेत लक्षणैः ।
किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा ॥ ३६ ॥

एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ।
नित्यमुक्तो नित्यबद्ध एक एवेति मे मतिः ॥ ३७ ॥

॥ इति एकादशोऽध्यायः ॥

॥ अथ द्वादशोऽध्यायः ॥

**श्रीभगवानुवाच -**

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे बन्धो न मोक्षणम् ॥ १ ॥

---

कोऽर्थ इति तत्राह **कथमिति** । यदि बद्धस्तर्हि केन प्रकारेण वर्तेत । लोके बद्धस्य प्रवृत्त्यदर्शनात् । चेष्टादिलिङ्गाभावेन तज्ज्ञानं च दुरापादमिति भावेनाह **कैरिति** । बद्धस्यापि भोगाभावे मरणं स्यादतः **किं भुञ्जीतेति** । भुञ्जानस्य हानोपादाने दृष्टे, तत्रायं किं जहाति । बद्धः शयनाद्यन्यतमं करोति, तत्रायं किं करोति ॥ ३६ ॥

ब्रूहि परिहारेण स्पष्टीकुरु । एवं पृच्छतस्तव कोऽभिप्राय इत्यत एकजीववादिमतमवलम्ब्य प्रश्न-बीजमाह **नित्येति** । कुत एतदिति चेत्, न मे मोक्षो न बन्धनमिति परिहारात् । ''शिष्योऽपि पूर्वपक्षस्थस्तदेवात्ममतं ब्रुवन् । नैव दुष्यत्यसत्येन स्थिरत्वार्थं हि तद्वचः'' इति वचनादुद्धवस्य नासत्यतादोषोऽपि ॥ ३७ ॥

**॥ इति श्रीविजयध्वजतीर्थविरचितायां श्रीभागवतटीकायां पदरत्नावल्यां एकादशस्कन्धे एकादशोऽध्यायः ॥**

भेदज्ञानमेव मुक्तिसाधनं तत्साधनं भक्तिस्तस्य वैराग्यमित्येतत् सर्वमेतस्मिन्नध्याये कथयति । तत्रादौ गुणेष्वित्यादिना यदुद्धवचोद्यं तत् परिहरति **बद्ध इत्यादिना** । बद्धो मुक्त इति ह्याख्या, जीवस्येति शेषः । हिशब्द एवार्थे जीवस्यैवेत्यर्थः । स्वतश्चिद्रूपस्य कथं घटत इत्यत्राह **गुणत इति** । सत्वादिगुणसम्बन्धात् । निरवयवस्यैतत्सम्बन्धः कथमत्राह **म इति** । गुणानां जीवस्य च मम

**शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया।**
**स्वप्ने यथाऽऽत्मनः ख्यातिः संसृतिर्नतु वास्तवी॥ २॥**

**विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्।**
**मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते॥ ३॥**

---

वशत्वान्मदधीनप्रवृत्तित्वाच्च। दुर्घटघटकशक्तिमत्त्वान्ममेत्यर्थः। तर्हि शैवलावृतशरीरवत् (?) न कदाप्यस्य सुखमत्राह न **वस्तुत इति**। वस्तुवृत्त्या नास्ति। तन्निवर्तकेश्वरेच्छाधीनत्वान्न मिथ्येत्यर्थः। गुणसम्बन्धत्वाद् भवत एव तौ किं न स्यातामत्राह **गुणस्येति**। जातिविवक्षयैक-वचनम्। गुणानां मायामूलत्वात् तत्प्रवर्तकत्वेन सम्बन्धः, स्वतोऽहं निर्गुण इत्यतो मम बन्धमोक्षौ न स्त इति भावः। ब्रह्मण एव मायामयौ बन्धमोक्षौ नाविद्यमानजीवस्येत्यङ्गीकर्तुमुचितम्, प्रतीतत्वान्नाप्रामाणिकोऽध्याहारो युक्त इतीदं चोद्यम् ''अमायत्वान्निर्गुणोऽहं बन्धमोक्षौ न चापि मे। मदधीनस्य जीवस्य बन्धमोक्षौ मदेव तु'' इति स्पष्टप्रमाणवचनेन परिहृतमिति त्वन्मनोरथकल्पनमत्र न प्रकाशयेति॥ १॥

जीवस्य संसारो वास्तवो न चेत् तर्हि कस्मादयमस्येत्याशङ्क्याज्ञानादिति सोदाहरणमाह **शोकमोहाविति**। मायया अज्ञानेन। यथा स्वप्ने स्वप्नोऽयमित्यज्ञानेनात्मनः शोकमोहादिख्यातिस्तथा स्वरूपाज्ञानेन शोकादि नतु स्वरूपस्य, तस्य सुखात्मकत्वात्। अर्थक्रियाकारित्वेन सत्यपि संसृतिः न वास्तवी प्रतिहन्तुमशक्या भवतीत्यर्थः। ''स्वप्नोऽयमित्यविज्ञानात् स्वप्ने दुःखमुपाश्नुते। निजस्वरूपानुभवराहित्यात् तद्वदेव तु। जाग्रद्दुःखमपि प्रोक्तं विष्णुतत्वं नपश्यतः। तस्मात् तदस्वभावत्वात् सदप्येतदवास्तवम्'' इति वचनात् स्वप्नदृष्टान्तेन संसारस्य न मिथ्यात्वत्वमुच्यत इति॥ २॥

अत्र माया निकृतिः किं न स्यात् तथा प्रसिद्धेरित्यतस्तन्निराकरणमाह **विद्याविद्ये** इति। मम तनू प्रतिमावत् स्थिते। किं कार्ये इत्यत्राह **शरीरिणामिति**। शरीरिणां देहिनां बन्धमोक्षकरी, आद्ये अनादितो विद्यमाने। मे मायया प्रकृत्या विनिर्मिते ममेच्छावशं गते च। साक्षात् स्वरूपत्वे ''विद्याविद्ये मम तनू प्रतिमावत् सदोदिते। सदा तद्व्यतिरिक्तस्य नित्यज्ञानसुखात्मनः। मदिच्छावशगे नित्यमविद्यानिर्मिता गुणाः। सत्वाद्या मदधीनत्वादविद्याया न मे गुणाः। अविद्या चैव विद्या च गुणाः सत्वादिका अपि। देहोत्पत्तिः सुखं दुःखं सर्वमेतन्मदिच्छया। अतोऽहं बन्धमोक्षाभ्यां रहितो

**एकस्यैव ममांशस्य जीवस्यैवं महामते।**
**बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरत्॥ ४॥**

**अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते।**
**विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि॥ ५॥**

---

नित्यमेव तु। मुक्तशब्दोदितो बन्धराहित्यान्न विमोक्षतः'' इति प्रमाणविरोध आपद्यते। मोक्षबन्धकरत्वं चाभिमानिदेवतासामर्थ्यात्। तत्र श्रियाऽभिमतप्राकृतसत्वगुणजाता विद्या। दुर्गादिकृततमोगुणजाता त्वविद्या। तदुक्तम् ''श्रीस्तु विद्या समुद्दिष्टा दुर्गाऽविद्या प्रकीर्तिता। ते त्वनादी हरेरिच्छानियते सर्वदैव तु'' इति॥ ३॥

अदेही बध्यते चेत् कथं बध्यत इति परमात्मविषयप्रश्नः मे गुणतो बन्धमोक्षाविति परिहारोपि। तत्र जीवस्यैव ताविति भवद्भिरुच्यते। अत इदं कथं संगच्छत इति तटस्थशङ्कां परिहरन्नुपसंहरति **एकस्येति**। जीवः परमात्मेति द्विविधं तत्वम्। तयोरेकस्यैव जीवस्य बन्धमोक्षौ। स क इत्यतो **ममांशस्येति**। स किं स्वरूपांश इत्यतो **जीवस्येति**। जीवो भिन्नांश इति ''भिन्नांशस्यैव जीवस्य बन्धमोक्षौ न मे क्वचित्। अभिन्नांशास्तु मत्स्याद्या तेजसः कालवह्निवत्। जीवा भिन्नांशकास्तत्र तेजसः प्रतिबिम्बवत्'' इत्यनेन सिद्धम्। किमुक्तं स्यादत्राह **एवमिति**। एवमुक्तविधस्य जीवस्याविद्ययाऽनादिर्बन्धः, तथा विद्यया इतरत् मोक्षलक्षणं श्रेयः स्त इत्यर्थः। अतः परमात्मा कथं बध्यत इति प्रश्नोऽनुपपन्न इति भावः॥ ४॥

एकस्मिन् भोगायतने स्थितयोर्जीवपरयोरेकस्य जीवस्यैव तौ स्त इति यदुच्यते तत्र विवेकज्ञानं कथमत्राह **अथेति**। यतो जीवस्यैव बन्धमोक्षौ अथ तस्मात् बद्धस्य जीवस्य मुक्तस्य विष्णोर्वैलक्षण्यम् अस्वातन्त्र्यस्वातन्त्र्यादिलक्षणं ते तुभ्यं वदामीत्यन्वयः। मुक्तनामत्वं च हरेरेव मुख्यं नित्यशुद्धमुक्तादिपदानां हरावेवान्वयादिति पुरुषोत्तमध्यानवचनात् सिद्धम्।[१] ''मुक्तस्य तु न मे मोक्षो बन्धाभावात् कथञ्चन। मुक्त इत्यपि नामैतद् दीप्यतेऽसौ दिवाकरः। इतिवद् बन्धराहित्यान्नतु वृक्षादिदीप्तिवत्। कादाचित्कतया वाच्यं बन्धाभावदमोक्षतः। जीवस्य बन्धमोक्षस्तु मत्प्रसादात्

---

१. विजयध्वजतीर्थास्तु तात्पर्यवाक्यमेवं पेठुः। हृषीकेशतीर्थास्तु ''नित्यशुद्धबुद्धमुक्तसत्यसुखाद्वयप्रत्यगेकपूर्ण इत्यतः पदान्वयात् इत्यादिवचनात्'' इति जगृहुः। अत एव सुधीन्द्रतीर्थाः सङ्कर्षणसूत्रमिदमिति जगदुः।

**सुपर्णावेतौ सदृशौ सखायौ यदृच्छया कृतनीडौ च वृक्षे ।**
**एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ ६ ॥**

**आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ।**
**योऽविद्ययाऽन्धः स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥ ७ ॥**

---

कदाचन'' इति तत्वोदयवचनाच्चोक्तार्थसिद्धिः । बद्धस्य जीवस्य । ''बद्धा जीवा इमे सर्वे पूर्वबन्धसमन्वयात् । नित्यमुक्तस्ततो विष्णुर्मुक्तनामा सदोदितः । अबद्धत्वादमोक्षोपि दीप्यतेऽसौ रविर्यथा'' इति स्पष्टप्रमाणम् । सति वैलक्षण्ये बद्धाबद्धव्यवस्था वक्तुं शक्या, तदेव कथमित्यत उक्तं **विरुद्धधर्मिणोरिति** ॥ ५ ॥

तत्र प्रथममेकधर्मिणीत्युक्तं विवृणोति **सुपर्णाविति** । पॄ पालनपूरणयोरिति धातोः सुष्ठु पालकत्वात् पूर्णत्वाद् हरिः पाल्यत्वादपूर्णत्वाच्च जीवोपि सुपर्ण इत्युच्यते । अयं च विरुद्धधर्मेष्वन्तर्भूयते । चिदानन्दत्वेन सदृशौ वृक्षसमानधर्मे देहे स्थितत्वात् सखायौ । यदृच्छया अदृष्टप्रेरकहरीच्छया । अथ विरुद्धधर्मानाह **एक इति** । पिप्पलं कर्मफलम् । जीवादन्य हरिर्निरन्नोपि भोगरहितोपि बलेन भूयान् पुष्टः । अदननिमित्तं बलं नास्तीत्यर्थः । आत्मानं स्वमन्यं जीवं च । अन्धो भगवद्विषयज्ञान-विधुरः । बद्धो भगवदधीनः । विद्यामयः स्वपरगताखिलविशेषविषयकज्ञानस्वरूपः । अनेन श्लोकद्वयेन द्वा सुपर्णा सयुजा सखायेत्यादिश्रुतिर्विवृता । अत्रानश्नन्न्यो अभिचाकशीतीत्यादौ यदशनाद्यभावेन हरेरवस्थानमुच्यते तद् दुःखाद्यनशनमेव नतु सुखानदनमित्यादि सर्वम् ''अनत्तृत्वं हरेर्दुःखानत्तृ-त्वादुच्यते सदा । विषयान् विनापि पूर्णत्वात् स्वरूपानन्दभोगिनः । सुखमत्त्येव हि सदा सर्वत्रापि स्थितं विभुः । स्वादोरदनवद् योऽत्ति जीवोऽस्वाद्वपि यत् सदा । अनारतं पारवश्यात् स्वाद्वत्तीति ततः श्रुतिः'' इति, ''अस्वादु स्वादुवद् योऽत्ति जीवो नैवं जनार्दनः । अतो नात्तीति वचनमश्नतोपि शुभं सदा'' इति बहुप्रमाणसिद्धम् । तदेवात्रोक्तं **निरन्नोपि बलेन भूयानिति** । स्वयं त्वत्त्येव, तथापि नादननिबन्धनं तस्य बलमिति । कुतः । यत्रा सुपर्णा अमृतस्य भागमनिमेषा विदथाऽभि-स्वरन्ति । इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश । यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे । तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद् यः पितरं न वेद'' इत्यादिवाक्यशेषात् । ''वृक्षे स्थित्वा मध्वदः सुपर्णा यस्मिन्ननश्नति निविशन्ते, तदाधारत्वेन सुवते च, तस्यैव सुपर्णस्य स्वादु पिप्पलम् । अन्यस्तु स्वादुवदश्नाति, न स्वादु । यावत् पितरं परमात्मानं

न वेद'' इति। ''सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा। पारवश्यादनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः। स्ववशेनादनाद् विष्णुर्नात्तीत्यत्तापि सन् श्रुतः। स एव हि शुभस्यात्ता जीवोऽत्तास्यैव वेदनात्'' इति वचनादत्र जीवपरमात्मानावेवोच्येते न सामान्यपक्षिणाविति ज्ञायते। ''सर्वं वा अत्तीति तददितेरदितित्वम्, यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, अत्ता चराचरग्रहणात्, अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'' इत्यादेश्च। अत्तृत्वस्य लिङ्गत्वेनोक्तत्वात् लिङ्गस्योभयसम्प्रतिपन्नत्वेन निर्णयहेतुत्वाद् हरेर्न सर्वात्मनाऽनत्तृत्वमत्रोच्यते। किन्तु अशुभानत्तृत्वेनानत्तृत्वश्रुतेः कृतार्थत्वेन प्रामाण्यसम्भवाच्छ्रुतिशरणानामस्माकं न कापि क्षतिरिति। ''जीवो मुक्तोपि नो जीवान् परमात्मानमेव च। वेत्ति सर्वात्मना विष्णुर्वेत्त्येकः पुरुषोत्तमः। तस्य प्रसादतः किञ्चिद् ब्रह्माद्या अपि जानते। अन्यजीवानपेक्ष्यैको जानाति तु चतुर्मुखः। समास्तेन तदन्ये तु लेशज्ञानाः क्रमात् स्मृताः'' इत्यनेन आत्मानमन्यं च स वेदेत्येतद् विवृतम्। सर्वज्ञत्वलिङ्गं हर्येकनिष्ठम्। तदुक्तम् ''तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप'' इत्यादि च। मुक्तेष्वतिव्याप्तमिदं लिङ्गमिति चेन्न। ''अज्ञा जीवास्तु कथ्यन्ते मुक्ता अप्यल्पवेदनात्। ज्ञ इत्येवोच्यते नित्यं सर्ववेत्तृत्वतो हरिः'' इति वचनात्। ''अनाद्य-विद्ययाऽन्धत्वं जीवस्य यदि योग्यता। प्रयत्नश्चानुकूलः स्यादन्तवद् भवति ध्रुवम्। नित्यमेवान्यथाऽन्धत्वमयोग्या मानुषादयः। बद्धत्वं सर्वजीवानां नियमान्नित्यमेव तु। बद्धत्वं विष्ण्वधीनत्वमन्धत्वं तददर्शनम्। अतः क्वचिदनित्यत्वमन्धताया भविष्यति। मुक्तस्यापि तु बद्धत्वमस्ति यत् स हरेर्वशः। मुक्ताख्या दुःखमोक्षात् स्याद् बद्धाख्या हर्यधीनतः। नित्यबद्धा अपि ततो मुक्ता दुःखविमोक्षतः। नित्यमुक्तस्त्वेक एव हरिर्नारायणः प्रभुः। स्वतन्त्रत्वात् स्वतन्त्रत्वं तस्यैकस्य न चापरे'' इत्यनेन सोपपत्तिकेन योऽविद्ययाऽन्धः स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्त इत्येतद् विवृतम्। ''शतं सहस्राणि चतुर्दशेह परागतिर्जीवगणस्य दैत्य। आरोहणं तत्कृतमेव विद्धि स्थानं तथा निःसरणं च तेषाम्'' इति जीवगणस्य गतिबाहुल्यप्रवेशनिर्गमन-प्रतीतेर्नित्यमुक्तत्वं हरेर्लिङ्गम्, न हरेरन्यत्र गतम्, अतः स एव नित्यमुक्तः। ननु मुक्तैः सेव्यत्वे युक्तमुक्तं तत् कथमिति चेन्न। ''कृष्णो मुक्तैरिज्यते वीतमोहैः, मुक्तानां परमा गतिः इति वचनात्। तर्ह्येषां कदा नु मुक्ताख्येति चेन्न। सर्वात्मना पञ्चदशकलानां त्यागानन्तरं तदाख्या। तदुक्तम् ''कलाः पञ्चदश त्यक्त्वा श्वेतद्वीपनिवासिनाम्। मुक्ताख्या'' इति। पश्चादपि ते स्वतन्त्राः किमित्यतो विष्ण्वधीनास्त इति। यत्प्रसादात् कलामोक्षः तदधीनत्वमस्तु, नान्याधीनताऽस्तीत्यतः स्वाधिकानां वशे स्थिता इति। अन्याधीनत्वादधिकं दुःखं नास्तीत्यत उक्तम् ''न चास्मादधिकं किञ्चित् सुखमस्ति

**देहस्थोऽपि न देहस्थो विद्वान् स्वप्राद् यथोत्थितः ।**
**अदेहस्थोपि देहस्थः कुमतिः स्वप्नद्दग् यथा ॥ ८ ॥**

**इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ।**
**गृह्यमाणेष्वहंकुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥**

**दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ।**
**वर्तमानोऽबुधस्तत्र कर्तास्मीति निबध्यते ॥ १० ॥**

---

हरेर्विना'' इति । अतो नित्यमुक्तत्वं स्वतन्त्रत्वं च नान्यनिष्ठमित्युपसंहरति ''नित्यमुक्तः स एवैकः स्वतन्त्रः सन् यतः सदा'' इति ॥ ६-७ ॥

ननूभयोर्देहस्थत्वाविशेषादेकस्य मुक्तत्वेन दुःखानदनमितरस्य बद्धत्वेन दुःखादनं कथमित्याशंक्य विद्वत्त्वाविद्वत्त्वे कारणमिति भावेनाह **देहस्थोपीति**। विद्वान् नित्यनिर्दुःखानन्दानुभवः सर्वज्ञः श्रीहरिः देहस्थोपि देहाभिमानाभावात् न देहस्थः, तत एव दुःखं नात्तीति । कथम् । यथा स्वप्नादुत्थितः पुरुषः तद्गतदुःखादिकं नात्ति तथेति । कुमतिरविद्वान जीवो देहाभिमानित्वाद् (अदेहस्थोपि) देहादन्योऽपि देहस्थः । यथा स्वप्नद्दक् तद्गतदुःखादिकं भुङ्क्ते तथेति ॥ ८ ॥

एतदेव विवृणोति **इन्द्रियैरिति** । गुणैः हरेरप्रधानैर्जीवैः श्रोत्रादीन्द्रियैः गुणेष्वप्रधानेषु अर्थेषु विषयेषु गृह्यमाणेषु सत्सु यस्त्वविक्रियः कृशोऽहं च्छिन्नोऽहमित्यादिविकाररहितो विद्वान् परमात्मा स नाहंकुर्यादित्यन्वयः । ''शरीरस्थोपि विद्वत्त्वान्न विष्णुर्बध्यते क्वचित् । अविद्वत्त्वात्तु तत्रैव देहे जीवस्तु बध्यते । स्वप्नद्दग्वदिमे जीवा हरिः स्वप्नोत्थितो यथा । सदा तमोविहीनोपि ज्ञापनार्थमुदीर्यते'' इत्यनेन ''आत्मनो वशगैर्जीवैरात्मनो वशगेषु च । दुःखेषु गृह्यमाणेषु मनआदिभिरिन्द्रियैः । अहं दुःखीति नैवेशो ह्यहंकुर्यात् परः पुमान् । जीवगत्वेन तद्दुःखं विष्णुः पश्यति सर्वदा । अतो न दुःखभाग् विष्णुः स्वातन्त्र्यात् पुरुषोत्तमः । पारतन्त्र्यादहं दुःखीत्येवं जीवः प्रपश्यति । तस्मात् स दुःखभागुक्तो यावदीशः प्रसीदति'' इत्यनेन चानयोः श्लोकयोरर्थो विवृत इति । जीवगं चेति तद् दुःखं विष्णुः पश्यति सर्वदेत्यनेन अभिचाकशीतीत्यस्यार्थः सूचित इति ॥ ९ ॥

जीवस्याहमस्मीत्यभिमान[१] एवानर्थप्रवाहहेतुरित्याह **दैवेति** । दैवाधीनेऽस्मिन् शरीरे वर्तमानोऽबुधोऽज्ञो जीवः अस्मिन् कर्मण्यहं गुणभूतोऽस्वतन्त्रः ईशाधीन इति भाव्येन भावनीयेन

---

१. सर्वेषु कोशेषु एवमेव पाठो दृश्यते, परं जीवस्याहं कर्तास्मीत्यभिमान इति पाठः सुश्लिष्टः ।

**एवं विरक्तः शयन आसनाटनमज्जने ।**
**दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ।**
**न तथा बध्यते विद्वान् तत्रतत्राददन् गुणान् ॥ ११ ॥**

**प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥ १२ ॥**

**वैशारद्येक्षयाऽसङ्गशितया च्छिन्नसंशयः ।**
**प्रतिबुद्ध इव स्वप्नान्नानात्वाद् विनिवर्तते ॥ १३ ॥**

---

कर्मणा अहमेव कर्तास्मीति मन्यमानस्तत्र शरीरे नितरां बध्यत इति । ''अस्वतन्त्रः स्वतन्त्रोऽस्मीत्येवं जीवः प्रभावयन् । बध्यते हीशकोपेन राजभावनभृत्यवत्'' इति वचनात् स्वातन्त्र्यकर्तृत्वाभिमानोऽत्र[१] विवक्षित इति । अत्राप्यस्वातन्त्र्यं दैवाधीन इत्यनेन सूचितम् ॥ १० ॥

कालोपि शरीरशीर्णतामीरयतीति शरीरस्य कालाधीनत्वं च । तर्हि कथङ्कारं न बध्यत इति तत्राह **एवमिति** । एवं शयनादिषु स्वस्य स्वातन्त्र्याभिमानेन बध्यमानस्तत्र एवापारदुःखमनुभुञ्जन् विद्वान् एषु विरक्तः तत्र तत्र हरेः स्वातन्त्र्यं विद्वान् तत्र तत्र शरीरयात्रार्थं गुणान् आददन् स्वीकुर्वन् तथा कर्तृत्वाभिमानिवन्न बध्यत इत्यन्वयः । गुणान् पुण्यलक्षणान् आददन् उपार्जयन्निति वा । भेदज्ञानिन एव बद्धत्वं नाभेदज्ञानिन इत्यनेनोच्यत इति किं न स्यादिति चेन्न । ''नित्यबद्धोऽपि जीवो य आत्मनो नित्यबद्धताम् । विष्णुना नित्यमुक्तत्वं तस्य वेत्ता स मुच्यते । तदधीनत्वबन्धे तु विद्यमानेऽप्यदुःखभाक् । देहस्थोपि न दुःखी स्यादज्ञवत् किमु मुक्तिगः'' इति वचनात् जीवभिन्नविष्णुज्ञानाद् बन्धमोक्ष इत्यस्योपपत्तेः ॥ ११ ॥

एतद्ज्ज्ञानफलमाह **प्रकृतिस्थोपीति** ॥ असङ्गेन .......

असङ्गेन वैराग्येण शितया तेजितया वैशारद्या विशारदमूलया विष्णोरनुग्रहादुत्पन्नया ईक्षया अपरोक्षज्ञानेन च्छिन्नसंशयः अत एवासंसक्तः प्रकृतिस्थः शरीरस्थोपि ज्ञानी स्वप्नात् प्रतिबुद्ध इव नानात्वात् मिथ्याज्ञानात् निवर्तत इत्यन्वयः । ''नानात्वमिति वै मिथ्याज्ञानं कुत्रचिदुच्यते । वस्तुयाथात्म्यतोऽन्यत्वाज्ज्ञानस्योज्झे विवक्षिते'' इति वचनान्नानात्वशब्दस्य मिथ्याज्ञानवाचित्वस्य प्रसिद्धेर्युक्तमुक्तम् ॥ १२ - १३ ॥

---

१. स्वतन्त्रकर्तृत्वाभिमान इति पाठ स्यात् । भावप्रधाननिर्देशो वा ।

यस्य स्युर्वीतसङ्कल्पाः प्राणेन्द्रियमनोधियाम् ।
वृत्तयः स विनिर्मुक्तो देहस्थोपि हि तद्गुणैः ॥ १४ ॥

यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद् यदृच्छया ।
अर्च्यते वा क्वचित् तत्र न तु विक्रियते बुधः ॥ १५ ॥

न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥ १६ ॥

न कुर्यान्न वदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः[१] ॥ १७ ॥

---

वाय्वाकाशयोः सर्वत्र सत्वेपि तन्निमित्तलेपान्वयो यथा नास्ति तथेति पूर्वोक्तजीवन्मुक्त्यवस्थामेव विशदयति **यस्येति** । यस्य प्राणेन्द्रियमनोधियां चेष्टादिलक्षणा वृत्तयः वीतसङ्कल्पाः फलानुसन्धानरहिताः स्युः स देहस्थोपि तद्गुणैर्देहगुणैर्निर्मुक्तः, नारिकेलकपालमुक्तान्तःस्थनारिकेलवदित्यन्वयः ॥ १४ ॥

यावच्छरीरपातं जीवन्मुक्तः कथङ्कारं तिष्ठतीत्यत्राह **यस्येति** । आत्मा देहो मनो वा हिंस्रैः हिंसाशीलैः प्राणिभिः । येन किञ्चित् केनचित् यदृच्छया प्राप्तेन चन्दनादिना[२] । तत्र तस्यामवस्थायां स बुधो न विक्रियत इति ॥ १५ ॥

एतद् विशदयति न **स्तुवीतेति** । कुर्वतः पुरुषान् । साध्वादि वदतो वा । गुणदोषाभ्याम् अल्पेन तुच्छेन गुणेन दोषमात्रेण च वर्जितः । न तु गुणमात्रेण वर्जित इत्यर्थः । ''दोषश्चैव गुणश्चोभावीशतन्त्रौ न मे वशौ'' इत्यादिवाक्यविरोधः सर्वगुणवर्जित इत्यङ्गीकार इति भावः ॥ १६ ॥

तत् कथमत्राह **न कुर्यादिति** । आत्मारामो मुनिः साधु कुर्याद् वदेद् ध्यायेच्च । असाधु न कुर्यान्न वदेन्न ध्यायेच्च । शुभजीवानुद्दिश्येति शेषः । अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षम इत्यादेः साधु न कुर्यादित्यर्थो नोपपद्यत इति । आत्माराम इत्यत्रात्मशब्देन परमात्मैवोच्यते न जीवाद्यन्यतमः ॥ १७ ॥

---

१. जडवत् स्थित इति यादवेन्द्रतीर्थपाठः । स्थितिशब्दितेत्यादितात्पर्यवचनं तद्रीत्याऽत्र सङ्गतम् ।
२. वन्दनादिति पाठ इति एकस्मिन् कोशे ।

**शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि।**
**श्रमस्तत्र भ्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥**

**गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च।**
**वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी ॥ १९ ॥**

**यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य।**
**लीलावतारेहितकर्म वा स्याद् वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥**

---

तदेकनिष्ठेन भक्त्याऽधीतवेदादिशब्दराशिः फलवान् स्यादन्यथा निष्फल एवेत्याह **शब्देति**। परे ब्रह्मणि न निष्णायात् निष्ठितो नियतो न स्याद् यदि तर्हि तस्य पुंसः श्रमः वेदाध्ययनायासो भ्रमोऽज्ञानं तमसि परिभ्रमणं वा फलमस्येति भ्रमफलः स्यात्। अधेनुमदोग्ध्रीं गां रक्षतः इव यथा तथास्य तदार्जनपरिभ्रमः एवावशिष्यते, न तु जीवनफलमिति भावः।'यद्वा भ्रमफलः प्रयत्नफलः श्रमः काय-क्लेशः। ''स्थितिशब्देन नियमः क्वचिज्जीवनमुच्यते। उत्थितत्वं क्वचिच्चैव क्वचिद् गतिविरोधिता'' इति। अत्र निष्णायादिति शब्देन नियम उच्यत इति भावः।[1] अधेन्वा चरति माययैव वाचं शुश्रुवाँ अफलामपुष्पामिति श्रुतेः ॥ १८ ॥

एतमेवार्थं दृष्टान्तबाहुल्येन दृढयति **गां दुग्धेति**। पराधीनं परप्रेष्यं कुर्वन्तं देहम्। अतीर्थीकृतं विषयोपरक्तम्। कृष्णा गोषु सम्पन्नक्षीरतमा, सती साध्वी पतिव्रता, परान्नः परपिंडादः परजातः परेधितः, सोऽयं मनुष्यलोकः पुत्रेण जय्यः, अनपत्यं परं मन्ये कदपत्याच्छुचां पदात्, नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः, वाचस्तु गोविन्दगुणस्तवे फलम्, इत्यादेः। यस्त्वेवंविधं गवादिकं रक्षति स दुःखदुःखी दुःखेऽन्धेतमसि नित्यदुःखानुभववान् वर्तत इत्यर्थः[2] ॥ १९ ॥

अन्यदेवताप्रसङ्गपरवाचो रक्षणे फलं किं न स्यादत्राह **यस्यामिति**। अस्य जगतः स्थित्युद्भव-प्राणनिरोधलक्षणं कर्म। ''दुग्धदोहां तु गां रक्षेत् क्षीरमात्रप्रयोजनः। यथा तद्वद् हरेरन्यवाचो

---

१. तिष्ठतेः प्रमाणवचनेनार्थभेद उक्तः। निष्णायादित्यत्र ष्णाधातौ कथमस्य पर्यवसानमिति न ज्ञायते।
२. सर्वेष्वपि कोशेषु एवमेव पाठः प्रदृश्यते। कृष्णेति वाक्यखण्डस्य तथा परान्न इत्यादेश्च सङ्गतिर्न स्पष्टा। अन्ते यस्त्वनेवंविधमित्यस्यार्थोऽपि क्लेशेन निर्वाह्यः। कोपि लेखकप्रमादः स्यात्।

**एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि।**
**उपारमेत विरजं मनो मय्यर्प्य सर्वगे॥ २१॥**

**यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम्।**
**मयि सर्वाणि कर्माणि निरपेक्षः समाचर॥ २२॥**

**श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः।**
**गायन्ननुस्मरन् कर्म जन्म वाऽभिनवं मुहुः॥ २३॥**

**मदर्थे धर्मकामार्थानाचरन् मदुपाश्रयः।**
**लभते निश्चलां भक्तिं मय्युद्धव सनातने॥ २४॥**

**सत्सङ्गलब्धया भक्त्या मयि मां य उपासते।**
**स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम्॥ २५॥**

---

धारणमिष्यते'' इति वचनादन्यविषयवाचा नित्यानन्दलक्षणमोक्षः फलं न स्यादतो मुमुक्षुः तन्न कुर्यात्। अतोऽतत्वजिज्ञासाऽनर्थकरीति मज्जिज्ञासैव पुरुषार्थसाधनं[१] तद्धन्तमुद्दिश्य न कुर्यान्न वदेदिति विधीयते तत्वजिज्ञासुरिति॥ २०॥

उपसंहरति **एवमिति**। वस्त्वयथार्थज्ञानं नानात्वभ्रममेव जिज्ञासया अपोह्य निरस्य उपारमेत, प्रवृत्तिमार्गादिति शेषः। नानात्वभ्रमो भेदभ्रम इति मतम् ''जीवस्येशत्वविज्ञानं जीवानामेकता तथा। ईशस्य बहुताज्ञानमीशस्यानीशता तथा। जगतोऽसत्यताज्ञानं नानात्वभ्रम उच्यते'' इत्यनेन विरुद्धत्वान्न ग्राह्यं च बुभूषुभिरिति॥ २१॥

नन्वस्तु जीवन्मुक्तस्य समर्थस्य हरौ निरन्तरं मनो निधायोपास्तिः, तदितरस्य मुमुक्षोरुपासनोपायः क इति तत्राह **यदीति**। कृतानि मयि समर्प्य कुर्वाणानि मद्विषयत्वेन समाचर॥ २२॥

निष्कामत्वेन मामुद्दिश्य[२] कर्म कुर्वाणस्येत्थंभावमाह **श्रद्धालुरिति**॥ २३॥ मत्कथाश्रवणादिना किं फलं स्यादित्यत उक्तम् **लभत इति**। निरन्तरस्मृतिफलां भक्तिं लभते॥ २४॥ सापि सत्सङ्गलब्धा चेद् भगवत्पदपरोक्षज्ञानमुत्पाद्य तेन मुक्तिं जनयतीत्याह **सत्सङ्गेति**। पदं वैकुण्ठादिस्थानम्॥ २५॥

---

१. इत आरभ्यात्र टीका अस्पष्टा। एकस्मिन् कोशे विधीयत इत्यत्रैव समाप्तिः। कोशान्तरे तत्वजिज्ञासुमिति पठ्यते। अपरस्मिन् कोशे च अतत्वजिज्ञासुमिति।
२. सर्वकोशेष्वेवमेव पाठः। परमात्मानमुद्दिश्येति वा स्वमुद्दिश्येति वा पाठ आशास्यते।

**उद्धव उवाच -**

**साधुत्व उत्तमश्लोक मनः कीदृग्विधं प्रभो ।**
**भक्तिस्त्वय्युपयुञ्जीत कीदृशी सद्भिरादृता ॥ २६ ॥**

**एतन्मे पुरुषाध्यक्ष प्रपन्नाय च कथ्यताम् ॥ २७ ॥**

**त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ।**
**अवतीर्णोऽसि भगवन् स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥**

**श्रीभगवानुवाच -**

**कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ।**
**सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥**

---

सद्भिरितिप्रस्तुतसल्लक्षणज्ञोऽप्युद्धवो लोकोपकाराय तल्लक्षरं पृच्छति **साधुत्व इति** । साधुत्वा-साधुत्वयोर्मनःशुद्ध्यशुद्धिनिमित्तत्वात् साधुत्वेन वर्तमानानां पुंसां मनः कीदृग्विधं भवति । साधवः किंलक्षणा इत्यर्थः । कीदृशी किंलक्षणा भक्तिस्त्वय्युपयुञ्जीत त्वदुत्तमप्रसादयोगजननी सद्भिरादृता सम्भाविता । आदृतौ सादरार्चिताविल्यमरः ॥ २६ ॥

एतत् सद्भक्योर्लक्षणम् ॥ २७ ॥

पृष्टार्थस्य दुरवबोधत्वाद् दुष्परिहरः (मम प्रश्नः) इति नेत्याह **त्वं ब्रह्मेति** । स्वेच्छयोपात्तं स्वीकृतं पृथग्वपुः शोभनाकारं वसुदेवादिशरीरं येन सः स्वेच्छोपात्तपृथग्वपुः । शुभाकारे तनौ वपुरिति यादवः । ''नित्यानन्दशरीरोऽपि वसुदेवादिदेहगः । प्रदर्शयेज्जनिं स्वस्य नित्यं देहादिवर्जितः । वसुदेवादिदेहेषु प्रवेशस्तस्य भण्यते । देहोपादानमिति तु न ह्यन्यो देह इष्यते । अन्याभिमतदेहेषु प्रविष्टः सर्वदा हरिः । नान्यानभिमतो देहो विष्णोरस्ति कदाचन । अतोऽशरीरो भगवान् पुत्रताभिमतिस्तु या । वसुदेवादिकानां तु सैव मिथ्यामतिर्भवेत् । अन्याहंभावयुग्देह एवासौ हरिरास्थितः । न तदन्येषु देहेषु क्वचित् तस्य प्रवेशनम् । मम पुत्रस्त्वयमिति भ्रामणाय यदा हरिः । वसुदेवादिदेहेषु तनूपात्तिस्तु सा गतिः । अनुपात्तशरीरस्य तनूपात्तिरितीष्यते । तद्देहं पितृदेहत्व उपादत्ते यतो हरिः'' इत्येतदस्मिन्नर्थे मानम् ॥ २८ ॥

भगवान् सल्लक्षणं वक्तीत्याह **भगवानिति** । सर्वदेहिनामकृतद्रोहः । अनवद्यः आत्मा मनो यस्य स तथा ॥ २९ ॥

**कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः ।**
**अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥**

**अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।**
**अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३१ ॥**

**आज्ञायैव गुणान् दोषान् मया दिष्टानपि स्वकान् ।**
**धर्मान् सन्त्यज्य यः सर्वान् मां भजेत् स च सत्तमः ॥ ३२ ॥**

**ज्ञात्वा ज्ञात्वाऽथ ये वै मां यावान् यश्चास्मि यादृशः ।**
**भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥**

---

संक्षिप्तं किञ्चन प्रश्नयोग्यं धनं न विद्यत इत्यकिञ्चनः । सङ्कोचे किञ्चन व्यर्थे मुधेति यादवः । अनीहो निषिद्धाचरणवर्जितः । वैष्णवधर्मे स्थिरो निश्चलः । अहमेव शरणं यस्य स मच्छरणः । मुनिः सद्गुणमननशीलः ॥ ३० ॥

अप्रमत्तो विहिताचारे प्रमादरहितः । गभीरात्मा अनवगाह्यमनोगतिः । आपदि धृतिमान् । जिताः षट् कामादिगुणाः षडिन्द्रियविषया वा येन स तथा । अमानी आत्मन्यविद्यमानगुणाभिमान-रहितः । मानदो ज्ञानोपदेष्टा । कल्पः विहितक्रियाकरणनिपुणः । कृपालुत्वं मनोधर्मः कारुणिकत्वं कायिकधर्म इति पृथगुक्तम् । कविः सर्वज्ञः ॥ ३१ ॥

सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह **आज्ञायैवेति** । चशब्द एवार्थे । यो मया मदीयैरप्यादिष्टान् गुणान् दोषानपि आज्ञाय सम्यग्ज्ञात्वैव स्वकान् स्वविहितान् धर्मान् भागवतसञ्ज्ञान् मयि सन्त्यज्य समर्प्य मां भजेत् स एव सत्तम इत्यन्वयः ॥ ३२ ॥

भक्तेरनेकविधत्वेप्युत्तमोत्तमायाः शुश्रूषितत्वेन पृष्टत्वात् तं प्रश्नं परिहरति **ज्ञात्वेति** । अथवा सतां लक्षणकथनानन्तरमात्यन्तिकभक्तलक्षणमुच्यते । यद्वा शास्त्रगुरूपदेशतो भगवन्माहात्म्यं ज्ञात्वा अथ च विशेषतो ज्ञात्वेति । वीप्सया माहात्म्यज्ञाने पुनःपुनर्विशेषं द्योतयति । तदुक्तम् ''ज्ञात्वापि मम माहात्म्यं तत्रोत्सुकतया पुनः । विशेषाच्च विशेषेण ज्ञात्वा मामश्नुतेऽधिकम्'' इति । परिमाणतो यावानस्मि स्वरूपतो योऽस्मि लक्षणतो यादृशोस्मीति तत्वेन । येऽनन्यभावेन अत्युत्तमभक्त्या मां चैव भजन्ति ते भक्ततमा निरतिशयभक्ता मता नानात्वेन ज्ञाता इत्यन्वयः । अत्र तमप्प्रत्ययेन भक्तानां बाहुविध्यप्रकाशनेन भक्तेरपि तथात्वं सूचयतीति ॥ ३३ ॥

मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् ।
परिचर्या स्तुतिप्रह्वगुणकर्मानुकीर्तनम् ॥ ३४ ॥

मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ।
सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥ ३५ ॥

मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ।
गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥

यात्रा बलिविधानं च सर्ववार्षिकपर्वसु ।
वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥ ३७ ॥

ममार्चास्थापने श्रद्धा मम सद्मनि चोद्यमः ।
उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ३८ ॥

सम्मार्जनोपलेपाभ्यां सैकमण्डलवर्तनैः[१] ।
गृहे शुश्रूषणं मह्यं दासवद् यदमायया ॥ ३९ ॥

अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् ।
अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥

---

इदानीं सर्वसाधारणं भक्तिलक्षणमाह **मल्लिङ्गेति** । अत्र कर्तव्यपदमध्याहृत्यान्वेतव्यम् । विधिप्रकारत्वात् । सर्वलाभोपहरणं हरावर्पणम् । दास्येन सहात्मनिवेदनमात्मसमर्पणम् । यद्वा दास्येन सह आत्मनि मनसि वेदनम् ॥ ३४-३५ ॥ पर्वानुमोदनम् उत्सवानुज्ञानम्, उत्सवं दृष्ट्वा हर्षो वा ॥ ३६ ॥

अर्चा प्रतिमा । उद्यमः करणादौ प्रयत्नः, उद्यानोपवनादिकर्मण्युद्यमो वा । सद्मनि सम्मार्जनोपलेपाभ्यामुद्यमो वा ॥ ३७-३८ ॥ मह्यं मम यद् गृहशुश्रूषणं तदमायया । सैकमण्डलवर्तनैः एकेन मुख्येन मण्डलेन सहितैः, अवान्तरमण्डलकरणैः, कर्तव्यमिति शेषः । सेकमण्डनवर्तनैरिति केचित् पठन्ति । चन्दनादिजलप्रोक्षणं सेकः, मण्डनमलङ्कारः, वर्तनं प्रदक्षिणवर्तनम् । विशेषजीवनं प्रोक्तं वर्तनं गमनं तथेति च ॥ ३९ ॥

---

१. सैकमण्डलवर्तनैः सेकमण्डनवर्तनैरिति च पाठान्तरे ।

**यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।**
**तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥**

**सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ।**
**भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥ ४२ ॥**

**सूर्ये तु विद्यया त्रय्या हविषाऽग्नौ यजेत माम् ।**
**आतिथ्येन तु विप्राग्र्ये गोष्ठे गा यवसादिना ॥ ४३ ॥**

**वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।**
**वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥**

**स्थण्डिले मन्त्रहृदयैर्भोगैरात्मनमात्मनि ।**
**क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥**

---

मे निवेदितं दीपावलोकं नोपयुञ्ज्यात् स्वप्रयोजनाय न स्वीकुर्यात् ॥ ४० ॥ हविराद्यर्पणे सुष्ठूपायमाह **यद्यदिति** । आनन्त्याय, अनश्वरफलाय, मोक्षायेत्यर्थः। अनन्तं वैष्णवे कृतमिति स्मृतेः ॥ ४१ ॥ अधिकारिणां योग्यताया अनेकविधत्वेन फलविशेषाय मदर्चनाधिष्ठानं चोपदिशामीत्याह **सूर्य इति** । हे भद्र ॥ ४२ ॥ तत्तत्साधनं चार्चनार्थमाह **सूर्येत्विति** । गोष्ठे स्थिता गाः यवसादिना तृणादिना, पूजयेदिति शेषः ॥ ४३ ॥

बन्धुर्जामाताऽयमिति सत्कृत्या सत्कारेण । हृदि खे हृदयाकाशे ध्याननिष्ठया उत्कृष्टध्यानेन । वायौ मुख्यप्राणे मुख्यधिया सर्वदेवोत्तमो वायुरिति ज्ञानेन । तदुक्तम् ''सर्वदेवोत्तमो वायुरिति ज्ञानान्न चापरम् । प्रियमस्ति हरेः किञ्चित् तथा वायोर्हरेर्विदः'' इति । हरेरुत्तमत्वविदः वायोरपीत्यर्थः । कुतः ''भारतीवायुलक्ष्मीणामात्मनश्च यथाक्रमम् । आधिक्यज्ञानतो विष्णुः सर्वतः सम्प्रसीदति'' इति वचनात् । ''वायुर्भीमो भीमनादो महौजाः'' इत्यनेनापि हेतुपूर्वकत्वेन वायोः सर्वदेवोत्तमत्वादुक्त एवार्थः । ''तस्माद् वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद'' इत्यनेन च वायुज्ञानस्यापमृत्युजयहेतुत्वोक्तेश्च । ''पञ्चभूतमनोबुद्धिरुद्राणां प्रतिदेहकम् । बाह्यतश्चापि नेतृत्वाद् वायुर्व्यष्टिः समष्टिकः'' इति वचनाच्च वायोर्व्यष्टिं समष्टिं च सम्यग् ज्ञात्वा मनो युञ्ज्यात् । द्रव्यैः पुष्पैः ॥ ४४ ॥

मन्त्रहृदयैः नमोऽन्तैर्मन्त्रैः । आत्मनि स्वशरीरे मनसि वा आत्मानमन्तर्यामिणम् । क्षेत्रज्ञं

धिष्ण्येष्वेतेषु मद्रूपं शङ्खचक्रगदाम्बुजैः ।
युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत् समाहितः ॥ ४६ ॥

इष्टापूर्तेन मामेवं यो यजेत समाहितः ।
लभते मयि सद्भक्तिं मत्स्मृतिं साधुसेवया ॥ ४७ ॥

प्रायेण भक्तियोगेन सांख्येन च विनोद्धव ।
नोपायो विद्यते सध्र्यक् प्रायणं हि सतामहम् ॥ ४८ ॥

अथैतत् परमं गुह्यं शृण्वते यदुनन्दन ।
सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा ॥ ४९ ॥

॥ इति एकादशोऽध्यायः ॥

---

जीवान्तर्यामिणं सर्वभूतेषु समत्वेन एकप्रकारेण विकारमन्तरेण स्थितं भोगैः स्रग्गन्धादिधनैः । भोगो राज्ये धने सौख्ये इति (अभिधानम्) । आत्मशब्देनात्र जीवः किं न स्यात्, तस्य पूजनस्य तन्त्रेषु विहितत्वात्, क्षेत्रज्ञः पुरुषो ह्यात्मा संसारी चेतनो मत इत्यभिधानाच्चेति चेन्न । ''आत्मनिस्थो हरिः पूज्य आत्मनामाऽशनादिकैः । तत्संबन्धादात्मशब्दो जीवस्याप्युपचारतः'' इति वचनादात्मा मुख्यो हरिरेवेति ज्ञायते । तत्र विधानस्य हरेरधिष्ठानत्वेन पीठार्चनवत् तदर्चनोपपत्त्या सार्थक्यात् ॥ ४५ ॥

एतेष्वधिष्ठानेषु ध्यानप्रकारमाह **धिष्ण्येष्विति** । धिष्ण्येषु स्थानेषु ॥ ४६ ॥ पूजाफलमाह **इष्टेति** ॥ ४७ ॥ प्रायेणेत्यवधारणम् । सांख्येन यथार्थज्ञानेन । सतां प्रकर्षेणायनमाश्रयः ॥ ४८ ॥

उत्तराध्याये वक्ष्यमाणार्थप्राशस्त्यं कथयति **अथेति** । वक्तव्यत्वे हेतुमाह **भृत्य इति** । ज्ञानेन भर्तुं योग्यो भृत्यः । सु पूजितं हृत् मनो यस्य स सुहृत् । आपदि हितंकर्तृत्वात् सखा ॥ ४९ ॥

**॥ इति श्रीविजयध्वजतीर्थविरचितायां श्रीभागवतटीकायां पदरत्नावल्यां एकादशस्कन्धे एकादशोऽध्यायः ॥**

## ॥ अथ द्वादशोऽध्यायः ॥

श्रीभगवानुवाच -

न रोधयति मां योगो न सांख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणाः ॥ १ ॥

व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवुन्धेन्मात्सङ्गः सर्वदुःखापहो हि माम् ॥ २ ॥

मत्सङ्गेन तु दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥

विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ॥ ४ ॥

बहवो मत्पदं प्राप्ता त्वाष्ट्रकावन्तिकादयः ।
वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥

---

भगवद्गुणोत्कर्षज्ञापूर्विका भक्तिरेव परमपुरुषार्थान्तरङ्गसाधनमितीममर्थं समर्थयते । तत्रादौ गुणोत्कर्षाज्ञानाननुरक्तयोगादीनां[१] विवक्षितपुरुषार्थसाधनत्वं न भवतीत्याह **न रोधयतीति** । योगो ध्यानम् । रोधयति वशीकरोति । त्यागो दानम् । यथा मयि सङ्गः गुणसम्प्रीतिः । भक्तिपूर्विका सर्वपूर्णगुणत्वमतिर्यथा मामवरुन्धेद् वशीकरोति तथा योगादयो न रोधयन्ति । "सङ्गस्तु गुणसम्प्रीतिर्गुणवत्वेऽतिनिश्चयात् । स चेद् हरौ भवेत्तेन मुच्यते नात्र संशयः । अपरोक्षदृशेर्हेतुर्भवेत् स स्याद् यदि क्षमः । अन्यथा सुखभागेव यद्दृशिर्मोक्षकारणम्" इति वचनादुक्त एवार्थो न तु सम्बन्धमात्रम् ॥ १-२ ॥

भगवानुक्तमर्थं प्रख्यापयति **मत्सङ्गेनेति** । दैतेयाः प्रह्लादादयः । बहवो मत्सङ्गेन मत्पदं प्राप्ताः ।

---

१. गुणोत्कर्षज्ञानेत्येव पाठः कोशेषु सर्वत्र । गुणोत्कर्षाज्ञानस्याननुरक्तयोगस्य वा साधनत्वं न भवतीत्यभिप्रायेण गुणोत्कर्षाज्ञानेति पाठो दत्तः । गुणोत्कर्षज्ञानेत्येव पाठे गुणोत्कर्षज्ञानसहितानुरक्तयोगादीनां न साधनत्वमिति भावः ।

**सुग्रीवो हनुमान् ऋक्षो गजो गृध्रो वणिक्पथः ।**
**व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे ।। ६ ।।**

**ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ।**
**अव्रताऽतप्ततपसो मत्सङ्गान्मामुपागताः ।। ७ ।।**

**केवलेन हि भावेन गोप्यो गावः खगा मृगाः ।**
**येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ।। ८ ।।**

**यं न योगेन सांख्येन दानव्रततपोऽध्वरैः ।**
**व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद् यत्नवानपि ।। ९ ।।**

---

त्वाष्ट्रको वृत्रः । आवन्तिकोऽवधूतो भिक्षुः । यातुधाना इत्याद्युक्तं शृङ्गिग्राहिकतया दर्शयितुं विभीषण इत्यादि पुनर्वचनम् । वणिक् तुलाधारः । मयोनामा शूद्रः । ते गोप्यादयो मामुपागता इत्यन्वयः ।। ३-६ ।।

साधनं विना त्वामुपगताश्चेत् सर्वे किं नाप्नुवन्तीति तत्राह मत्सङ्गादिति । गुणसम्प्रीतिरपि न वेदादिभ्य उत्पन्ना (तासाम्) इत्याह **नाधीतेति** ।। ७ ।।

तर्हि केनेत्यत्राह **केवलेनेति** । केवलेन निर्दोषेण भावेन भक्तियोगेन । केवलेनेति विशेषणान्न द्वेषयुक्ता भक्तिर्मुक्तिसाधनम् । ''ज्ञात्वापि हरिविद्वेषी तमो याति न संशयः'' इति वचनात् । भावेन अपरोक्षज्ञानोत्पादकस्वभावेनेति विशेषणात्[१] विशेषरूपस्याज्ञानेऽपि मोक्षो नियतः, ''विशेषरूपस्याज्ञोऽपि गुणवत्वेऽतिनिश्चितः । गुणसम्प्रीतिमान् नित्यं तं दृष्ट्वा मुक्तिमेष्यति'' इत्युक्तेः । ज्ञानोत्पत्तेः पूर्वमपि भगवल्लीलाद्यनुकारेण परमानन्दः स्यादीत्यतो **भावेनेति**[२] । ''अथवा सुखभागेव स्याद् यावद् दर्शनोपगः'' इति स्मृतेः ।। ८ ।।

भक्तिरहितं ज्ञानमपि न मत्प्रापकं किमुतान्यत् साधनजालमिति भावेनाह **यमिति** । यं मां नाप्नुयाद्[३]

---

१. भावेनेति कस्य विशेषणमित्यस्पष्टम् ।

२. इयमवतारिका चाप्यस्पष्टा ।

३. राहुवद् यत्नवानपीति पाठान्तरम् ।

**रामेण सार्धं मधुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः।**
**विगाढभावेन न मे वियोगतीव्राधयोऽन्यद् ददृशुः सुखाय ताः ॥ १० ॥**

**यासां क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण।**
**क्षणार्धवत् ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः॥ ११ ॥**

**ता नाविदन् मय्यनुसङ्गबद्धधियः स्वमात्मानमदस्तथेदम्।**
**यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे॥ १२ ॥**

---

यत्नवानपि। ''हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि। न मुच्यतेऽखिलज्ञोऽपि तमो याति विनिश्चयात्। गुणैरन्यैर्विहीनस्तु तद्भक्तेष्वपि च क्रमात्। सङ्गवान् सुखभागेव स्याद् गुणैर्मुक्तिमेति वा। स्वसङ्गविघ्नकृद् विष्णुस्तत् सज्जेत् तेषु तत्र च'' इत्यनेन भगवद्भक्तेस्तद्भक्तभक्तेरन्वयव्यतिरेकौ दर्शिताविति ध्वनितमित्यनेन श्लोकेन ज्ञायते[1]। ''गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथातथम्। परं पदं ययुः पूर्वसङ्गादेव सुमोचिताः'' इति वचनाद् भक्तिजनितज्ञानेन मुक्तिमाप्नोति न केवलज्ञानेनेत्यभिप्रायेण न सांख्येनेत्युक्तम्। उपलक्षणमेतत्। दानादिष्वप्यनुसन्धेयमेतत्। ''श्रोतव्यं च श्रुतं चैव वक्तव्यं कार्यमेव च। निवर्त्यं च हरे पूजेत्येवं कुर्यान्न चाक्रमात्। एवं कर्ता तु संन्यासी सर्वोत्सर्गाद् हरौ स्मृतः। अन्यथा नैव संन्यासी निष्क्रियोऽपि शिला यथा'' इत्येवंलक्षणवान् संन्यासी न तु शिलावन्निष्क्रिय इत्यभिप्रेत्य वेणुमात्रभृत् संन्यासी न मामाप्नोतीति (सूचयति)। किञ्च ''नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः। इति वित्त्वा तु संन्यासी नान्यथा तु कथञ्चन'', ''मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा। निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः'' इति लक्षणान्तरवानेव सन्न्यासी न रक्तपटधारीत्यर्थः॥ ९ ॥

गोपीनां मयि भक्तिरपरोक्षज्ञानान्तरङ्गा न तु रतिनिमित्तेति प्रकटयितुं वक्ति **रामेणेति**। ता गोप्यो मत्तोऽन्यद् वस्तु सुखाय न ददृशुरित्यन्वयः॥ १० ॥

अत्र हेतुमाह **यासामिति**। ताः क्षपाः॥ ११ ॥ आत्मानं स्वस्वरूपम्। अदः स्वर्गम्। **इदं** जगत्। तत्र दृष्टान्तमाह **यथेति**। समाधौ मुनयो नामरूपे यथा न विदन्ति, अब्धितोये प्रविष्टा नद्यश्च। अनेन भक्त्यतिशयो दर्शित इति॥ १२ ॥

---

१. अस्य वाक्यस्यान्वयः क्लिष्टः।

मत्कामा रमणं जारमस्वरूपविदोऽबलाः ।
ब्रह्म मां परमं प्रापुः शतशोऽथ सहस्रशः ।। १३ ।।

तस्मात् त्वमुद्धवोत्सृज्य चोदितां प्रतिचोदनाम् ।[1]
प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ।। १४ ।।

मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन यस्मिन्नस्त्यकुतोभयम् ।। १५ ।।

उद्धव उवाच -

संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ।
न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ।। १६ ।।

---

तत्फलमाह **मत्कामा इति** । मामेव कामयन्ते इति मत्कामाः । अस्वरूपविदोऽबला जारं मां रमणं मत्वा सञ्ज्ञान्मां परमं ज्ञात्वा मामापुरित्यन्वयः । आसां ब्रह्मज्ञानं कथमुदभूत् । उच्यते । संसारं जरयतीति जारस्तम्, नित्यानन्दप्रदत्वेन रमयतीति रमणः, तम् । सर्वतो विलक्षणस्यास्य विष्णोः स्वरूपं विदन्तीत्यस्वरूपविदः, इत्येवं गुणसम्प्रीतितो मां ब्रह्म ज्ञात्वेति । ''गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथातथम्'' इत्येतदत्रापि प्रमाणत्वेनोदाहर्तव्यमिति ज्ञातव्यम् ।। १३ ।।

यतो मुमूक्षूणामहमेव शरणमतस्त्वमपि मामेव शरणं व्रजेत्युपसंहरति **तस्मादिति** । प्रतिकर्मचोदितां चोदनां नानाविधकर्मविधिमुत्सृज्य प्रवृत्त्यादिकं च मयि समर्प्य सर्वदेहिनामात्मानं स्वामिनं यस्मिन्नकुतोभयमस्ति तमेकं मां सर्वात्मभावेन सर्वस्वामिबुद्ध्या क्रियया शरणं याहीत्यन्वयः ।। १४-१५ ।।

प्रथमतो वायौ मुख्यधियेत्युक्त्वा विशेषतो गोपिकाप्रशंसनं कृतमिति संशयबीजं हृदि कृत्वोद्धवश्चोदयति **संशय इति** । भक्तेषु वायोः सर्वोत्तमत्वमुक्त्वा विशेषतो गोपीः स्तुवतस्तव वाचं शृण्वतो मम आत्मस्थो मनोगतः संशयो वायुरुत्तमो गोप्यो वेत्येवमाकारको न निवर्तते । प्रत्युत येन वचनेन मे मनो भ्राम्यति निर्धारितैककोटिस्थितं नेत्यन्वयः ।। १६ ।।

---

१. चोदनां प्रति चोदनामिति यादवेन्द्रपाठः ।

**श्रीभगवानुवाच -**

**य एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।**
**मनोमयं सूक्ष्ममुपैति रूपं मात्रा स्वरो वर्ण इति स्थविष्ठम्॥ १७॥**

**यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः।**
**अणुः प्रजातो हविषा समिद्ध्यते तथैव मे व्यक्तिरियं हि वाणी॥ १८॥**

**एवं गतिः कर्म रतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च।**
**सङ्कल्पविज्ञानमथाभिमानः सूत्रं रजः सत्वतमो विकारः॥ १९॥**

---

गोपिका अपि मामापुः किमु वाय्वाद्या इति गोपिकाप्रशंसनं कृतमिति परिहारं हृदि कृत्वा वायुरेव सर्वैर्गुणैः सर्वोत्तमः, स एव हिरण्यगर्मश्चेति दर्शयितुं भगवान् हिरण्यगर्भस्य सर्वोत्तमत्वं वक्ति **य एष इति**। यो विवरप्रसूतिः विशेषेण वराणामहङ्काराद्यभिमानिदेवानां प्रसूतिरुत्पत्तिर्यस्मात् स तथा, उत्पादक इत्यर्थः। एष जीवः, जीव प्राणधारण इति धातोः[१]। प्रकृष्टानन्दलक्षणस्य हरेरधिष्ठानत्वात् तन्नामा ब्रह्मा प्राणेन विष्णुना घोषेण वेदात्मिकया प्रकृत्या लक्ष्म्या च सह गुहां रूद्रादीनां हृदयगुहां प्रविष्टः सन्, मनोमयं रुद्रादीनां मनसि नियन्तृत्वेन स्थितमत एव सूक्ष्मं परमाणुकल्पं रूपमुपैति। किञ्च मात्रा स्वरो वर्ण इति मात्रास्वरवर्णत्रयात्मकं वेदाख्यं स्थविष्ठं रूपमुपैति॥ १७॥

अनेन वेदादीनि विष्णुप्रकृतिब्रह्मणामभिव्यक्तिस्थानानीत्युक्तम्। तत्र प्रकृतिब्रह्मणोः (अपेक्षया) विशेषेण वेदादिकं मम व्यक्तिस्थानमित्याह **यथेति**। अनिलो बन्धुर्यस्य स तथा। उष्मा उष्णः। अनलो दारुणि खे बलेन मथ्यमानो[२] अणुत्वे प्रजातो हविषा घृतेन यथा समिद्ध्यते तथेयं वेदवाणी मे व्यक्तिः व्यक्तिस्थानम्। वेदवाण्येव विशेषतो मत्तत्वव्यञ्जिकेत्यर्थः॥ १८॥

प्रकृत्यदीनां व्यक्तिस्थानत्वेपि मम श्रोत्रादीन्यपि वेदवद् विशेषतो व्यक्तिस्थानानीत्याह **एवमिति**। पदादीनि गत्यादिशब्दवाच्यानि। इन्द्रियेन्द्रियविषययोरूभयोर्ग्रहणायैवमुक्तम्। सङ्कल्पो

---

१. जीवोत्तमत्वाज्जीवो ब्रह्मा वायुश्च। मुख्य एव हि शब्दार्थ उत्सर्गतः प्राप्तः। स च ब्रह्मा प्राणनामा च भूतपूर्वविवक्षया, अथवा प्राणनामकविष्ण्वधिष्ठानत्वेनेदानीमपि तन्नामा।

२. अधिमथ्यमानः अधि अधिकम्, बलेनेति यावत्, मथ्यमानः।

**अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको जगतां यथाऽऽद्यः ।**
**विश्लिष्टशक्तिर्बहुधैव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥**

**यस्मिन्निदं प्रोतमशेषमोतं पटे यथा तन्तुवितानसंस्था ।**
**य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥**

---

मनः । विज्ञानं बुद्धिः । अभिमानः अन्तःकरणवृत्तिविशेषव्यञ्जकं तस्य (अन्तःकरणस्य) रूपान्तरम् । सूत्रं वायुः । सत्वसहितं तमः । विकारो ब्रह्माण्डम् । एतानि हरेरधिष्ठानरूपाणि भवन्तीति ज्ञातव्यानि । तदभिमानिन्यो देवताश्च । यस्तमसि तिष्ठन्, श्रोत्रे तिष्ठन्नित्यादेः ॥ १९ ॥

विवरप्रसूतिरित्युक्तं कारणत्वं गुहां प्रविष्ट इत्युक्तव्याप्तिं च विविच्य सोदाहरणमाह **अयं हीति** । मां रमां चान्तरेण वर्णाद्यात्मकवेदादिसर्वशब्दवाच्योऽयमब्जयोनिर्ब्रह्मा नियाकत्वेन सर्वोत्तमत्वाज्जीवः, त्रिवृत् ज्ञानानन्दबलात्मकः, अव्यक्तः सूक्ष्मः। जगतामाद्यः । एक एवाहङ्कारादिपृथिव्यन्तानि स्वसृष्टानि कार्याण्यनुप्रविश्य विशेषेण श्लिष्टशक्तिरनपगतसामर्थ्य एव तत्तन्नियामकरूपैः बहुधैव भाति । तत्ववादिनामिति शेषः । कथमिव । यद्वत् यथा कलमादिबीजानि योनिं भूमिलक्षणां प्रतिपद्य बह्वङ्कुराणि भवन्तीति । एवं परमात्मानुगृहीतो ब्रह्मा अहङ्कारादिषु बहुधा व्यक्तीभवतीति । यो विवरप्रसूतिः योनिद्वारा प्रसूयते एष जीव इति सञ्ज्ञां लभत इत्यन्यथा व्याकुर्वते । तन्मतम् ''सुपर्णशेषरूद्रादिप्रसूतिस्तु चतुर्मुखः । सर्वजीवोत्तमो जीवो गुणैर्ज्ञानसुखादिभिः । विष्णुभक्त्यादिभिः सर्वैर्नियमात् सार्वकालिकम् । मुक्तावपि न सन्देहः स हि देवेन विष्णुना । प्राणः प्राणेन जगतामीशेन रमया तथा । वेदात्मिक्या च सहितः सूक्ष्मः सन् मनसि स्थितः । वीन्द्रादीनां तु सर्वेषां मात्रावर्णस्वरेषु च । स्थूलरूपी सदा तिष्ठन्नेवं श्रोत्रादिकेषु च । सर्वेषां प्रेरको ह्येको ज्ञानानन्दबलैस्त्रिवृत् । नित्यशक्तिः सर्वगः सन् बहुधैव प्रतीयते । तस्मिन्नोतमिदं सर्वं पटे लक्षणतन्तुवत् । स एव वायुरुद्दिष्टो वायुर्हि ब्रह्मतामगात् । विशेषेण हरेर्व्यक्तिस्थानान्येतानि सर्वशः । मनआदीन्यहङ्कारो ब्रह्मा वेदात्मिका रमा । त्रिगुणात्मिका च सैव श्रीः सैवोक्ता संविदात्मिका । तस्या अपि नियन्तैको विष्णुः सर्वेश्वरेश्वरः । यथा दारुषु सूक्ष्मः सन् मथितोऽग्निः समिध्यते । तथा वेदादिषु हरिर्मथितः सम्प्रदृश्यते । व्यक्तिस्थानान्यथैतानि वेदादीनि हरेर्विदुः'' इत्यनेन प्रमाणवाक्येन निरस्तमिति नास्माभिस्तद्दूषणाय प्रयत्यते । ''मनसि व्यक्ततां यामि तस्माद् व्यक्तिर्हि मे मनः'' इत्येतत् स्पष्टं च ॥ २० ॥

नन्वेवं तर्हि चतुर्मुख एव जगदाकारेण विवर्तत इति किं न स्यादत्राह **यस्मिन्निति** । यस्मिन्

**द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः ।**
**दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलः खं प्रविष्टः ॥ २२ ॥**

---

विरिञ्चे। तन्तूनां वितानस्य पद्माद्याकारस्य संस्था स्थितिः। पटाद्याधारतया तन्तुविरचितपद्माद्याकारस्य पटाद् यथा भेदः प्रत्यक्षसिद्धस्तथा विरिञ्चाद् भिन्नम्। उपलक्षणमेतत्। विरिञ्चश्च श्रीश्चैव मदाधारौ मद्भिन्नाविति । तदुक्तम् ''यथैव वस्त्रे दीर्घा च तिर्यग्वापि सुसंस्थिता । तन्तुभिः क्रियमाणैव पद्माकारसंस्थितिः । यथा जीर्णानि वस्त्राणि तन्त्वाधाराणि वा पुनः । कन्धावयवभूतानि तद्वदेत-च्चतुर्मुखे। सोऽपि तद्वद् हरौ नित्यं संश्रिता श्रीरपि स्फुटम्'' इति। उक्तं विशिनष्टि **य एष इति**। य एष संसारतरुः जगद्वृक्षः पुष्पफले स्वर्गमोक्षौ प्रसूते स विरिञ्चे, ओतः प्रोतश्चेति शेषः ॥ २१ ॥

जगद्वृक्षस्य ब्रह्मा बीजमित्युक्तम्। तद् विवृणोति **द्वे अस्येति**। ''जगद्वृक्षस्या बीजे द्वे ब्रह्मा चैव सरस्वती। मूलभूतानि कर्माणि मनोबुद्धिरहंकृतिः। नालत्वेन समुद्दिष्टाः खमाद्या स्कन्धसंज्ञिताः। एकादशेन्द्रियाण्येव शाखास्तु त्रिगुणास्त्वचः। प्रवृत्तं च निवृत्तं च फले अस्य प्रकीर्तिते। पुष्पमैहिकमुद्दिष्टं रसाः शब्दादयस्तयोः । प्रवृत्ताश्च निवृत्ताश्च पक्षिणस्तत्र संस्थिताः । वृक्षस्य पृथिवीवच्छ्रीर्विष्णुराकाशवायुवत्। तस्या अपि सदाधार एवं ज्ञात्वा विमुच्यते'' इत्यनेन व्यख्यातोऽयं श्लोकः। तथापि स्पष्टत्वाय किञ्चिदुच्यते। अस्य जगद्वृक्षस्य जलवच्च भूमिवच्च ब्रह्मसरस्वत्यौ द्वे बीजे व्यञ्जके न तु वटबीजवदङ्कुरोत्पत्त्यनन्तरं नाशशिरस्के। अत एव स्वकार्यतो गुणतो रूपतश्च महत्यौ । शतमित्युपलक्षणम् । अनेकविधान्यसंख्यानि कर्माणि मूलानि यस्य स शतमूलो जगत्तरुः । त्रयो नाला अहङ्कारबुद्धिमनोभिमानिनो रुद्रेन्द्रचन्द्रा यस्य स त्रिनालः । पञ्च आकाशादिभूतानि स्कन्धा यस्य स पञ्चस्कन्धः । पञ्चानां रसानां शब्दादीनां प्रसूतिर्यस्मात् स पञ्चरसप्रसूतिः । दश एकं चेन्द्रियाणि शाखा यस्य स एकादशेन्द्रियशाखः । द्विविधाः सुपर्णाः, प्रवृत्तिमार्गस्थाश्च निवृत्तिमार्गस्थाश्च पक्षिणः पुण्यपापलक्षणपक्षवन्तः । तेषां नीडं यस्मिन् स द्विसुपर्णनीडः । त्रीणि सत्वरजस्तमोलक्षणानि वल्कलानि त्वचो यस्य स त्रिवल्कलः । द्वे प्रवृत्तिनिवृत्तिलक्षणे फले यस्य स द्विफलः । खं विष्ण्वाख्यमाकाशं प्रविष्टः । अत्रेदं तात्पर्यम् । लक्ष्म्यादेरप्यायनाद् बाह्योदवत्, ब्रह्मादेरपि लयकर्तृत्वादग्निवत्, आधारत्वात् सुखदत्वाच्च वायुवत्, अवकाशदत्वाच्च व्योमवद् विष्णुः। ''बीजभूतावपि ह्यस्य ब्रह्मा चैव सरस्वती। न रिष्येते जगत्सृष्टौ वटवृक्षादिबीजवत्। स्वकार्यतो महान्तौ च गुणतो रूपतस्तथा। पृथिव्युदकवत् तस्माद् बीजत्वं न

तु बीजवत् । व्यञ्जकत्वान्न चाल्पत्वान्महाक्ष्मावद् रमा स्मृता । अण्डो महाक्ष्मा सम्प्रोक्तस्ततः पृथ्व्युदकं तथा । जायते नित्यशस्तस्माद् भुक्तं भुक्तं न हीयते । तत्राप्युदकवद् ब्रह्मा मृद्वच्चापि सरस्वती । जलाधारा यतो मृच्च सर्वत्रापि व्यवस्थिता । अन्यथा तु रजो भूत्वा नीयते वायुनाऽखिला । अथवा सर्वनाशः स्याज्जलाधरा ततः स्मृता । वटादिबीजवत् तस्य पुण्यापुण्यमुदीरितम् । बाह्योदवच्चाग्निवच्च विष्णुरेवं प्रकीर्तितः'' इत्येतत्, ''व्रीह्यादिवत् तु मूलत्वं कर्मणां जगतः स्मृतम् । उदवत् पृथिवीवच्च ब्रह्मणो वाच एव च । मूलभूवच्छ्रियश्चैव मूलभूरण्डमुच्यते । बाह्योदाग्नीरखंवत्तु विष्णोर्बीजत्वमुच्यते'' इत्येतच्चोक्तार्थे प्रमाणम् । तत्तज्जीवदेहादिषु स्थित्वा तत्तन्मनइन्द्रियादिगणं तत्तद्योग्यतानुसारेण श्रीहरिगुणोपसंहारे प्रेरयित्वा हरिभक्त्यादि-साधनसामग्रीसम्पादनेन हरेः प्रीतिसमुद्रे मग्नो ब्रह्मा सर्वाधिकारिभ्य उत्तमोत्तम इति ज्ञायते । तदुक्तम्- ''देहेन्द्रियमनोवाक्चक्षु स्थितो भक्त्यादिसाधकः । सुपर्णशेषरुद्रादेरपि ब्रह्मा चतुर्मुखः । अतो भक्त्यादिकाः सर्वे गुणास्तस्यैव सर्वगाः । अतिरिक्ताश्च सम्पूर्णाः सुपर्णादेः शताधिकाः । सुपर्णादिभिरज्ञातास्तदभीमानवर्जिताः । ब्रह्मणस्तु पुनः सन्ति तेषां कर्ता जनार्दनः । तस्मात् सर्वाधिको ब्रह्मा गुणैः सर्वैर्न संशयः । वर्णस्थो वर्णनामाऽसौ स्वरस्थो स्वरनामकः । मनःस्थश्च मनोनामा तन्नामा चक्षुरादिगः । तस्य सर्वाणि नामानि मुख्यतः कवयो विदुः । तत्स्थानत्वादि-न्द्रियादेर्वर्णादिश्चोपचारतः । एवमस्योपचारेण विष्णोः साक्षात्तु मुख्यतः'' इति । अनेन मात्रा स्वरो वर्ण इति क्रमेणेतित्यादिना[१] वर्णस्वरादीनां विष्णोरनन्तरं चतुर्मुखे मुख्यत्वमुक्तमिति ज्ञातव्यम् । किञ्च ''कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः। महिष्यष्टौ विना यास्ताः कथिता कृष्ण-वल्लभाः । ताभ्यः सहस्रसमिता यशोदा नन्दगेहिनी । ततोप्यभ्यधिका देवी देवकी भक्तितस्ततः । वसुदेवस्ततो जिष्णुस्ततो रामो महाबलः । न ततोऽभ्यधिकः कश्चिद् भक्त्यादौ पुरुषोत्तमे । विना ब्रह्माणमीशेशं स हि सर्वाधिकः स्मृतः'' इत्यनेन सर्वाधिकारिभ्योपि ब्रह्मणोऽधिकभक्तिमत्त्वं गोपिकादिष्वपि भक्तितारतम्यमस्तीत्युक्तम् । अतो रामेण सार्धं मधुरां प्रणीते श्वाफल्किनेत्यादौ प्रतीयमानभक्तितारतम्याभावाशङ्का निरस्ता । ''पापद्वेषादिका दोषा अवराणां न संशयः । भक्त्यादिगुणपूगस्तु पराणामाविरिञ्चतः । स्वातन्त्र्यात् सर्वदेहेषु स्थितानामपि सर्वशः । स्पृश्यन्ते नैव दोषैस्ते गुणादानैकतत्पराः'', ''यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद् भवति'', ''पुण्यमेवामुं

१. पूर्वं सप्तदशे श्लोके मात्रा स्वरो वर्ण इति स्थविष्ठमिति पठित्वा व्याख्यतम् । इदानीं मात्रा स्वरो वर्ण इति क्रमेणेत्युदाहृत्य क्रमशब्दसूचितमर्थमाह । उभावपि पाठौ सम्मतौ स्याताम् ।

**अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ।**
**हंसा य एवं बहुरूपमिष्टं मायामयं वेद स वेद वेदम् ॥ २३ ॥**

**एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ।**
**विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥**

**॥ इति द्वादशोऽध्यायः ॥**

---

गच्छति नह वै देवान् पापं गच्छति'' इति श्रुतिस्मृतिभ्यां प्रजार्जितभक्त्यादिगुणपूगस्पर्श एव मनआदीन्द्रियाभिमानिदेवानां न तु तदार्जितपापादिस्पर्श इति निर्णीतत्वान्नात्र शङ्का कार्या ॥ २२ ॥

अस्य जगद्वृक्षस्यैकं फलं प्रवृत्तकर्मफलं स्वर्गादिलक्षणं ग्रामेचरा गृध्रा विषयलोलुपाः कर्मिणो अदन्ति । एकं निवृत्तलक्षणं कर्मफलं मोक्षं अरण्यवासा हंसाः श्रीनारायणाख्यक्षीरपायिनो ज्ञानिनो भुञ्जते इति । एतद्वृक्षवर्णनस्य फलमाह **य इति** । यः पुरुष एवं बहुरूपं बहुविधम् इष्टं भोगायतनत्वेनाभीष्टं मायामयं भगवदिच्छानिमित्तमूलप्रकृत्युपादानकर्तृकं[१] जगद्वृक्षं वेद स पुरुषो वेदं वेद, यतः प्रसूता जगतः प्रसूतिरित्यादिवेदार्थं वेदेति ॥ २३ ॥

एतद्विद्याफलमाह **एवमिति** । एवमुक्तप्रकारेण सद्गुरूपासनया प्रधानभक्त्या निशितेन विद्याकुठारेण प्राकृतान्तःकरणजन्यज्ञानपरशुना जीवाशयं बाह्यान्तःकरणं विवृश्च्य च्छित्त्वा निर्मलीकृत्य[२] प्राकृतान्तःकरणजन्यज्ञानमस्त्रं संसारनिरासकरं त्यज । अथ तज्ज्ञानत्यागानन्तरं निजज्ञानेनात्मानं परमात्मानं सम्पद्य मुक्तौ यथायोग्यसुखमनुभवसि चेति भावः । ''प्राकृतान्तःकरणजं ज्ञानमस्त्रं सृतिच्छिदम् । तदेव तेन संच्छेद्यं चित्तं प्रकृतिसम्भवम् । तेनैव सह सन्त्याज्यं नैव पूर्वं कथञ्चन । ज्ञानं प्रकृतिजं वाऽपि मूलनाशे विनश्यति । ततः परं स्वरूपेण ज्ञानेनैव जनार्दनम् । वेत्ति मुक्तस्तथाऽऽत्मानं जीवानन्यांश्च सर्वशः'' इति वाक्यान्न ज्ञानमात्रोच्छेदो विवक्षितः किन्तु प्राकृतस्यैवेति ॥ २४ ॥

**॥ इति श्रीविजयध्वजतीर्थविरचितायां श्रीभागवतटीकायां पदरत्नावल्यां एकादशस्कन्धे द्वादशोऽध्यायः ॥**

---

१. भगवदिच्चामूलप्रकृत्युपादानकर्तृकमित्येव पाठः सर्वकोशेषु । उपादानकर्तृकमित्यस्योपादानकारणक-मित्यर्थः । भगवदिच्छानिमित्त इति बहुव्रीहिः । स चासौ प्रकृत्युपादानकश्च, तमित्यर्थः ।

२. निर्मलीकृत्येति पाठ एव सर्वकोशेषु दृश्यते । अर्थस्त्वस्फुटः । निर्मलीकृत्य इति पाठः स्याद् पाठः स्याद्वा ।

## ॥ अथ त्रयोदशोऽध्यायः ॥

**श्रीभगवानुवाच -**

**सत्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ।**
**सत्वेनान्यतमौ हन्यात् सत्वं सत्वेन चैव हि ॥ १ ॥**

**सत्वाद् धर्मो भवेच्छुद्धात् पुंसो मद्भक्तिलक्षणः ।**
**सात्विकोपात्तया ज्ञानं ततो धर्मः प्रवर्तते ॥ २ ॥**

**धर्मो रजस्तमो हन्यात् सत्ववृत्तिरनुत्तमा ।**
**आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥**

---

संसारच्छेदकरं बाह्यान्तःकरणजं ज्ञानं स्वधर्मिणमपि विनाश्य स्वयं च नश्यतीत्युक्तम् । तत् प्रपञ्चयन् भक्तेरुत्पत्तिप्रकारादिकं कथयत्यस्मिन्नध्याये । तत्र सत्वादिगुणा आत्मनो बुद्धेः किं वेति संशये भगवान् निर्धारयति **सत्वमिति** । बुद्धेरन्तःकरणस्य, विद्यमाना इति शेषः । नात्मनो जीवस्य । तत्र सात्विकादिभेदेनान्तःकरणं त्रिविधम् । ततः किम् । तत्राह सत्वेनेति । सत्वेन सत्वगुणविशिष्टान्तःकरणेन अन्यतमौ राजसतामसभावौ हन्यात् । सत्वं सात्विकमन्तःकरणं सत्वेन तज्जनितज्ञानेन हन्यात् ॥ १ ॥

सत्वेनान्यतमौ हन्यादित्येतद् विवृणोति **सत्वादिति** । शुद्धात् सत्वात् पुंसो मद्भक्तिलक्षणो धर्मो भवेत् । धर्मः किमुद्रेचयतीति तत्राह **सात्विकेति** । ततो धर्मात् पुनः सत्वोद्रेकः, तस्मादुद्रिक्तसात्विकोपात्तया बुद्ध्या ज्ञानं ततः पुनः सत्वोद्रेकः, तस्मात् पुनः धर्मोद्रेकः प्रवर्तते । उद्रिक्तभक्तिधर्मपूरितान्तःकरणो ब्रह्मार्पणबुद्ध्या धर्ममेव करोतीत्यर्थः ॥ २ ॥

धर्मफलमाह **धर्म इति** । स धर्मो रजस्तमश्च हन्यात् । पुनः कथमस्य वृत्तिरिति तत्राह **सत्ववृत्तिरिति** । सत्वेन भक्तिस्वभावेन वृत्तिः वर्तनं भवति । भक्तिमयो वर्तत इत्यर्थः । भक्तिप्रतिबन्धकेऽधर्मे सति कथं तद्वृत्तिरिति तत्राह **आश्विति** । उभये रजसि तमसि च हते तन्मूलस्त्वधर्म आशु नश्यतीति । अतो युक्तमुक्तमिति ॥ ३ ॥

**आगमो यजनं देशः कालः कर्म च जन्म च।**
**ध्यानं मन्त्रोऽथ संस्कारो नवैते गुणहेतवः ॥ ४ ॥**

**तत्तत् सात्विकमेवैषां यद्यद् वृद्धाः प्रचक्षते।**
**निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम् ॥ ५ ॥**

**सात्विकान्येव सेवेत पुमान् सत्वविवृद्धये।**
**ततो धर्मस्ततो ज्ञानं वाचः स्मृतिरपोहनम् ॥ ६ ॥**

**वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम्।**
**एवं गुणव्यत्ययजो वेदः शाम्यति तद् यथा ॥ ७ ॥**

---

भक्तिज्ञानसाधनान्यागमादयोऽत्र सत्वादिगुणकृता इत्याह **आगम इति**। सत्वादयो गुणा एव हेतवो येषां ते तथा। अनेनैव च सात्विकादिभेदेन त्रिविधा इत्युक्तं भवति ॥ ४ ॥

तत्तद्भेदज्ञानं कथमत्राह **तत्तदिति**। ज्ञानवृद्धा एषामागमादीनां मध्ये यद्यत् साध्विति प्रचक्षते तत् सात्विकं यद्यन्निन्दन्ति तत् तामसं यदुपेक्षितं प्रचक्षते तद् राजसम्, इति जानीहीति शेषः ॥ ५ ॥

किमर्थमेवं विभागवचनं येनोपयोग्यं स्यादत्राह **सात्विकानीति**। सत्वं सत्वस्वभावः, तद्विवृद्धये। किं तत इति तत्राह **तत इति**। ततः सत्वाद् भक्तिसाधनं धर्मः, ततो धर्मात् ज्ञानं स्यात्। किञ्च हरिविषया वाचः, हरिविषया स्मृतिः, अपोहनं भगवद्विरुद्धत्याग इत्येते भवन्ति ॥ ६ ॥

एवमुत्पन्नवृत्तिज्ञानस्य नाशं सदृष्टान्तमाह **वेण्विति**। तत् मूलनिर्वाणं यथा तथा कथयामः। तथा हि। यस्मिन् वने वेणवः सन्ति तेषां वेणूनां सङ्घर्षाज्जातो वह्निः तद्वनं दग्ध्वा स्वयमपि शाम्यति। एवं गुणव्यत्ययजः सत्वादिगुणानामन्योन्यनाशात् पृथक्स्थितात् उद्रिक्तात् सत्वाज्जातो वेदः वृत्तिज्ञानं स्वकारणमन्तःकरणं विनाश्य निर्मूलं (सत्) स्वयं च विनश्यतीत्यन्वयः। वि निषेधे पृथग्भाव इति, अति स्यादधिकार्थोक्तौ प्रशंसायामतिक्रम इति च यादवः। वेदशब्दस्य प्रसिद्धार्थं परित्यज्याप्रसिद्धकल्पने किं निमित्तम्। उच्यते। उपक्रमं ब्रूमः। "मुक्ताश्चाधीयते वेदान् जडज्ञानविवर्जिताः। स्वरूपभूतज्ञानेन पश्यन्तः सर्वमञ्जसा" इति वाक्यं च। विद ज्ञान इति धातोश्च। अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मेति श्रुतेः न स्वरूपज्ञाननाशः उपपन्नः। स्वरूपहानिप्रसङ्गात्। एतत् साम गायन्नास्त इत्यादिश्रुतिविरोधाच्च वेदोपशमो नोपपन्न इति ॥ ७ ॥

उद्धव उवाच -

विन्दन्ति मर्त्याः प्रायेण विषयान् पदमापदाम् ।
अथापि भुञ्जते कृष्ण तत् कथं श्वखराजवत् ॥ ८ ॥

श्रीभगवानुवाच -

अहमित्यन्यथाबुद्धिः प्रमत्तस्य यदा हृदि ।
उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥

रजोयुक्तस्य मनसः सङ्कल्पः सविकल्पकः ।
ततः कामो गुणाध्यानाद् दुःसहः स्याद् हि दुर्मतेः ॥ १० ॥

करोति कामवशगः कर्माण्यविजितेन्द्रियः ।
दुःखोदर्काणि संपश्यन् रजोवेगविमोहितः ॥ ११ ॥

---

विषयाणामापदां पदत्वं जानन्तोऽपि तानेव सेवन्ते, तत्र किं कारणमिति भावेन पृच्छति **विन्दन्तीति**। श्वा च खरश्चाजश्च श्वखराजाः, तद्वत् ॥ ८ ॥

अकर्तर्यात्मनि अहं कर्तेत्यभिमानमेति, तन्मूलरागोत्सिक्तमनःकारणकः कामः कारणमित्युत्तरमाह **अहमितीति**। अयमक्षरार्थः। यदा प्रमत्तस्य हृदि अहं कर्तेति अन्यथा बुद्धिरुत्सर्पति उत्क्वथति तथा घोरं रज उत्सर्पति उदेति ततो रागोदयादुच्छ्वसितं मनो वैकारिकं विविधविकाराकरो भवतीति ॥ ९ ॥

रजसा विकारस्य मनसो विविधकल्पनया युतः सङ्कल्पः इदमित्थं करिष्यामीदमेवं करिष्य इत्यादिलक्षण उदेति। एवं विविधसङ्कल्पेन दुर्मतेः अशोभनबुद्धेः गुणानां शब्दादीनां ध्यानाद् दुःसहः कामः स्यादित्यन्वयः ॥ १० ॥

कामस्य दुस्सहत्वमुपपादयति **करोतीति**। रजोवेगविमोहितत्वेन कामवशं गतः, तस्मादविजितेन्द्रियः। तस्मात् कर्माणि दुःखोदर्काणि संपश्यन्नपि पुनः कर्माणि करोतीत्यन्वयः। यद्वा काममयत्वेनाविजितेन्द्रियो भवति, तेन चक्षुरादीन्द्रियजयाभावेन वनितादिरूपं पश्यन् रजोवेगेन वीर्योद्रेकेण विमोहितः विवेकज्ञानशून्यत्वेन विह्वलिताङ्गो दुःखफलानि कर्माणि करोति। कामसौख्याय विषयान् भुङ्क्त इति ॥ ११ ॥

**रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः।**
**अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जते ॥ १२ ॥**

**अप्रमत्तो हि युञ्जीत मनो मय्यर्पयन् शनैः।**
**अनिर्विण्णो यथाकालं जितश्वासो जितासनः ॥ १३ ॥**

**एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः।**
**सर्वतो मन आकृष्य मय्यद्धाऽवेश्यते यथा ॥ १४ ॥**

**उद्धव उवाच -**

**यदा त्वं सनकादिभ्यो येन रूपेण केशव।**
**योगमादिष्टवानेतद् रूपमिच्छामि वेदितुम् ॥ १५ ॥**

---

ननु विषयाणां समुद्रतरङ्गवदावर्तमानत्वान्न संसारादस्योत्थानं स्यात् पुरुषायुषसहस्रेणापि, तस्मान्मोक्षशास्त्रविधानं व्यर्थमित्याशङ्क्य अज्ञस्यैवं न तत्वज्ञस्येत्याह **रजस्तमोभ्यामिति**। विद्वच्छब्दविवरणं दोषदृष्टिरिति। पुनःशब्दो वीप्सार्थो दोषदृष्टिरित्यनेन सम्बध्यते। विद्वान् यदपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीः, तथाप्यतन्द्रितो भूत्वा हरौ मनो युञ्जन् पुनर्दोषदृष्टित्वाद् विषयेषु न सज्जते। शरीरयात्रार्थं विषयान् सेवमानोपि तैः प्रतिबद्धो न भवतीति ॥ १२ ॥

एतदेव विवृणोति **अप्रमत्त इति**। हिशब्दः सर्वशास्त्रसिद्धत्वद्योतकः। मनो विषयेभ्य आकृष्य शनैःशनैः मय्यर्पयन् स्थापयन् युञ्जीत ध्यायेत्। योगः सन्नहनोपायध्यानसङ्गतिमुक्तिष्विति यादवः। मामिति शेषः। अनिर्विण्णः अनालस्यः, अथालमिति बुद्धिवैराग्यशून्यो वा ॥ १३ ॥

सनकादियोगीन्द्रयोग[1]सम्मत्यभावान्नायं योगः साधीयानित्यत्राह **एतावानिति**। यथा मनो मय्येवावेश्यते तादृशो योग एतावान् नान्य इति। सनकादिभिरादिष्ट इत्यद्धा सत्यम्। अद्धा प्रत्यक्षसत्ययोरिति च ॥ १४ ॥

लोकोपकाराय मेरुशृङ्गोपरिस्थितौषधोपदेशवत् सनकाद्यादिष्टयोगोपदेशनमित्यश्रद्धेयमिति पृच्छति **यदेति** ॥ १५ ॥

---

१. योग इत्यधिकमिति भाति।

**श्रीभगवानुवाच -**

**पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ।**
**पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ।। १६ ।।**

**सनकादय ऊचुः -**

**गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ।**
**कथमन्योन्यसन्त्यागो मुमुक्षोः संतितीर्षतः ।। १७ ।।**

**श्रीभगवानुवाच -**

**एवं पृष्टो महान् देवः स्वयम्भूर्भूतभावनः ।**
**ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ।। १८ ।।**

---

इष्टसाधनावबोधकत्वेनाप्तिमूलकत्वेन वेद इव च प्रमाणमिति श्रद्धेयमित्याशयेन परिहर्तुमितिहासमाह **पुत्रा इति** । योगस्य ज्ञानस्य गतिम् ।। १६ ।।

किं ज्ञानविषयोयं प्रश्न इति तत्राह **गुणेष्विति** । पुंसां चेतो गुणेषु शब्दादिष्वाविशते, गुणाः शब्दादिविषयाः चेतसि संस्काररूपेण वर्तन्ते । तत्र संतितीर्षोः संसारनदीं तर्तुकामस्य मुमुक्षोः मुक्तियोग्यस्याधिकारिणः कथमन्योन्यसन्त्यागः । विषयेभ्यश्चेतस आकर्षणं चेतसो विषयाणामाकर्षणम्, पृथक्करणमित्यर्थः । तदुच्यतामिति शेषः ।। १७ ।।

तत्र ब्रह्मणा किमुक्तमिति तत्राह **एवमिति** । प्रश्नो बीजं यस्य सः प्रश्नबीजः, तं परिहारम् । अन्यमनस्क इव स्थितत्वादित्याह **कर्मधीरिति** । अस्यार्थः गुणानां चेतसश्च कर्म कारणमिति मन्वानः (इति) । अन्यमनस्कत्वे किं कारणमित्यस्येदमेवोत्तरं कर्मणि सर्वकर्तरि हरौ धीर्यस्य (इति) । कर्मणा हरिणैव परिहारो वक्तव्य इति धीर्यस्य स तथा । कर्म भगवन्तमेव ध्यायतीति वा । तदेतदुक्तम् - ''ब्रह्मा पृष्टस्तु योगीन्द्रैः सनकाद्यैर्मनोगतेः । कारणं विषयेष्वद्धा कर्मेति प्रत्यपद्यत । हेतुरन्योपि तत्रास्तीत्येवं जानन्नपि प्रभुः । विशेषतो मनस्तत्र नाधाज्जानन् हरेः प्रियम् । स्वात्मना परिहारोक्तिस्तदा नैव हरेः प्रिया । अतः स तत्प्रियं जानन् नाकरोत् तद्विचारणम् । तमेवाचिन्तयद् देवः प्रश्ननिर्णय-कारणात् । भ्रमतीव मनः क्वापि ब्रह्मणो विष्णुमायया । सर्वज्ञस्यापि यत्रात्मा वक्तुमिच्छेज्जनार्दनः । तज्ज्ञात्वा चिन्तितं तस्य चिन्तयत्यमुमेव तु । न स्वयं चिन्तयत्यर्थं स हि तद्भाववित् सदा । अन्ये त्वज्ञानसंयुक्ता मोहमीयुर्यथाक्रमम् । तस्य माध्यन्दिने सूर्ये क्षोभवत् क्षोभमात्रकम् । नैवाज्ञानं यथा सूर्ये तमो नास्ति कदाचन'' इत्येतस्मिन् वाक्ये ।। १८ ।।

**स मामचिन्तयद् देवः प्रश्नपारविनिश्चयम् ।**
**तस्याहं हंसरूपेण समीपमगमं तदा ।। १९ ।।**

**दृष्ट्वा मां त उपाव्रज्य कृत्वा पादाभिवन्दनम् ।**
**ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ।। २० ।।**

**इत्यहं मुनिभिः पृष्टस्तत्वजिज्ञासुभिस्तदा ।**
**यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ।। २१ ।।**

**वस्तुनो यद्यनानात्वमात्मनः प्रश्नः ईदृशः ।**
**कथं घटेत वो विप्रा वक्तुं वाऽनेक आश्रयः ।। २२ ।।**

**पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ।**
**को भवानिति वः प्रश्नो वाचारम्भो निरर्थकः ।। २३ ।।**

**मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।**
**अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा ।। २४ ।।**

---

नन्वेवं तर्हि सनकादीनां प्रश्नो निरर्थो बालप्रश्नवदिति शङ्का मा भूदिति भावेनाह **स मामिति** । प्रश्नस्य पारः पूरणं, परिहार इति यावत्, तस्मिन् निश्चयो यस्य स तथा तम् ।। १९ ।।

ज्ञानविधुरयोनित्वेन संशयविषयेण स्वेनोक्तार्थे प्रामाण्य(बुद्धि)जननाय को भवानिति तत्प्रश्नं विघटयति **वस्तुन इति** । आत्मनो वस्तुनः परमात्मवस्तुनो भवत्पक्षे यद्यनानात्वमेकत्वं विवक्षितं तर्हि अनानात्वे एकत्वपक्षे को भवानितीदृशः प्रश्नः कथं घटेत । सिद्धविषयत्वादिति शेषः । हे विप्राः वः प्रश्नो यद्यनेकाश्रयः नानात्वाश्रयः तर्ह्यपि को भवानिति वक्तुं कथं घटेत । अनेकस्मिन् बहुत्वसंख्याविशिष्टे वस्तुनि एकत्वसंख्याविशिष्टत्वेन वक्तुमनुपपन्नत्वात् ।। २०-२२ ।।

सिद्धविषयत्वं कथमत्राह **पञ्चात्मकेष्विति** । देवमनुष्यपितृगन्धर्वासुरभेदेन पञ्चविधेषु भूतेषु जीवेषु हिरण्यगर्भापेक्षयाऽवरत्वात् तद्वन्द्यत्वाभावापेक्षया वस्तुतो वस्तुवृत्त्या समानेषु सत्सु ब्रह्माभिवन्दितचरणारविन्दं मामुद्दिश्य को भवानिति वाचारम्भो यस्य स तथा, वाचारब्ध इत्यर्थः, वः प्रश्नः निरर्थकः निर्विषय इति ।। २३ ।।

कुतो निरर्थक इति तत्राह **मनसेति** । मनआदीन्द्रियैर्यद् गृह्यते तदहं न भवाम्येवेति यस्मात्

**गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः।**
**जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥**

**गुणेषु वा विशेच्चितमभीक्ष्णं गुणसेवया।**
**गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥**

---

तस्मान्निर्विषय इत्यन्वयः। त्वमपि त्वत्प्रसादात् गृह्यसे ननु। तस्मात् प्रश्न कुत इति तत्राह **मत्तोऽन्यदिति**। नेत्यनुषज्यते। अन्यदिति भावनिर्देशः। यन्मनआदिभिर्विचार्य मत्तोऽन्यत्त्वेनैव गृह्यते तदहं न भवाम्येवेति बुद्ध्यध्वमितीदम् अञ्जसा तत्त्वम्। अञ्जसा त्वरिते तत्त्व इत्यभिधानम्। विचार्य निर्णीतस्यापि पुनः संशयकारणं परिकल्प्य संशयो न कर्तव्यः। अतः को भवानिति प्रश्नो नारब्धव्यः। किन्तु गुणेष्वाविशते चेत् इत्येव प्रश्न आरब्धव्य इति भावः। "न युष्माकं मयि प्रश्नो घटतेऽयं कथञ्चन। मामृते नहि वन्द्योऽस्ति विरिञ्चेः क्वापि कश्चन। अभिवन्दितपादं मां विरिञ्चेन कथं पुनः। पृच्छथान्ये समा यस्मादवरत्वे चतुर्मुखात्। देवा मनुष्याः पितरो गन्धर्वा असुरास्तथा। इति पञ्चात्मकं सर्वं ब्रह्मणस्त्ववरं यतः। यन्मदन्यद् विचारेण गृह्यते तन्न चास्म्यहम्। इति जानीध्वमद्धैव मत्प्रसादाद् हि मद्दृशिः। अन्यत् स्वभावतो दृश्यं मम प्रेरणयैव तु। तस्माद् विवक्षितार्थे तु प्रश्नारम्भो न मद्गतः" इति समाख्यानबलादुक्त एवार्थो नान्यः स्वकपोलकल्पित इति। किञ्च इदं हि विश्वं भगवानिवेतर इत्यतश्च हरेर्जगतो भेदः सिद्ध इति। सकलशास्त्राणां मोक्षे हि तात्पर्यम्। मोक्षश्च प्रकृतिप्राकृतविवेकज्ञानाद् विष्णोः। तदुक्तम् "प्रकृतेर्व्यतिरिक्तो यः पुरुषश्चेति कथ्यते। तं विद्यात् परमात्मानं वासुदेवेति यं विदुः", "प्रकृतेः प्राकृताच्चैव व्यतिरिक्तं गुणाधिकम्। ये विदुः परमात्मानं ते यान्ति परमं पदम्", "नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह। बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्" इति बहुप्रमाणेषु ॥ २४ ॥

इदानीं सनकादीनां प्रश्नं परिहरति **गुणेष्विति**। हे प्रजाः ब्रह्मजत्वेन प्रकृष्टजन्मवत्त्वात् तथा सम्बोधनम्। चेतो गुणेष्वाविशते गुणाश्चेतसीति वः प्रश्नस्यायं परिहारः। मय्येवात्मा मनो यस्य स मदात्मा, तस्य जीवस्य गुणाश्चेतश्चेत्युभयं देहे दग्धमभवत्। दह भस्मीभाव इत्यस्योभयपदित्वेन एतद्रूपसिद्धिः ॥ २५ ॥

पञ्चधातुमद्गुणचित्तभस्मीभावो ज्ञानाग्निनेत्युक्तम्। तत्र स केन कारणेनोदेतीत्यत्राह **गुणेष्विति**। अभीक्ष्णं निरन्तरं गुणानां विषयाणां सेवया चित्तं चेतो गुणेषु विषयेष्वाविशेत्, तदेकनिष्ठं

**जाग्रत्स्वप्नसुषुप्तिश्च गुणतो बुद्धिवृत्तयः ।**
**तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ।। २७ ।।**

**यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तितः ।**
**मयि तुर्ये स्थितो जह्यात् त्यागस्तु गुणचेतसाम् ।। २८ ।।**

**अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्ययम् ।**
**विद्वान् निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ।। २९ ।।**

---

वर्तते । गुणाश्च चित्तप्रभवाः चित्ते प्रभवो येषां ते तथा, चित्ते संस्काररूपेण वर्तन्ते । हरिस्मरणमतिक्रम्य प्रतीयन्त इत्यर्थः । ततः किमत्राह **मद्रूप इति** । तत्र विद्वान् मद्रूपे मम स्वरूपे चेतो गुणश्चेत्युभयं त्यजेत् । इदमुक्तं भवति । मनआदीन्द्रियाणि मदन्तर्यामिणि हरौ स्थितानि तदाधाराणि तत्प्रेरितानि विषयेषु वर्तन्ते विषयाश्च विष्णुस्था विष्ण्वाधारा विष्णुप्रेरिता मम भोगसाधनानीत्ययं विष्णौ गुणादित्याग इति । ''विष्णुस्था विषयाः सर्वे विष्णावेव मनो मम । इति मय्यर्प्य तत् सर्वं त्यजेत् तत् तं न बाधते'' इति वचनान्मुमुक्षुभिरेवमेव नित्यमनुसन्धेयम् ।। २६ ।।

नन्वस्य गुणसङ्गस्य स्वाभाविकत्वे पुरुषायुषानन्त्येनापि त्यागो न सुलभ इति तत्राह **जाग्रदिति** । जाग्रदाद्यवस्थाः गुणतो गुणद्वारेण बुद्धिवृत्तयः बुद्ध्या प्रकृत्या वृत्तिर्वर्तनं यासां तास्तथा । प्रकृतिगुणसम्बन्धाज्जीवस्य जाग्रदाद्यवस्थावर्तित्वं न स्वाभाविको गुणसङ्ग इत्यर्थः । तात्पर्यमाह **तासामिति** । तासां जाग्रदाद्यवस्थानां साक्षित्वेन वर्तमानो जीवः स्वतः ताभ्यो विलक्षणो विनिश्चित इत्यन्वयः ।। २७ ।।

नन्वयमस्वाभाविकः स्वत एव निवर्तते न तत्साधनप्रयत्नापेक्षेत्याशङ्कां परिहर्तुमुक्तानुवादपूर्वकं तत्साधनं कथयति **यर्हीति** । आत्मनो जीवस्यायं संसृतिबन्धः सत्वादिगुणप्रवृत्तितः इति यर्हि यस्मात् तस्मात् तुर्ये गुणत्रयातीते मयि स्थितस्तं बन्धं जह्यात् मदुपासनासमुद्रेकसमुद्भूतज्ञानाविर्भूतमत्प्रसादेन बन्धं त्यजतीत्यर्थः । कोऽयं बन्धत्यागो नाम येन हेयत्वेन वर्ण्यत इति तत्राह **त्याग इति** । विषयारूढबाह्यान्तःकरणत्याग एव बन्धत्यागो नाम नान्यदिति ।। २८ ।।

नन्वनेनोपायेन गुणनिमित्तबन्धत्यागोऽस्तु, अहङ्कारनिमित्तबन्धत्यागस्य क उपाय इति

**यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।**
**जाग्रत्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥**

**असत्त्वादात्मनोऽन्येषां भावानां किंकृताऽभिदा ।**
**गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥**

---

मन्दाशङ्कामहङ्कारकृतबन्धोऽपि गुणहेतुक एवेत्येक एव नामान्तरेणोच्यते, उपायोऽप्ययमेवेत्याशयेन परिहरति **अहङ्कारमिति**। अस्वरूपेऽप्यहंङ्कारममकाराभ्यां रजोगुणोत्कथिताभ्यां कृतमिमं बन्धमात्मनो जीवस्य अर्थविपर्ययं दुःखलक्षणमनर्थं विद्वान् निर्विद्य अनित्यासारताबुद्धिं कृत्वा तुर्ये भगवति स्थितः संसारचिन्तां त्यजेदित्यन्वयः ॥ २९ ॥

ननु कियन्तं कालं संसारनुवृत्तिरत्राह **यावदिति**। हरेः स्वातन्त्र्यादियुक्तिभिः, जीवस्यास्वातन्त्र्यादियुक्तिभिरनयोः जीवपरयोरेकत्वबुद्धिः, एकस्य हरेर्नानात्वबुद्धिरिति नानार्थधीः मिथ्याज्ञानं यावन्न निवर्तेत तावदसौ जाग्रत्यपि स्वपन् निद्रालुरज्ञः संसार्येव। स्वप्ने जागरणं यथा जाग्रत्त्वबुद्धिः (यथा)। "भिन्नस्य त्वेकभावेन तथैकस्य च भेदतः। ज्ञानं नानार्थधीः प्रोक्ता नानात्वादर्थतद्धियोः" इति वचनादुक्त एवार्थो नान्य इति ॥ ३० ॥

अभेदज्ञानस्य श्रुतियुक्तिसिद्धत्वात् तस्यैव मुक्तिहेतुत्वात् तस्य च ग्राह्यत्वात्, चेतनाद् भिन्नस्य जडस्य तदेकत्वकल्पनमद्वितीयस्यात्मनो भेदकल्पनं नानार्थधीरित्यर्थकल्पनोपपत्तेरुक्तमानस्यात्मेतरस्य मिथ्यात्वेन सर्वस्योपपत्तेरिति तत्राह **असत्त्वादिति**। आत्मनो ज्ञानादिगुणपूर्णस्य हरेरन्येषां भावानां ब्रह्मादिसर्वपदार्थानां असत्त्वादशक्तत्वात् तेषां सर्वशक्तिमता हरिणा अभिदा किं कृता कया युक्त्या केन मानेन व सिद्धा। केनापि न सिद्धेत्यर्थः। तत्वमसि, आत्माऽद्वितीयः बोद्धत्वादित्यादिमानसद्भावादत्राह **गतय इति**। गमयन्त्यवगमयन्त्यभीष्टमर्थमिति गतयो वचनानि हेतवो लिङ्गज्ञानानि चास्याभिमतानि मृषा न साधकानि, स्वप्नदृशो यथा स्वप्नस्य जाग्रत्त्वज्ञानानि यथा अविद्यमानानि स्वाभीष्टासाधकानि। स्वमतरीत्या चैवमित्यभिप्रायः। "अभिदा किं कृतैतेषां भावानां परमेश्वरे। यतोऽसत्त्वमशक्तत्वाद् भावानां तस्य शक्तता। ततः सत्त्वं साधुभावः सत्त्वमित्युच्यते बुधैः। साधुभावश्च शक्तिः स्यादतोऽन्याऽसाधुता ततः। अभेदे जगतो विष्णोर्या वाचा ये च हेतवः। स्वप्नजाग्रत्कल्पकवत् सर्वे ते भ्रमदर्शिनः" इति वचनात् ॥ ३१ ॥

**योजागरे बहुविधान् क्षणधर्मिणोऽर्थान्**
**भुङ्क्ते समस्तकरणो हृदि तत्सदृक्षान्।**
**स्वप्नेऽथ सुप्तः उपसंहरते स एकः**
**स्मृत्यन्वयात् त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥**

**एवं विमृश्य गुणतो मनसस्त्र्यवस्था**
**मन्मायया मयि कृता इति निश्चितार्थाः।**
**सञ्छिद्य हार्दमनुमानसदुक्तितीक्ष्ण -**
**ज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ३३ ॥**

---

ननु परमात्मभेदस्याप्राप्तत्वेन तद्भेदस्य भ्रमत्वं कथमापाद्यत इत्याशंक्य प्राप्तिमापाद्य प्रतिषेधति **यो जागर इति**। यो जीवस्य दक्षिणाक्षिस्थितो विश्वाख्यो हरिर्जागर जाग्रदवस्थायां क्षणधर्मिणः क्षणकालवर्तित्वलक्षणवतो बहुविधानर्थान् भुङ्क्ते, अस्वतन्त्रजीवस्य दर्शयति, स्वप्ने च कण्ठस्थः समस्तकरणः सम्यग्वशीकृतेन्द्रियः तैजसाख्यो विष्णुः हृदि मनसि संस्काररूपेण स्थितान् तत्सदृक्षान् जाग्रदर्थसदृक्षान् पदार्थान् जीवस्य दर्शयति, यश्च सुप्ते सुप्त्यवस्थायां हृदि स्थितः प्राज्ञाख्यः परः उपसंहरते, इन्द्रियाणीति शेषः, विषयेभ्य इन्द्रियाण्याहृत्य जीवानन्दं पश्यति तं च स्वरूपानन्दं भोजयति स्वयं च विहितानन्दं भुङ्क्ते स विश्वादित्रिरूपः एकः भेदरहितः। कुत इति तत्राह **स्मृत्यन्वयादिति**। स्मृतीत्युपलक्षणम्। श्रुतिस्मृतिमानेभ्य इत्यर्थः। भुङ्क्त इत्यस्यानुभवतीत्यर्थं परित्यज्य दर्शयतीत्यर्थकथने किं नियामकमत्राह **त्रिगुणेति**। त्रिगुणवृत्तीः जाग्रत्स्वप्नसुषुप्तीः पश्यतीति त्रिगुणवृत्तिदृक्। ''दक्षिणाक्षिस्थितो विष्णर्भुङ्क्तेऽर्थान् जाग्रति स्थितान्। कण्ठसंस्थस्तथा स्वप्नान् जीवानन्दं च सुप्तिगः। श्रुत्यन्वयात् स्मृतिभ्यश्च स एकः परमेश्वरः। अस्वतन्त्रस्य जीवस्य स्वतन्त्रो जगदादिजः। स्वयं स्वप्नादिहीनः सन् क्रीडते पुरुषोत्तमः'' इति, ''स्वप्नेन शारीरमभिप्रहृत्यासुप्तः सुप्तानभिचाकशीति'' इत्यादिश्रुतिस्मृतिभ्य उक्त एवार्थः। अत्र हरेः साक्षित्वं सुखैकभोक्तृत्वं च तात्पर्यार्थः। न त्वनानन्दानुभवः, तदतीतत्वात्। कुत इति तत्राह **इन्द्रियेश इति**। इन्द्रियप्रवृत्तिसमर्थस्य तद्भोग्यदुःखानुभवस्यानुचितत्वात्। अनेन तुर्यस्य विश्वाद्येकत्वमुक्तं भवति ॥ ३२ ॥

उक्तार्थानुवादपुर्वकमुक्तज्ञानफलं विधत्ते **एवमिति**। एवमुक्तविधं विमृश्यालोच्य। कथमित्युक्तं स्मारयति **गुणत इति**। सत्वादिगुणत उद्भूतान्। मननान्मन उद्दिष्ट इति मनसो जीवस्य जाग्रदाद्यवस्था मन्मायया मदिच्छया मयि मदाधारत्वेन कृता विहिताः पर्याप्ता इति निश्चितार्थाः यूयमनुकूल-

**वीक्षेत विभ्रममिमं मनसो विलासं**
**दृष्टं विनष्टमतिलोलमलातचक्रम्।**
**विज्ञानमेकमुरुधेव विभाति माया स्वप्ने**
**यथा त्रिगुणसर्गकृतो विकल्पः ॥ ३४ ॥**

---

श्रुत्यादिमानेन सतां महतामुक्त्या वचनेन तीक्ष्णेन निशितधारेण ज्ञानाख्यासिना हार्दं हृदिरूढमखिलसंशयाख्यमाधिं सञ्छिद्य मा मां भजतेत्यन्वयः। अनेन मुक्तिरप्युक्ता भवतीति ज्ञातव्यम् ॥ ३३ ॥

ननु जाग्रदादिषु प्रवर्तकत्वेन वर्तमानस्य हरेर्विश्वादिरूपाणां भेदो नास्तीत्युक्तम्। तत्र वृत्तिभेदेन प्रतीयमानो भेदः कथं प्रत्येतव्य इत्यत्राह **वीक्षेतेति**। जाग्रदादिषु प्रतीयमानमिमं परमात्मभेदं विभ्रमज्ञानमूलं वीक्षेत। ''जाग्रदादिकरो देवः परमात्मैक एव तु। इति वीक्षेत सततं मुच्यते संसृतेरतः'' इति वचनात्। अज्ञाननिमित्तहेतुमाह[१] **मनस इति**। मनसो विलासं मनोविकाररूपत्वात्। एतत् कुतोऽत्राह **दृष्टमिति**। गुरूपदिष्टशास्त्रदृष्ट्या यदा विभ्रमोऽयमिति दृष्टस्तदैव नष्टो भवति, एतस्मात्। इतोपि मनोविलास इत्याह **अतिलोलमिति**। श्रुत्यादिविचारे क्षिप्रनाशित्वात्। अत्र लुप्तोपमामाह **अलातचक्रमिति**। अलातचक्राकारभ्रमवत् परमात्मभेदभ्रमं विद्यादित्यर्थः। एवं सुरनराद्याहिततत्तन्नियन्तृभेदोऽपि भ्रान्त इत्याशयेनाह **विज्ञानमिति**। विज्ञानमानन्दं ब्रह्मेति श्रुतेः। एकं स्वगतभेदशून्यं ब्रह्म नानारूपमिव भाति, अज्ञानामिति शेषः। यथा स्वप्न एकैव गजादिमाया बहुधा प्रतीयते तथेति। मिथ्याज्ञानकारणमाह **त्रिगुणेति**। सत्वादिभिस्त्रिभिर्गुणैस्तत्सर्गैः तत्कार्यैः पापादिभिश्च कृतः पर्याप्तो विकल्पो मिथ्याज्ञानं, कारणमिति शेषः। तमआदिगुणनिमित्तपापादिदूषितान्तःकरणानामज्ञानामासुरप्रकृतीनां सच्चिदानन्दरूपमेकं बह्विव प्रतीयत इति भावः। ''देहभेदेष्ववस्थासु प्रादुर्भाविषु चैकलम्। ज्ञानानन्दैकसद्रूपं भ्रान्त्या भिन्नं प्रपश्यति। सा च भ्रान्तिर्विनश्येत यदा भ्रान्तित्ववेदनम्। अतिक्षिप्रं निवर्तेत न स्थिरं दिग्भ्रमादि-वत्। त्रिगुणैर्बन्धिता जीवा ज्ञप्तिमात्रं जनार्दनम्। पश्यन्ति बहुधा स्वप्ने यथैकं बहुधा क्वचित्। अभिन्नोपि विभिन्नेषु व्यवहारो यथा भवेत्। तथैव व्यवहाराय शक्तत्वान्नैव दूषणम्। ईशस्य तु यदन्येषामपि यच्छक्तिदायकः'' इत्यनेन मानेन ''अशक्योऽप्यतिशक्योऽयं विनिवारयितुं भ्रमः। ईशस्थो गुरुसम्पत्त्या यदि शुद्धमनाः पुमान्'' इत्यनेन च मानेन निर्णीतत्वादिदमेव तात्पर्येण ज्ञातव्यम्। अन्यद् दुःशास्त्रमिति सिद्धम् ॥ ३४ ॥

---

१. अस्पष्टेयमवतारिका।

**दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततर्षस्तूष्णीं**
**भवेन्निजसुखानुभवो निरीहः ।**
**सन्दृश्यते क्व च यदीदमवस्तुबुद्ध्या**
**त्यक्तं भ्रमाय न भवेत् स्मृतिरानिपातात् ॥ ३५ ॥**

**देहं च नश्वरमवस्थितमुत्थितं च**
**सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम् ।**
**दैवादुपेतमथ दैववशादपेतं**
**वासो यथा परिवृतं मदिरामदान्धः ॥ ३६ ॥**

---

एवंविधं मिथ्याज्ञानं मोक्षार्थिना हेयमिति भावेनाह **दृष्टिमिति** । यतः पापफलं मिथ्याज्ञानं ततो निवृत्ततर्षः विषयाभिलाषरहितः दृष्टिं मिथ्याज्ञानं प्रतिनिवर्त्य परमात्मभेदादिदर्शनरहितो भूत्वा तूष्णीं भवेत् निरन्तरध्यानमन्तरेण प्रवृत्त्यन्तरविधुरः स्यात् । किमनेन पाषाणवदवस्थानेनेति तत्राह **निजेति** । अनेन स्वरूपसुखस्यानुभवो यस्य स तथा । ननु नित्यनैमित्तिकादिक्रियादर्शनात् प्रवृत्त्यन्तरशून्यः कथमत्राह **निरीह इति** । निषिद्धचेष्टाविधुरो भवति न तु क्रियामात्रशून्यः । ननु संसारे वर्तमानो मूढजनस्थितं भ्रमं दृष्ट्वा स्वयं मुह्यतीति किं न स्यादित्यत्राह **सन्दृश्यत इति** । यदि क्वचिन्मूढजने स्थितमिदं परमात्मभेदज्ञानं ज्ञानिना सन्दृश्यते तथाप्यवस्तुबुद्ध्या अविद्यमानोऽयं भेद इति ज्ञानेन त्यक्तं मिथ्याज्ञानं पुनः भ्रमाय भ्रमजननाय न भवेत् । तत्र निमित्तमाह **स्मृतिरा निपातादिति** । न्यग्भावेन पातो यस्मिन् तन्निपातमन्धन्तमः । मोक्षमारभ्य तावत्पर्यन्तं स्मृतिर्यस्मात् । ज्ञानिनो निपातपर्यन्तं स्मृतिर्ज्ञानमस्तीति यत् तस्मादित्यर्थः । ज्ञानफलं मोक्षः कर्मफलं स्वर्ग एवं मिथ्याज्ञानफलमन्धन्तम इति स्मरति ज्ञानीति । नि न्यग्भावनिकामयोरिति यादवः ॥ ३५ ॥

ननु त्रिगुणसर्गकृतो विकल्प इत्यत्र त्रिगुणबद्धानां विकल्पा इत्युक्तम् । तत्र ज्ञानिनोऽपि देहवत्त्वेन त्रिगुणित्वाद् विकल्पः सम्भाव्यत इत्यत्राह **देहं चेति** । निरन्तरं भगवन्तं ध्यायन् जीवस्वरूपमारभ्य परमात्मपर्यन्तानि तत्वानि तत्तत्स्वरूपं यथावदध्यगमद् देहादिविलक्षणतया तारतम्येनापरोक्षीचकारेति यत् तस्माद् देहाभिमानरहितो ध्यानारूढोऽवस्थितमुत्थितं वा देहं नानुपश्यति[१] । कीदृशं देहम् । दैवादुपेतं प्राप्तं दैववशाद् भगवत्प्रेरितकर्मवशाद् अपेतं वियुक्तं च । मदिरामदान्धः

---

१. न पश्यतीति भवितव्यमिति भाति ।

देहोपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रति समीक्षत एव सासुः।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः॥ ३७॥

मयैतदुक्तं वो विप्रा गुह्यं यत् सांख्ययोगयोः।
जानीत माऽऽगतं यज्ञं युष्मद्धर्मविवक्षया॥ ३८॥

अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः।
परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च॥ ३९॥

---

मद्यपानजनितमदविस्मृतात्मज्ञानः पुरुषः परिवृतमाच्छादितं वासो यथा दृढीकरणादियत्नं न करोतीति।[१] अतस्त्रिगुणकृतदेहाभिमानाभावात् तत्कृतविकल्पो नास्तीति भावः॥ ३६॥

दैवादुपेतमित्येतत् स्पष्टयति **देहोपीति**। ननु स्वयं देहपोषणादिप्रयत्नोदासीनश्चेत् कथं तिष्ठत इत्यतो वाह **देह इति**। दैववशगः स्वादृष्टप्रेरकश्रीहर्यधीनो देहोपि तावत् प्रतिसमीक्षते प्रतीक्ष्यावतिष्ठते। कार्यस्य जडस्य कारणावस्थानमन्तरेणावस्थानं कथमत्राह **सासुरिति**। प्राणवृत्तिसहितत्वात्। कियन्तं कालमत्राह **कर्मेति**। यावत् स्वारम्भकं स्वोत्पादकादृष्टलक्षणं कर्मास्ति। तत्समाप्तौ पतत्येव। एवार्थे खलुशब्दः। तथाप्यभिमानो भवत्येवेत्यत्राह **तमिति**। अधिरूढसमाधियोगः असम्प्रज्ञात-समाधिस्थः सप्रपञ्चं तं देहं पुनर्न भजेत् पूर्वं यथा तथाऽऽदृतं न करोतीत्यन्वयः। ''आदरो भजनं भक्तिर्बहुमानं च सेवनम्। पर्यायवाचकाः सर्वे स्मृतिस्तज्जन्यकर्म च'' इति वचनात्। कथमिव। प्रबुद्धवत् यथा स्वप्नादुत्थितः स्वाप्नं स्वप्नदृष्टं देहं न भजेत् तथेति॥ ३७॥

इतिहासं निगमयति **मयैतदिति**॥ ३८॥

कर्मयोगस्य सांख्यस्य यथार्थज्ञानस्य, सत्यस्य यथार्थभाषणस्य, ऋतस्य भूतहितोपदेशिवेदस्य, तेजसो बलस्य, ब्रह्मवर्चसस्य वा, श्रियः सम्पदः॥ ३९॥

---

१. अनन्वितमिदं वाक्यम्। ''यथा मदिरापानमदेनान्धः उन्मत्तः नरिकृतमाच्छादितं वासो दैवादपेतं दैववशादुपेतं वा न पश्यति तथा सिद्धोऽपरोक्षज्ञानी नश्वरमिमं देहं दैवाद् भगवत्प्रेरितकर्मवशादवस्थितं दैवादुज्झितं वा न पश्यति'' इति श्रीनिवासतीर्थाः।

मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ।
सुहृदं परमात्मानं साम्यासङ्गादयो गुणाः ॥ ४० ॥

इति ते च्छिन्नसन्देहा मुनयः सनकादयः ।
सभाजयित्वा परया भक्त्या गृणत संस्तवैः ॥ ४१ ॥

तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः ।
प्रतीताय स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥

॥ इति त्रयोदशोऽध्यायः ॥

---

सर्वे गुणाः असम्पूर्णगुणरूपा अप्रधाना ब्रह्मादिदेवा एवंविधं मां भजन्ति । किञ्च गुणाश्च मां भजन्ति । कीदृशम् । निर्गुणं प्रकृतिगुणवर्जितम् आत्मानं सम्पूर्णगुणरूपकम् अत एव निरपेक्षकम् । अपूर्णगुणस्य हि गुणापेक्षा, न च साऽस्तीति । अत एव सुहृदमनिमित्तबन्धुम् । अत एवाहमेव सेव्य इत्युक्तम् । प्रियं तदेतत् प्रेय इति श्रुतेः[१] । ''अपूर्णगुणरूपास्तु सम्पूर्णगुणरूपकम् । भजन्ति परमं ब्रह्म देवास्त्रिगुणवर्जितम्'' इति वचनात् । के गुणा इति तत्राह **साम्यासङ्गादय इति**। ज्ञानादिगुणानां तारतम्येपि सर्वसामान्यादनभिधानम्, साम्यादीनां तदभावाद् विशेषोक्तिरिति ज्ञातव्यम् ॥ ४० ॥

सनकादीनां भगवदुक्त्या च्छिन्नसन्देहत्वस्य किं लक्षणमित्यत्राह **इतीति** । इतीत्यनेन समाप्तिः ॥ ४१ ॥

पूजितः सम्यक् संस्तुत इत्येताभ्यां च च्छिन्नसंशयत्वं लक्षयति ॥ ४२ ॥

**॥ इति श्रीविजयध्वजतीर्थविरचितायां श्रीभागवतटीकायां पदरत्नावल्यां एकादशस्कन्धे त्रयोदशोऽध्यायः ॥**

---

१. अस्य वाक्यस्य सङ्गतिर्न स्पष्टा ।

## ॥ अथ चतुर्दशोऽध्यायः ॥

उद्धव उवाच -

वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्पः प्राधान्यमुताहो एकमुख्यता ॥ १ ॥

भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः ।
निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥

श्रीभगवानुवाच -

कालेन नष्टा प्रलये वाणीयं वेदसञ्ज्ञिता ।
मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥

तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ।
ततो भृग्वादयोऽगृह्णन् शब्दब्रह्म महर्षयः ॥ ४ ॥

---

भगवत्साक्षात्काराय सर्वस्मादुत्तमं साधनं भक्तिरेव, तद्वता चेत्थं ध्येयो हरिरिति द्वयमस्मिन्नध्याये विधत्ते । तत्रोद्धवप्रश्नपूर्वकं विद्याम्नायं कथयति **वदन्तीति** । श्रेयांसि प्रशस्तानि साधनानि । तेषां साधनानां यवाग्वा पयसा वेतिवदिदं भवतीदं वेति विकल्पो वा, सम्भूय सर्वेषां प्राधान्यम्, उतैकस्य मुख्यता अन्येषां च तदुपसर्जनत्वं चेति ॥ १ ॥

भवता अनपेक्षितः अन्यापेक्षारहितोऽखिलसाधनोत्तमो भक्तियोग उदाहृतः । तथापि ब्रह्मवादिमतानां का गतिरिति शेषः । येन भक्तियोगेन ॥ २ ॥

वेदमूलान्येव श्रेयांसि तत्र मत्प्रीतिसाधनं भक्तिलक्षणो धर्मः श्रेयसामुत्तम इति दर्शयितुं श्रद्धाजननाय वेदोक्तपरम्परामाह **कालेनेत्यादिना** । कालेन कालशक्त्या । मदात्मको मद्विषयः ॥ ३ ॥

मनवे स्वायम्भुवाय । कीदृशोऽयं तद्धितप्रत्यय इत्येतत् स्पष्टयति[१] **पुत्रायेति** । स्वयम्भुवः पुत्रत्वात् स्वायम्भुव इत्यर्थः । अत्र मनोः पूर्वजत्वं रुद्रेन्द्रकुमारान् विनेति ग्राह्यम् । ''रुद्रमिन्द्रं कुमारं च विनैवान्याग्रजो मनुः । ब्रह्मपुत्रेष्वादिसृष्टावन्यथात्वं पुनर्जनैः'' इति वचनात् । ''आदिसृष्टौ पूर्वजा ये तेऽधिका सर्वतो गुणैः । अनाद्यनन्तकालेषु मुक्तावपि यथाक्रमम्'' इति च ॥ ४ ॥

---

१. स्वायम्भुवशब्दस्य निष्पत्तिनिरूपणसङ्गतिर्न स्पष्टा ।

तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ।
मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ ५ ॥

किन्देवाः किन्नराः नागा रक्षःकिम्पुरुषादयः ।
बह्वयस्तेषां प्रकृतयो रजःसत्वतमोभुवः ॥ ६ ॥

याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ।
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ ७ ॥

एवं प्रकृतिवैचित्र्याद् भिद्यन्ते मतयो नृणाम् ।
पारम्पर्येण केषाञ्चित् पाखण्डमतयोऽपरे ॥ ८ ॥

मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥ ९ ॥

धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ।
अन्ये वदन्ति चार्थं वै[१] ऐश्वर्यं त्यागभोजने ।
केचिद् यज्ञं तपो दानं व्रतानि नियमात् ॥ १० ॥

---

रजःसत्वतमोभुव इति पाठः ॥ ५-६ ॥ याभिः प्रकृतिभिः । भूतानां मतिभेदेपि वेदस्यैकत्वेन तदर्थोऽप्येकविषय एवेति तत्राह **यथाप्रकृतीति** । वेदवाचः चित्राः स्रवन्ति धर्माद्यशेषार्थ-प्रतिपादकाः । वाचः स्वमनीषितार्थे प्रमाणवद् भान्तीत्यर्थः ॥ ७ ॥

ततः किम् तत्राह **एवमिति** । यथा प्रकृतिवैचित्र्याद् वेदवागर्थप्रतीतिवैचित्र्यं एवं मतयोऽपि विचित्राः । ननु श्रुतिमूलत्वेन गुरुपरम्परागतत्वेन सर्वेषामपि मतानां प्रामाण्यमवगतं स्यादत्राह **पारम्पर्येणेति** । अनेन मदुक्तपारम्पर्येणागतानि केषाञ्चिद् देवादीनामेव, तानि प्रामाणान्यन्यानि राजसादीनीत्यर्थः । विरलत्वापेक्षया केषाञ्चिदित्युक्तम् । वामशैवादीनि तामसत्वेन पाखण्डानीत्याह **पाखण्डेति** ॥ ८ ॥

अत्र नानामतत्वे मुख्यकारणं किमिति तत्राह **मन्मायेति** । अनेकान्तं नानाविधम् । यथारुचि यथेच्छम् ॥ ९ ॥

एतदेव विशदयति **धर्ममिति** । त्यागोऽभिमानत्यागः । भोजनं वाय्वादेः ॥ १० ॥

---

१. वै ऐश्वर्यमिति विसन्धिगर्भ एव पाठः सर्वकोशेषु । तेन चैश्वर्यस्य निकृष्टत्वं सूचितं स्यात् ।

**आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः।**
**दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः॥ ११॥**

**मय्यर्पितात्मनः सत्ये निरपेक्षस्य सर्वतः।**
**मदात्मकं सुखं यत् तत् कुतः स्याद् विषयात्मनाम्॥ १२॥**

**अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः।**
**मया सन्तुष्टमनसः सर्वाः सुखमया दिशः॥ १३॥**

**न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्।**
**न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद् विनाऽन्यत्॥ १४॥**

---

एतत्साधनसाध्यान् लोकानाह **आद्यन्तवन्त** इति। एषां कर्मनिर्मिता लोकाः। तेषेमाद्यन्तवत्त्वेपि यावल्लोकं सुखमस्ति किम्। नेत्याह **दुःखोदर्का इति**। तमोनिष्ठा अन्धकारप्रचुराः। ''मद्भक्तिवर्जितं श्रेयो ये मन्यन्ते दुराशयाः। तेषामन्ते तमो घोरमनन्तं प्राप्यते ध्रुवम्'' इति वचनादसन्मतनिष्ठानां तम एव। बृहस्पत्युक्तत्वेपि हरिभक्तिराहित्यात्। अल्पानन्दत्वे शुचार्पितत्वं हेतुः॥ ११॥

भगवद्धर्मसाध्यलोकसुखवत् तल्लोकसुखमपि निर्दुष्टं किं न स्यादविशेषादत्राह **मयीति**। अहमात्मा प्रापको यस्य तन्मदात्मकम्। मय्यर्पित आत्मा मनो यस्य। सत्ये साधुगुणपूर्णे। ममात्मा स्वभावो यस्य स तथेति वा। यथाहं निर्दोषस्वभावः तथेद(सुख)मपीत्यनयोक्त्या विशेषो दर्शितः। इतरानुमानस्य तर्काभावेन दौर्बल्यान्नोत्थातुमलमित्यर्थः॥ १२॥

एवंविधस्य मदर्पितात्मनो न केवलममुत्र सुखित्वं किन्त्विहापि सुखित्वं स्यादित्याह **अकिञ्चनस्येति**। अकिञ्चनस्येत्यत्रैकैकोपि सुखहेतुः किमुत समुदिता इति भावेनोक्तं सर्वाः सुखमया इति॥ १३॥

त्वय्यर्पितात्मनोपि पारमेष्ठ्याद्याकांक्षायां तत्पदानां दुःखमिश्रितसुखरूपत्वात् सर्वत्र सुखित्वं कथमित्याशंक्याह **न पारमेष्ठ्यमिति**। मय्यर्पितात्मा मामेव सुखमिच्छति मदन्यत् किमपि नेच्छतीत्यतस्तस्मात् तस्य निराकांक्षत्वेन सर्वत्र सुखमेवेति भावः॥ १४॥

**न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ।**
**न च सङ्कर्षणो न श्रीर्नैवाऽऽत्मा च यथा भवान् ॥ १५ ॥**

**निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।**
**अनुव्रजाम्यहं नित्यं पूयेय स्वाङ्घ्रिरेणुभिः ॥ १६ ॥**

---

अत्र भक्तेषु प्रीतिविशेषोऽस्तीति दर्शयितुं भक्तेः कर्तव्यत्वं च निदर्शयन्निव उद्धवमतिस्तौति न **तथेति** । अनेन मनुष्यादिभक्तेषु भिक्षान्नप्रदानवत् कृपानिमित्तप्रीतिर्लक्ष्म्यादिषु प्रियापुत्रादिप्रीतिवत् सार्वकालिकी आन्तरप्रीतिरस्तीति सूचितम् । ''कृपानिमित्ता या प्रीतिर्नीचभक्तेषु साऽधिका । आन्तरैव तु या प्रीतिः सा तूच्चेषु यथाक्रमम् । यथा कश्चित् स्वमात्मानं प्रियां पुत्रमथापि वा । अतिहाय कृपायुक्तो भिक्षवेऽन्नं ददात्यपि । कदाचिदेव न पुनः स्वात्मादेः सार्वकालिकम् । योगक्षेमवहत्वं च नित्यं स्वात्मादिषु स्फुटम् । एवमेव परेशस्य भक्तेषु श्रियजादिषु'' इति वचनात् । ''यादवेभ्यस्तु सर्वेभ्य उद्धवो भगवत्प्रियः । उद्धवाच्च प्रियतमः प्रद्युम्नस्तु महारथः । तस्मादपि प्रियतमो रामः कृष्णस्य सर्वदा । नैव तस्मात् प्रियतमो विनैवैकं चतुर्मुखम् । सर्वेभ्योऽपि प्रियतमा हरेः श्रीरेव वल्लभा । नैव तस्याः प्रियतमो विना स्वात्मानमेव तु'' इत्यतोऽपि सर्वयादवेभ्यो विशिष्टभक्त उद्धव इति प्रकटनाय विशिष्य स्तुत उद्धव इति भावः ॥ १५ ॥

ननु प्रतीतार्थं परित्यज्यान्यार्थविशेषकल्पने को हेतुरित्याशंक्यातिदेशो हेतुरिति भावेनाह **निरपेक्षमिति** । स्वाङ्घ्रिरेणुभिस्तं पूयेय शोधयामीत्यनुव्रजामि । अनुगच्छतो मम पादधूलयो वायुना पुरतो गच्छति भक्ते निपतन्त्योऽतितरां शोधयन्तीदं सजलभूमिपादविक्रमे सिद्धं भवतीति[१] । ततः पूयेय शुद्धो भवानीत्ययमर्थो न युक्तः । यत्सेवया (स्वभक्तः) माहात्म्यमाप स हरिस्तदनुगमनेन तत्पादरेणुसम्पर्केण शुद्धो भवतीति न युज्यते । सदोषस्य शुद्धिप्रार्थनं दृष्टं निर्दोषस्य न घटत इत्युक्त एवार्थः । ''अनुगच्छति विष्णुस्तु स्वभक्तं तस्य शुद्धये । तस्याङ्घ्रिरेणुभिर्वातनीतैरग्रेसरः शुचिः । अग्रतो गमने विष्णोः पादस्पृष्टं रजो भवेत् । अतः स्वभक्तं पूयेयेत्यनुगच्छति केशवः'' इति वचनात् । अनेन निष्कामत्वादिगुणसम्पन्नत्वेन सेवमानेषु भक्तेषु त्वय्यतिशयिता[२] प्रीतिरस्तीत्युक्तं भवति ॥ १६ ॥

---

१. अस्पष्टमिदं वाक्यम् ।

२. अस्पष्टमिदमपि । ममातिशयिततेति पाठः स्यात् ।

**निष्किञ्चना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः ।**
**कामैरनालब्धधियोऽजुषश्च[१] ते नैरपेक्ष्यं हि विदुः सुखं मम ॥ १७ ॥**

**बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।**
**प्रशस्तयाऽपि मद्भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥**

**यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् ।**
**तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १९ ॥**

**न साधयति मां योगो न सांख्यं धर्म उद्धव ।**
**न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ २० ॥**

---

एवं भजतां निर्दुःखानन्दो भविष्यतीत्यत्र किं मानमित्याशंक्य ब्रह्मादिज्ञानिप्रत्यक्षं प्रमाणमिति निदर्शयति **निष्किञ्चना इति** । ये निष्किञ्चनाः निष्किञ्चनत्वादिगुणपूर्णाः कामैर्विषयैरनालब्धधियः अप्रतिहतबुद्धयः अजुषश्च विषयानसेवमानाश्च ते मम सकाशात् नैरपेक्ष्यं स्वरूपसुखं स्यादिति विदुर्हीत्यन्वयः । ननु बिम्बभूतस्य विष्णोः स्वरूपसुखसद्भावे मानमस्ति चेत् प्रतिबिम्बजीवस्वरूपसुखाविर्भावे भक्त्यादिसाधनसामग्रीसम्पादनयत्नो नितरां सफलः स्यात्, तत्र किं मानमित्यत्रापीदमुत्तरं भवतीत्याह **निष्किञ्चना इति** । मम नैरपेक्ष्यं सुखमस्तीति विदुरित्यन्वयः । हिशब्द उभयत्रापि प्रमाणमस्तीति सूचयति । ज्ञानिप्रत्यक्षलक्षणप्रमाणसद्भावाद् भक्त्यादिसाधनमवश्यं सम्पादनीयमिति भावः ॥ १७ ॥

ननु त्वद्भक्तस्यापि विषयग्राहग्रस्ततया भक्तिलोपेनाधःपातः सम्भाव्यत इति भक्तिविधानं व्यर्थमिति तत्राह **बाध्यमान इति** । विषयैर्बाध्यमानत्वेनाजितोन्द्रियोऽपि प्रशस्तया मद्भक्त्या विषयैर्नाभिभूयते । विषयनिषेवया प्राप्तदोषेणाधः न पततीत्यर्थः ॥ १८ ॥

कथमिवेति तत्राह **यथेति** । एनांसि पापानि ॥ १९ ॥ भक्त्यनुपहितबुद्धिनाऽनुष्ठितधर्मादयो मदपरोक्षं न जनयन्तीत्याह **नेति** ॥ २० ॥

---

१. धियोऽजुषो ये इति पाठान्तरम् ।

**भक्त्याऽहमेकया ग्राह्यः शुद्धयाऽऽत्मा प्रियः सताम् ।**
**भक्तिः पुनाति मन्निष्ठा सकाममपि सम्भवात् ॥ २१ ॥**

**धर्मः सत्यदयोपेतो विद्या वा तपसाऽन्विता ।**
**मद्भक्त्यपेतमात्मानं न सम्यक् प्रपुनाति हि ॥ २२ ॥**

**कथं विना रोमहर्षं द्रवता चेतसा विना ।**
**विनाऽऽनन्दाश्रुकलया शुद्ध्येद् भक्त्या विनाऽऽशयः ॥ २३ ॥**

**वाग् गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ।**
**विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥**

**यथाऽग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम् ।**
**आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ २५ ॥**

---

भक्तिप्रधानधर्मादीनां तत्साधनवद् भक्तेरपि तत्सहिताया एव साधनत्वमत्राह **भक्त्येति** । भक्तेः प्राधान्ये गुणादर्शनात् कथं तदुन्नतिरुच्यत इति तत्राह **भक्तिरिति** । सम्भवात् जननादिरूपसंसारात् । यद्वा स्वोत्पत्त्यनन्तरमेव पुनाति न तु कालक्षेपेण ॥ २१ ॥

भक्तिनायकहीनानां धर्मादीनामप्रयोजकत्वमर्थादुक्तम् । अधुना तत् प्रकाशयति **धर्म इति** । हिशब्दो नायमात्मा प्रवचनेन लभ्य इति श्रुतिं सूचयति ॥ २२ ॥

यद्यपि महान्तो वैष्णवसिद्धान्ताचलनेनास्य भक्तिरस्तीति जानते तथापि बाह्यानां सुबोधाय भक्तेः प्रत्यक्षलक्षणान्याह **कथमिति** ॥ २३ ॥

समीचीनभक्तियुक्तः पुरुषोऽपि सर्वं पुनाति किं पुनर्भक्तिरित्याशयेनाह **वाग् गद्गदेति** । अत्र ''चित्तद्रवस्तथा धैर्यं प्रसादो भक्तिलक्षणः । आधिक्येन तु तत्रापि धैर्यमेव विशेषतः । दम्भस्य चलभक्तेश्च यस्मादश्रादिकं भवेत् । दम्भादिपरिहारार्थं निगृण्हीयाच्च धीरधीः । अत आध्यात्मिकैः क्लेशैराधिभूताधिदैवतैः । वाक्यैश्च वेदतन्त्राद्यैरुपदेशैश्च तादृशैः । बलवच्छासनैर्वापि यस्य भक्तिर्न चाल्यते । स एव परमो भक्तो विष्णोर्हृदयवल्लभः'' इति विशेषाच्च ग्राह्याः ॥ २४ ॥

भक्तिः पुनातीत्युक्तम् । तत्र शुद्धिप्रकारं सदृष्टान्तमाह **यथेति** । अग्निना मुखवायुसंयोगेनोज्ज्वलितेन

**यथायथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ।**
**तथातथा पश्यति सूक्ष्मतत्वं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ।। २६ ।।**

**विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।**
**मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ।। २७ ।।**

**तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ।**
**हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ।। २८ ।।**

**स्त्रीसङ्गसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।**
**क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ।। २९ ।।**

---

ध्मातं दाहविशेषं प्राप्तं हेम । मलं अष्टादशदोषलक्षणम् । स्वरूपं निर्दोषभास्वरलक्षणम् । आत्मा सत्स्वभावो जीवोऽनाद्यविद्याकामकर्मकलिलं कर्माशयमन्तःकरणं भक्तियोगेन विधूय निर्मलीकृत्य अथो मङ्गलमूर्तिं मां भजत इत्यन्वयः ।। २५ ।।

द्वित्रादिगुणितं ध्मातहेमवद् भक्तियोगोद्रेकक्रमेण शुद्धमात्मा मनो भगवत्सूक्ष्मतत्वं पश्यतीत्याह **यथेति** । परिमृज्यते शोध्यते । तत्वं सूक्ष्मतत्वम् । अत्र दृष्टान्तान्तरमाह **चक्षुरिति** ।। २६ ।।

कर्मसचिवराहित्येन भक्तिपूर्वकाध्ययनमात्रेण चित्तं कथं त्वयि निरन्तरं विलग्नं भवतीत्यत्राह **विषयानिति** । आत्मानुभव एवात्र मानं न मानान्तरमन्वेषणीयमिति भावेन विषयनिदर्शनमुक्तम् । चित्तं स्वरूपचैतन्यमित्यर्थः ।। २७ ।।

मथितमाह **तस्मादिति** । यथा स्वप्नमनोरथं स्वप्नवन्मनोरथवच्च । असदभिध्यानमशुभविषयध्यानं हित्वा । नन्वेवं त्वदासक्तिवत् चित्तस्य विषयासक्तिरपि ग्राह्या किमित्यतो वा मन्दाशङ्कां परिहरन्नुपसंहरति **तस्मादिति** । अज्ञानामपि बुद्ध्यवतारार्थं विषयासक्तिनिदर्शनमुक्तम्, न तु ग्राह्यार्थत्वेनेति यत् तस्मात् । भावो भक्तिः । मयि भक्त्या भावितं तन्मयीकृतम् ।। २८ ।।

स्वरूपबाह्यान्तःकरणभोग्यत्वभेदेन द्विविधा विषयाः । तत्र पूर्वे मुक्तावपेक्षणीयाः, सांसारिका अनर्थजनकत्वान्मुमुक्षुणाऽवश्यं हेयाः । तथा हि । तत्सेवातिरेकेणेश्वरोऽहमित्यादिलक्षणा केशवेऽन्यथाबुद्धिर्जायते । जन्मप्रभृति पुरुषेण सह वर्तमानत्वात्, सुखक्षयहेतुत्वेन (च)

**न तथाऽस्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः ।**
**योषित्सङ्गाद् यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३० ॥**

स्त्र्यादिशब्दवाच्या, रीङ् क्षय इति धातोः । तस्याः सङ्गो येषां ते स्त्रीसङ्गाः, तत्सङ्गानां सङ्गो येषामिति स्त्रीसङ्गसङ्गिनः । तेषां सङ्गं दूरतः परिहृत्य मत्सेवैव कर्तव्या ईश्वरो मत्स्वामी तत्किङ्करोऽह-मित्यादिलक्षणेति भावेन विषयास्त्यक्तव्या इत्याशयेनाह **स्त्रीसङ्गेति** । अनेन स्त्रीरागिणां सङ्गोऽपि परिहर्तव्य इत्युक्तं भवति । "केशवे त्वन्यथाबुद्धिः सैव स्त्री सम्प्रकीर्तिता[1]" इत्यादिवाक्यमत्र प्रमाणम् । क्षेमे मङ्गलस्थले ॥ २९ ॥

नन्वन्येषु हत्यादिष्वधःपातहेतुषु सत्सु किं विशिष्य स्त्रीसङ्गसङ्गो दूरतस्त्याज्य इत्यत आह **न तथेति** । यथाऽस्य पुंसः योषित्सङ्गात् विषयिभिर्जुष्टत्वाद् योषिच्छब्दवाच्याया ईश्वरोऽहमित्याद्यनेक-विधान्यथाबुद्धेरधिकरणलक्षणसङ्गाद् यथा तत्सङ्गिसङ्गतः मिथ्याज्ञानिसेवालक्षणसङ्गात् क्लेशो बन्धश्चान्धन्तमोलक्षणश्च भवेत् तथा अन्यप्रसङ्गतः पिपीलिकादिवधलक्षणान्न भवेदित्यन्वयः । अत्र पातकविशेषास्तत्फलानि च "परदारदृशिः प्रोक्ता क्षुद्रपातकसञ्ज्ञिता । उपपातकं तद्गतिश्च वर्णबाह्येषु पातकम् । महापातकसंञ्ज्ञं तु पित्रादेर्दारधर्षणम् । दारदृष्टिः स्वोत्तमानां मानुषाणां स्वभावतः । सुमहापातकं प्रोक्तं तद्गतिः सुमहत् ततः । ऋषिदारेषु मनसो गतिरेव ततोऽधिका । देवदाराभिकामानां सङ्गिसङ्गस्ततोऽधिकः । किमु विष्णोस्ततो योषित्सङ्गस्य व्यत्ययस्थितेः । न समं पातकं क्वापि नहि स्वस्त्र्यभिकामतः । अवज्ञाता माधवादेस्तस्मात् तं दूरतस्त्यजेत् । मानुषेषु तु दुःखित्वं क्षुद्रपापफलं

१. "त्रिकालदुःखदत्वेन पुंसां सह निवासनात् । जुष्टत्वाद् योषिदित्युक्ता वननाद् वनितेति च । प्रमादकारणत्वात्तु प्रमेदेति च गीयते । त्यजेत् तत्सङ्गिनां सङ्गं बुभूषुः पुरुषः सदा । न तादृशः क्वचिद् दोषः पुरुषस्यासुखावहः । क्षुद्रपापानि पापानि चोपपातकपातके । महापातकनामानि सुमहापातकान्यपि । तथा स्वतिमहान्तानि पातकानि विदो विदुः । पिपीलिकावधादीनि क्षुद्रपापोदितानि च । पापमस्थिमतां हत्या फलचौर्यादिरेव वा । परदारादिकं चापि ह्युपपातकसंज्ञितम् । पातकं शूद्रहत्यादि ब्रह्महत्यादिकं महत् । देवस्वहरणादीनि सुमहान्ति विदो विदुः । देवावज्ञा सतां चैव ततोपि सुमहत्तरा । महन्महत्तरा तस्या अवज्ञा केशवे तु या । केशवस्य समोऽस्तीति केशवोऽस्म्यहमित्यपि । ब्रह्माद्याः केशवात्मानः श्रीर्वा निर्गुण इत्यपि । मुक्तस्य तद्भावमतिररूपत्वमतिस्तथा । त्रिगुणात्मकदेहोऽस्याप्यस्तीत्यपि तु या मतिः । जन्ममृत्यादिबुद्धिर्वा दुःखाज्ञानादिबोधनम् । तस्यापि परतन्त्रत्व-विज्ञानं च तदुत्तमः । अस्तीति या मतिस्तस्य वशादन्यस्य कस्यचित् । अस्तीतिभावनेत्याद्या अवज्ञाः सम्प्रकीर्तिताः" इति प्रमाणवचनशेषः ।

उद्धव उवाच -

**यथा त्वामरविन्दाक्ष यादृशं वा यदात्मकम् ।**
**ध्यायेन्मुमुक्षुरेतन्मे ध्यानं त्वं वक्तुमर्हसि ॥ ३१ ॥**

श्रीभगवानुवाच -

**सम आसन आसीनः समकायो यथासुखम् ।**
**हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥**

**प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ।**
**विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥ ३३ ॥**

**हृद्यविच्छिन्नमोङ्कारं घण्टानादं बिसोर्णवत् ।**
**प्राणेनोदीर्य तत्राथ पुनः संवेशयेत् स्वरम् ॥ ३४ ॥**

---

स्मृतम् । पापात्तु वर्णबाह्यत्वं तिर्यग्योनिगतिस्तथा । सहस्रवर्षनरकं क्षुद्रपातकजं फलम् । उपपातकतश्चापि नरकं युगमात्रकम् । चतुर्युगावसानं तु पातकस्य फलं स्मृतम् । महापातकजन्यं च कल्पावधि समीरितम् । सुमहापातकाच्चापि यावद् ब्रह्मलयो भवेत् । तत्पराणां पातकानां फलमन्धन्तमः स्मृतम् । अधोऽधो दुःखबहुलं विष्णुदाराभिमर्शनात् । वधादपि हि दाराणां धर्षणं कोपकारणम् । तस्माद् देव्यः सदा वन्द्या अग्निवन्नाभिकामतः'' इति धर्मतत्ववचनाद् विशेषः पातकानां फलानां च द्रष्टव्यः ॥ ३० ॥

ध्यायेन्मामतन्द्रित इत्यत्रोक्तं ध्यानप्रकारं पृच्छति **यथेति** । यादृशं कीदृशम् । यदात्मकं किमात्मकम् ॥ ३१ ॥

समाहितेन मनसा ध्यानं कर्तव्यम् । एतदुपायं प्रथमतो वक्ति **सम आसन इत्यादिना** ॥ ३२ ॥ विपर्येण रेचकादिक्रमेण ॥ ३३ ॥

अत्र प्राणशब्दो द्विरावर्तनीयः । हृदि निरन्तरं प्राणेनोच्चार्यमाणमोङ्कारं घण्टानादवत् कर्णरमणीयं बिसोर्णवत् पद्मनालतन्तुवदविच्छिन्नं वायुद्वारा प्रेर्यमाणं प्राणशक्त्योदीर्य उच्चार्य अत्र तत्र हृदि स्थिते प्राणे स्वरमुदात्तलक्षणं पुनर्व्यावृत्तं यथा तथा संवेशयेत् समीचीनं कुर्यादित्यन्वयः । ऊर्णा भ्रूमध्यमावर्ते तन्तौ मेषादिलोमस्विति यादवः । पुनरप्रथमे प्रश्ने व्यावृत्तावधारण इति च ॥ ३४ ॥

एवं प्रणवसंयुक्तं प्राणसंयममभ्यसेत् ।
दशकृत्वस्त्रिषवणं मासादर्वाग् जितानलः ॥ ३५ ॥

हृत्पुण्डरीकमन्तःस्थमूर्ध्वनालमधोमुखम् ।
ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥ ३६ ॥

कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम् ।
वह्निमध्ये स्मरेद् रूपं ममैतद् ध्यानमङ्गलम् ॥ ३७ ॥

समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम् ।
सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम् ॥ ३८ ॥

समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् ।
हेमाम्बरं घनश्यामं श्रीवत्सं श्रीनिकेतनम् ॥ ३९ ॥

शङ्खचक्रगदापद्मवनमालाविभूषितम् ।
नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥ ४० ॥

द्युमत्कीरीटकटक कटिसूत्राङ्गदैर्युतम् ।
सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ।
सुकुमारमभिध्यायेत् सर्वाङ्गेषु मनो दधत् ॥ ४१ ॥

---

प्रणवेन संयुक्तं प्राणसंयमं प्राणायामम् । मासादर्वाक् मासात् पूर्वमेव । अनिलो जितः प्राणप्रसादं प्राप्त इत्यर्थः । ''उपास्य प्राणतोऽनुज्ञां हृदिस्थात् प्राप्य सेवकः । अनुज्ञानन्तरं मासाद् वशे प्राणो भविष्यति । प्रसादभाक्त्वं सम्प्रोक्तं प्राणविष्ण्वोर्जयस्त्विति । न हि सर्वविजेतारौ विजेयौ केनचित् क्वचित् । अपेक्षितं फलं येन दीयते तज्जितं त्विति । यथा जिता वसुमती यथा मोक्षपदं जितम्'' इति प्रभञ्जनप्रमाणवचनादुक्त एवार्थः ॥ ३५ ॥

कथं स्थितं त्वामिति प्रश्नं परिहरति **हृत्पुण्डरीके**ति ॥ ३६ ॥ यादृशमिति प्रश्नं परिहरति **वह्निमध्य इति** ॥ ३७ ॥ यदात्मकमित्यस्य परिहारः प्रशान्तमित्यनेन सूचितः । निर्दोषप्रकृष्टानन्दस्वभावमित्यर्थः ॥ ३८ ॥

**इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनाः ।**
**बुद्ध्या सारथिना धीरः प्रणमेन्मयि सर्वतः ॥ ४२ ॥**

**तत् सर्वं व्यापकं चित्तमाकृष्यैकत्र धारयेत् ।**
**नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥**

**तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ।**
**तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥ ४४ ॥**

**एवं समाहितमतिर्मामेवात्मानमात्मनि ।**
**विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥**

---

विषयपाशाकृष्टत्वेन विवशेन्द्रियैर्विषयध्यानं कथमुपपद्यत इत्यतस्तदुपायमाह **इन्द्रियाणीति** । तस्मिन् ध्येय एव स्थितमनाः ॥ ३९-४२ ॥

सर्वव्यापकं सर्वाङ्गविषयकचित्तमाकृष्यैकत्र एकस्मिन् मुखाद्यवयवे । सर्वावयवस्मरणाशक्तावेकस्मिन्नवयवे धारयेदित्यर्थः ॥ ४३ ॥

तत्र मुखादौ लब्धपदमाकृष्य व्योम्नि सर्वाङ्गेषु धारयेदित्यर्थः । ''व्योमेति व्याप्तशब्दः स्याद् विशेषादोतता यतः'' इति वचनात् । विशेषादोतत्वमवयवानामित्यर्थः । मय्येव मनस आरोहो यस्य स मदारोहः पुरुषः । तच्च धारणलक्षणं ध्यानं त्यक्त्वा स्वत एव मनसस्तत्रैव समाहितत्वादयत्नेन जलधौ गङ्गाप्रवाहगमनवच्चिन्तयेत् । नान्यत् किमपि चिन्तयेत् । तदुक्तम् ''यावत् समग्रस्मरणमचलं केशवे भवेत् । समग्रं चिन्तयेत् तावद् यदा तु विचलेत् ततः । प्रत्यङ्गधारणं कुर्यान्मनो यावत् समग्रगम् । प्रत्यङ्गाभ्यासतो यावत् समग्रे सुस्थिरं मनः । तदा पुनः समग्रं तु धारयेद् यत्नतो बुधः । यदा तु धारणोत्साहं विना तत्राचलं मनः । तिष्ठेत् त्यक्त्वा तमुद्योगं शङ्खचक्राम्बुजाङ्किते । आरूढचेताः परमे शृङ्गाराद्येकधामनि । नैवान्यच्चिन्तयेत् तस्मात् पूर्णानन्दाच्चतुर्भुजात् । यतोऽन्यस्मरणे तस्मान्मनश्चलति सुस्थिरम् । धारणार्थं प्रयत्नेन तस्मात् तदुभयं त्यजेत् । यावत् स्वारूढचेताः स्याद् विष्णो रूपे चतुर्भुजे'' इति ॥ ४४ ॥

उपासनाफलमाह **एवमिति** । एवं निरन्तराभ्यासरतः प्रतिदिनं प्रवृद्धप्रेम्णा मय्येव समाहितमतिस्तत्परिपाके सत्यात्मनि देहे आत्मानं ज्ञानाद्यभीष्टदातृत्वेन स्वामिनं मामेव विचष्टे जीवात् पृथक्

**ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ।**
**संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥**

**॥ इति चतुर्दशोऽध्यायः ॥**

**॥ अथ पञ्चदशोऽध्यायः ॥**

**श्रीभगवानुवाच -**

**जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः ।**
**मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥ १ ॥**

**उद्धव उवाच -**

**कया धारणया का स्वित् कथं वा सिद्धिरच्युत ।**
**कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥**

---

स्थितं पश्यति । वि निषेधे पृथग्भावे इति यादवः । सर्वात्मन् सर्वस्वामिनि ज्योतिषि ज्योतिर्मये मयि संयुतं मदाधारतया स्थितं तस्मात् जातं तस्मिन्नेवोतमिति ज्योतिर्जीवं पश्यति । तारतम्येन बिम्बभावेन स्थितास्तत्वाभिमानिनो देवता दृष्ट्वा सर्वाधारं मामन्ते पश्यतीति भावः । ''समाधियोगे सम्पूर्णे हृदि पश्यति केशवम् । जीवं तत्प्रतिबिम्बं च तेनैव सह संस्थितम् । तदाधारं तदन्तःस्थं तेनैव सदृशं सदा । आनन्दज्ञानशक्त्याद्यैः सदा तदवरं गुणैः । जीवन्मुक्तौ च मुक्तौ च सततं तद्वशे स्थितम्'' इत्येतदत्र मानम् । ''स्वयं प्रकाशरूपत्वाज्जीवोपि ज्योतिरुच्यते'' इति च ॥ ४५ ॥

दर्शनफलमाह **ध्यानेनेति** । सुतीव्रेण निशितेन इत्थमुत्पन्नध्यानेन निदिध्यासनेन दर्शनेन युञ्जतः सर्वस्मात् प्रेष्ठोऽयमिति ध्यायतो योगिनो ज्ञानिनो द्रव्यज्ञानक्रियाभ्रमः मदीयोऽयमिति देहविषये ज्ञानेन्द्रियकर्मेन्द्रियविषये च भ्रमतीति भ्रमरूपं प्राकृतं मनो निर्वाणं नाशामाशु संयास्यति यातीत्यन्वयः ॥ ४६ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य चतुर्दशोऽध्यायः ॥**

परं ज्ञानफलममृतमेव न किन्त्वणिमादिसिद्धिरप्यैहीकीत्येतदस्मिन्नध्याये निरूपयति । तत्रादौ नापृष्टः कस्यचिद् ब्रूयादित्यतः प्रश्नबीजमुत्थापयति **जितेन्द्रियस्येति** ॥ १ ॥

सिद्धय इति शुश्रुवानुद्धवः कीदृश्या धारणया का का सिद्धिः ताश्च कतिसंख्याताः सन्तीति पृच्छति **कयेति** ॥ २ ॥

**श्रीभगवानुवाच -**

**सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ।**
**तासामष्टौ मत्प्रधाना ता एव गुणहेतवः ॥ ३ ॥**

**अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ।**
**प्राकाश्यं श्रुतदृष्टेषु शक्तेः प्रेरणमीशिता ॥ ४ ॥**

**गुणेष्वसङ्गो वशिता यत्कामस्तदवाप्स्यति ।**
**एता मे सिद्धयः सौम्याष्टावौत्पत्तिका मताः ॥ ५ ॥**

**अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् ।**
**मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥**

**स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ।**
**यथासङ्कल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ॥ ७ ॥**

---

कति वेति प्रश्नं परिहरति **सिद्धय इति** । धारणयोगपारगैः धारणाख्ययोगपारं गतैः । अत्रोत्पन्नज्ञानस्यापि[१] तत्तद्योगसिद्धये तत्तदधिष्ठानगततत्तद्भगवद्रूपविशेषानुस्मरणं धारणेत्युच्यते । तस्मात् सिद्धीनां मुख्यतो ज्ञानफलत्वेपि धारणफलत्वमुपचारः । अन्यथाऽनुत्पन्नज्ञानस्यापि धारणमात्रेण तत्सिद्धिप्रसङ्ग इति । असुराणां तु भगवत्क्लृप्तमायाहेतव इति च । तासामष्टादशसिद्धीनां मूलभूता अष्टौ सिद्धयो मय्येव प्रधाना मुख्या अन्येषु देवेषूपचरिता इति मत्प्रधानाः । "सर्वाधिका अणिमाद्या विष्णोर्नान्यस्य कस्यचित् । स्वाभाविका विरिञ्चस्य तत्प्रसादात् पराधिकाः" इति स्वाभाव्यवचनात् । ता एव अष्टैव[२] गुणभूतानामनूर्मिमत्त्वादीनामपि हेतवः । "निःसीमाष्टगुणाभावात् सिद्धयोऽष्टादश स्मृताः । देवेभ्योऽन्यत्र देवानां सिद्धयोऽष्टैव सम्मताः" इति ॥ ३ ॥

कास्ता अष्टेति तत्राह **अणिमेत्यादिना** । मूर्तेः स्वरूपस्याणिमादिसिद्धिः । इन्द्रियैः अन्येन्द्रियैः विषयप्राप्तिः । श्रुतेषु दृष्टेषु प्राकाश्यम् । शक्तिप्रेरणमेवेशितृत्वम् । गुणेष्वसङ्ग एव वशित्वम् । यस्मिन् कामो यस्य स यत्कामस्तत्काममवाप्स्यतीति यत् (तत्) प्राकाम्यम् । "यादृशानन्दकामः स्यात् तादृशानन्दसम्भवः । भोगान् विनैव प्राकाम्यमणिमादेः पृथग् यतः" इति वचनात् ॥ ४-५ ॥

---

१. उत्पन्नं ज्ञानं यस्येति बहुव्रीहिरयम् ।
२. तात्पर्योदाहृतस्मृत्यनुसारी प्रयोगोयम् ।

**त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ।**
**अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भोऽपराजयः ॥ ८ ॥**

---

इदानीमष्टादशसिद्धीरुद्दिशति **अनूर्मिमत्त्वमित्यादिना** । अणिमा महिमा लघिमा प्राप्तिः प्राकाश्यमीशिता वशिता प्राकाम्यमित्यष्टमहासिद्धयः । अनूर्मिमत्त्वं दूरश्रवणं दूरदर्शनं मनोजवः कामरूपं परकायप्रवेशनं स्वच्छन्दमृत्युः देवानां सहक्रीडानुदर्शनं यथासङ्कल्पसंसिद्धिः आज्ञा अप्रतिहतागतिः अद्वन्द्वं त्रिकालज्ञत्वं परचित्ताद्यभिज्ञता अग्निस्तम्भः अर्कस्तम्भः जलस्तम्भः विषादिस्तम्भः, अत्रादिशब्देन शस्त्रास्त्रनखदन्तताडनशापादिभिरप्रतिहतिर्गृहीता । इयं सम्भूय सप्तदशी सिद्धिः, अपराजय इत्यष्टादशसिद्धयः अणिमाद्यष्टसिद्धिभ्यो जाताः । एवमुभये सम्भूय षड्विंशाः, गरिम्णा सहाष्टविंशाः[१] । अथान्तर्भावभेदेनाष्टदशसिद्धयोऽष्टसिद्धय इति केषां चित् पक्षः । तथाहि अनूर्मिमत्त्वस्य प्राकाम्यान्तर्गतत्वेन ते उभे एका । दूरश्रवणदूरदर्शनत्रिकालज्ञत्वपरचित्ताद्यभिज्ञतानां प्राकाश्यान्तर्भावेन चतस्र एका । कामरूपत्वस्याणिमामहिमालघिमान्तर्भावेनैका । अग्निस्तम्भार्कस्तम्भजलस्तम्भविषस्तम्भशस्त्रास्त्रशापादिस्तम्भानां ईशित्ववशित्वान्तर्भावेन पञ्च अपराजयोपीशित्वान्तर्गत इति षट् मनोजवकामरूपपरकायप्रवेशस्वच्छन्दमृत्युता देवैः सहितक्रीडानुदर्शनाज्ञाप्रतिहतागतीनां प्राप्त्यन्तर्भावेन षट्[२] । अत्र कामरूपत्वस्य द्विवारोक्तिः रूपभेदेन न विरुध्यते । ''गरिम्णः सैव हेतुः स्यान्महिमाहेतुधारणा । प्रायोऽष्टसिद्धिकथनेष्वतो न पृथगुच्यते'' इति, ''प्राप्तिप्राकाश्ययोश्चापि धारणैकापि सम्भवेत् । अत ऐक्येन तावुक्त्वा गरिमाणं पृथक् क्वचित्'' इति, ''मूलभूतास्तु सिद्धीनां देवानामष्टसिद्धयः । सर्वसिद्धिप्रधानास्तास्तज्ज्ञा अष्टादश स्मृताः । अष्टस्वन्तर्गतास्तास्तु तदपेक्षतयाऽल्पकाः'' इति, ''अनूर्मिमत्त्वसिद्धिस्तु प्राकाश्यान्तर्गता स्मृता । दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेव च । परचित्ताद्यभिज्ञानं प्राकाश्यन्तर्गतानि च । अणिमादित्रयान्तश्च कामरूप-

---

१. सप्तविंशाः इति पाठः स्यात् ।

२. अत्रैका पञ्चेत्यादिपरिगणनमीषदस्पष्टम् । अयमभिप्रायः । अनूर्मिमत्त्वस्यैकस्याः प्राकाम्येऽन्तर्भावः । दूरश्रवणादिचतसृणां प्राकाश्येऽन्तर्भावः । कामरूपत्वस्य यथासम्भवमणिमादि त्रिषु । अग्निस्तम्भादिपञ्चानामपराजयेन सह षण्णां वा यथा सम्भवमीशित्ववशित्वयोः । मनोजवादिसप्तानां प्राप्तौ । तदेवमष्टादशानामप्यस्वन्तर्भावः । कामरूपत्वस्य द्विर्ग्रहणेन यद्यपि एकोनविंशतिर्भवति, तथापि तस्यैकत्वेनैव संख्यानेऽष्टादश सम्पद्यन्ते । तदेतदनुपदमेवोदाहरिष्यमाणप्रमाणेन स्पष्टं भविष्यतीति ।

त्वमिष्यते। अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भो वशित्वगः। मनोजवः कामरूपं परकायप्रवेशनम्। स्वच्छन्दमृत्युता देवैः सहक्रीडेष्टसाधनम्। प्राप्तावन्तर्गतान्याहुराज्ञाऽप्रतिहतिस्तथा। अग्निस्तम्भो रविस्तम्भ उदकस्तम्भ एव च। विषस्तम्भस्तथा शस्त्रशापादिस्तम्भ एव च। ईशित्वान्तर्गतान्याहुरपराजयमेव च। एवमष्टादशाष्टभ्यो जायन्ते सिद्धयः क्रमात्। अष्टादशाभ्यश्चान्यास्तु जायन्ते सिद्धयोऽमिताः । अनूर्मिमत्त्वं दुःखस्याभावमात्रमुदाहृतम्। यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति कीर्त्यते। दुःखाभावोऽपि प्राकाम्ये नेतरे सुखितेष्यते। प्राकाश्यं सर्ववेदादिज्ञानेमव विदो विदुः। सहस्रयोजनान्तं तु दूरदर्शनमिष्यते। दूरश्रवणम्येवं तस्मिन्नेव युगे स्थिते। वेदादिकं विना प्रोक्ता त्रिकालज्ञानिता बुधैः। शरीरस्थं विना देहे परचित्ताद्यभिज्ञता। अन्येन्द्रियैर्दर्शनादि यथासङ्कल्पयोगिता। प्राप्तिरित्युच्यते सद्भिः स्वमनःसमवेगिता। मनोजव इति प्रोक्तः पश्वाद्याकारता तथा। कामरूपत्वमुद्दिष्टं स्वदेहत्यागतः परे। परकायप्रवेशः स्याद् युगादर्वाक्तनः स्मृतः। स्वच्छन्दमृत्युता देवैः क्रीडा चेन्द्रादिभिर्विना। यथासङ्कल्पसिद्धिश्चाप्यन्नपानसुखादिषु। चक्षुर्दृश्येष्वणुत्वं तु अणिमा सम्प्रकीर्तिता। महिमा चापि सम्प्रोक्ता त्रिलोकान्तरपूरणात्। चक्षुर्दृश्यैर्विबाह्यत्वं लघिमा चापि कीर्तिता। त्रिलोकसमभारस्तु गरिमा चापि कीर्तिता। पूर्वशक्तेः कोटिगुणशक्त्युद्रेकस्तथेशिता। भुविस्थैः प्राणिभिः प्रोक्तकरणं चापि कीर्त्यते। आज्ञाऽप्रतिहतिर्ब्राह्मादर्वागस्त्रविघातनम्। विना महातपस्वींश्च शापाप्रतिहतिः स्मृता। अपराजयो मनुष्येभ्यो वशित्वं चाप्यलोलता। दाहादिसहनं चापि प्रतिष्टम्भ इतीर्यते। इति षड्विंशतिः प्रोक्ता गरिम्णा सह सप्त वा। विंशतिश्च सुरेभ्योऽन्यत् देवेष्वष्टैव सिद्धयः। यतो निःसीमकस्तेषां देवानामष्टसिद्धयः। अतोऽष्टादशसिद्धीनां तदन्तर्भाव इष्यते। देवेष्विन्द्रेशवायुश्रीविष्णूनामुत्तरोत्तरम्। सिद्धयः परिपूर्णास्तु विष्णोरेकस्य नन्यगाः'' इति, ''श्रुतेषु तु यथायोगं क्षिप्रग्रहणमेव तु। उक्तं प्राकाश्यमन्येषां देवानामश्रुतेष्वपि। ऋषीणां मिश्रभावेन भासते किञ्चिदश्रुतम्। विषयेभ्योऽधिकसुखव्यक्तिः प्राकाम्यमेव तु। इतरेषां सुराणां तु निस्सीमानन्दभोजनम्। एवमेव तु निस्सीमा देवानामष्टसिद्धयः। उत्तरोत्तरमत्रापि यावद् विष्णुः सुपूर्णभुक्'' इति, ''अग्न्यादिशक्तिसंस्तम्भश्चाग्निसंस्तम्भ इष्यते'' इति, ''एकस्मात् सिद्धयो विष्णोः स्थानभेदात् पृथग्विधाः। एकस्थानगताद्वा स्युः सुस्थिरोपासना यदि'' इति नानाकोशगतवाक्यबलादुक्ता एवान्तर्भावाः संख्याश्च नान्याः शुकतीर्थाद्युक्तविधा इति। अप्रतिहता आ समन्ताद् गतिर्यस्या आज्ञायाः सा तथा आज्ञा अप्रतिहतागतिः॥ ६-८॥

**एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ।**
**यया धारणया या स्याद् यथा वा स्यान्निबोध मे ॥ ९ ॥**

**भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयन् मनः ।**
**अणिमानमवाप्नोति तन्मात्रोपासको मम ॥ १० ॥**

**महत्यात्मन् मयि परे यथासंस्थं मनो दधत् ।**
**महिमानमवाप्नोति भूतानां च पृथक्पृथक् ॥ ११ ॥**

**परमाणुमये चित्तं भूतानां मयि रञ्जयन् ।**
**कालसूक्ष्मात्मके योगी लघिमानमवाप्नुयात् ॥ १२ ॥**

---

मनोयोगेन यद् धारणं ध्यानं तेन जायमानाः सिद्धयो योगधारणसिद्धयः । संख्याविषयं प्रश्नं परिहृत्येदानीं कया धारणया इत्यादिप्रश्नं परिहरति **यथेति** ॥ ९ ॥

तत्र तावत् प्रथमोद्दिष्टाणिमासिद्धिप्रापकं ध्यानप्रकारमाह **भूतसूक्ष्मेति** । भूतसूक्ष्माणां पार्थिवादिपरमाणूनामात्मनि नियामके परमाणुषु स्थिते मयि तन्मात्रपरिमितत्वेन मनो धारयन् ध्यायन्नणिमानमवाप्नोति । अनेन यद्यद्वस्तूपमितं रूपं स्वयमपि तत्तत्परिमितो भवतीत्युक्तं भवति । ''तन्मात्रावयवे सूक्ष्मे परमाण्वभिधानके । प्रत्येकमणुरूपं तु विष्णुं ध्यायन्नणुर्भवेत्'' इति वचनात् । प्रकारान्तरेणाणुत्वप्राप्तिप्रतिपत्तिमाह **तन्मात्रेति** । मम तन्मात्रोपासकः तस्याकाशगुणस्य शब्दादेर्यत् सूक्ष्ममात्रं परिमाणं तत्परिमाणस्य मम स्वरूपस्योपासकोपि तत्परिमितरूपो भवतीत्यर्थः । ''आकाशवत् सूक्ष्मतां यो व्यापित्वेनैव मन्यते । तन्मात्राव्यापिनं विष्णुं चिन्तयन् स तथा भवेत्'' इति वचनात् । अणुत्वं च ''चक्षुर्दृश्येष्वणुत्वं तु अणिमा सम्प्रकीर्तिता'' इत्युक्तविधम् ॥ १० ॥

व्याप्तस्य हरेरेकैकावयवध्यानं परिच्छिन्नवस्तुमहत्त्वकारणमाह **महतीति** । महति व्याप्ते आत्मन् आत्मनि स्वामिनि मयि यथासंस्थं यथा वस्तुपरिमाणं तथा स्थिते मनो दधत् पुरुषो महिमानं महत्त्वमवाप्नोति । तदेव विशिनष्टि **भूतानामिति** । अस्मात् स्थूलतां प्राप्नवानीत्यपेक्षायां तस्मात् स्थूलतां प्राप्नोति । ततोऽन्यस्मान्महत्त्वमाप्नवानीत्यपेक्षायां तस्मादिति पृथक्पृथक् भूतानां सकाशान्महत्त्वमाप्नोतीत्यर्थः । परे परमात्मनि । सर्वनामसञ्ज्ञाविकल्पात् नास्त्यस्य ॥ ११ ॥

लघिमासिद्धिप्रापिणीं प्रतिपत्तिमाह **परमाणुमय इति** । कालसूक्ष्माणां कालपरमाणूनामात्मके

**धारयन् मय्यहन्तत्वे मनो वैकारिकेऽखिलम् ।**
**सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥**

**महत्यात्मनि यः सूत्रे धारयन् मयि मानसम् ।**
**प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥**

**विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहे ।**
**स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनम् ॥ १५ ॥**

---

आत्मनि व्यापके । तत्स्वरूपं विशिनष्टि **परमाणुमय इति** । परमाणुमये भूतानां सकशादतिशयिताणुस्वरूपे मयि चित्तं रञ्जयन् अनुरक्तं कुर्वन् तदेकनिष्ठत्वेन कुर्वन् लघिमानमाप्नोति ॥ १२ ॥

प्राप्तिसिद्ध्यापादकधारणामाह **धारयन्निति** । वैकारिके अहंतत्वे व्याप्ते मयि मनो धारयन्नखिलं निवृत्तबहिर्वृत्ति यथा तथा धारयन् सर्वेन्द्रियाणामात्मत्वं स्वामित्वेन स्वेच्छानियतत्वमाप्नोति । ततः किमत्राह **प्राप्तिरिति** । अन्येन्द्रियैर्विषयदर्शनादिलक्षणप्राप्तिं प्राप्नोति । ''अन्येन्द्रियैर्दर्शनादि यथासङ्कल्पवेगिता । प्राप्तिरित्युच्यते सद्भिः'' इति च । मन्मना इत्यनेनान्तरालेऽन्यमनस्कत्वं निवारयति ॥ १३ ॥

प्राकाश्यप्राप्तिप्रकारं कथयति **महतीति** । महति महत्तत्वे सूत्रे मुख्यप्राणे आत्मनि व्याप्ते मयि मानसं धारयन् अव्यक्तजन्मनः अव्यक्तस्यापि विकारलक्षणस्थूलत्वापादकस्य मे प्रसादात् पारमेष्ठ्यं परमेष्ठिनो ब्रह्मणः प्रसादलभ्यं प्राणभारत्योः प्रसादाच्च सर्ववेदादिज्ञानश्रैष्ठ्यापादकं प्राकाश्यं विन्दत इत्यन्वयः । ''प्राकाश्यं सर्ववेदादिज्ञानमेव विदो विदुः'', ''सर्वे गुणास्तु प्राणस्य परमात्मप्रसादतः । प्राणविष्ण्वोः प्रसादेन भारत्याः सम्प्रकीर्तिताः । प्रसादात्तु त्रयाणां चाप्यनन्तादेः सदा गुणाः'' इति च ॥ १४ ॥

ईशित्वप्राप्तिप्रकारमाह **विष्णाविति** । परमाण्वादिरूपः कालो विग्रहः प्रतिमा यस्य स कालविग्रहः, तस्मिन्नधीश्वरे अधीश्वरत्वगुणविशिष्टे । अनेन यो यो गुण उपासकस्याभिलषितः तं तं गुणं तस्मिन्नुपसंहृत्योपासनं कर्तव्यमित्युक्तं भवति । सर्वत्राधीश्वरत्वादौ विद्यमानेऽपीत्यादि[1] । विष्णौ

---

१. इत्यादिनेति चारु । भगवत्पादस्य तात्पर्यकृतः स्ववचनमिदम् ।

नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते।
मनोमय्या दधद्योगी मद्धर्मो वशितामियात्॥ १६॥

निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः।
परमानन्दमाप्नोति यत्र कामोऽवसीयते॥ १७॥

श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि।
धारयन् श्वेततां याति षडूर्मिरहितो नरः॥ १८॥

मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन्।
तत्रोपलब्धाभूतानां हंसो वाचः शृणोत्यसौ॥ १९॥

---

व्याप्ते मयि चित्तं धारयन् ईशित्वमवाप्नोति। कीदृशम्। क्षेत्रं शरीरं स्थावरादिपदार्थसमूहो वा, क्षेत्रज्ञा जीवा एषां चोदनं नियमनं यस्मात् तत् क्षेत्रक्षेत्रज्ञचोदनम्। भुविस्थितैः प्राणिभिरुक्तकारकत्वं पूर्वशक्तेः कोटिगुणशक्त्युद्रेकश्चेत्युक्तमनेन॥ १५॥

वशितावाप्त्युपायमाह **नारायण इति**। नारायणे तुर्याख्ये भगवच्छब्दशब्दित ऐश्वर्यादिषड्गुणानुपसंहृत्य मयि मन आदधद् योगी वशितामियादवाप्नोति। असङ्गत्वादिलक्षणो मम धर्मो यस्य स मद्धर्मः॥ १६॥

प्राकाम्यसिद्धिकारणमाह **निर्गुण इति**। यत्र यस्मिन्नानन्दे प्राप्ते कामः अन्येच्छा अवसीयते समाप्तो भवति। कामः काम्यः कमनीयो विषयो नास्तीति वा। ''यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति कीर्त्यते'' इति च। प्रगतमा समन्तात् काम्यं यस्मात् तत् तथा। अत्र निर्गुणत्वब्रह्मत्वगुणावुपसंहार्यौ॥ १७॥

अनूर्मिमत्वसमाधिमाह **श्वेतद्वीपपताविति**। शुद्धे निर्दुःखे धर्ममये धर्मफलदातरि श्वेतद्वीपपतौ मयि मनो धारयन् श्वेततां याति निर्दुःखत्वमवाप्नोति। ''शुद्धः श्वेतः सुखी श्वेतः श्वेतवर्णः क्वचिद् भवेत्'' इति। कथं निर्दुःखत्वमाप्तं स्यादत्राह **षडिति**। षडूर्मिराहित्यं विवृतममर इत्यनेन। ''अनूर्मिमत्त्वं दुःखस्याभावमात्रमुदाहृतम्'' इति॥ १८॥

दूरश्रवणसिद्ध्युपायमाह **मयीति**। आकाशात्मनि आकाशव्यापिनि प्राणे स्थिते मयि मनसा

**चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ।**
**मां तत्र मनसा ध्यायन् विश्वं पश्यति सूक्ष्मदृक् ।। २० ।।**

**मनो मनसि संयोज्य देहं तदनु वायुना ।**
**मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ।। २१ ।।**

**यदा मन उपादाय यद्यद् रूपं बुभूषति ।**
**तत्तद् भजेन्मनोरूपं मद्योगबलमाश्रितः ।। २२ ।।**

**परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ।**
**पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ।। २३ ।।**

---

घोषं शब्दमुद्वहन् आकाशस्थप्राणस्थो हरिः शब्दप्रवर्तकस्तस्याधारश्चेति ध्यायन् हंसः शरीराभिमानविधुरजीवोऽसौ तत्राकाशे उपलब्धानामा समन्तात् स्थितानां भूतानां वाचः शृणोतीत्यन्वयः । ''त्यागात् पूर्वशरीराणां नवानां सञ्चयेन च । जीवं हंस इति प्राहुस्तद्धेतुत्वात् हरिं परम्'' इत्यतो वा हंसो जीवः।। १९ ।।

दूरदर्शनोपायमाह **चक्षुरिति** । त्वष्टा सूर्यश्चक्षुर्नियामक आश्रयश्च । तत्र चक्षुषि सूर्ये च स्थितं माम् । ''सहस्रयोजनान्तं तु दूरदर्शनमिष्यते । दूरश्रवणमप्येवं तस्मिन्नेव युगे स्थिते'' इति विशेषः ।। २० ।।

मनोजवप्रापकधारणप्रकारमाह **मन इति** । यदा योगिनो मनोवेगेन गन्तुमिच्छा तदा मनो मनसि मनस्तत्वे वायुना संयोज्य तदनु मनोऽनुदेहमपि वायुना संयोज्य मद्धारणानुभावेन मनस्तत्वान्तर्यामिणो मम ध्यानसामर्थ्येन यत्र मनस्तत्रात्मा शरीरमनुगच्छतीत्यन्वयः । ''स्वमनःसमवेगिता मनोजव इति प्रोक्तः'' इति च ।। २१ ।।

कामरूपावाप्त्युपायमाह **यदेति** । यदा मन उपादाय स्थिरीकृत्य यद्यद्रूपं गजादिरूपं बुभूषति भवितुमिच्छति गजादिरूपः स्यामिति तदा गजाद्याकारस्य गजाद्यन्तर्यामिणो मम योगबलं ध्यानबलं आश्रितो योगी तत्तन्मनोगतगजादिरूपं भजेदित्यन्वयः । ''गजादिरूपमाकांक्षन् गजादिस्थित-मीश्वरम् । ध्यायन् गजादिरूपः स्यात् पश्वाद्याकारता तथा । कामरूपत्वमुद्दिष्टम्'' इति च ।। २२ ।।

परकायप्रवेशोपायमाह **परकायमिति** । अस्यायमर्थः । परकायं विशन् सिद्ध आत्मानं स्वान्तःस्थं

**पाष्ण्यार्ऽऽपीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ।**
**आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत् तनुम् ।। २४ ।।**

**विहरिष्यन् सुराक्रीडे मत्स्थं सत्वं विभावयेत् ।**
**विमानेनोपतिष्ठन्ति सत्ववृत्तिं सुरस्त्रियः ।। २५ ।।**

**यथा सङ्कल्पयेद् बुद्ध्या यथा वा मत्परः पुमान् ।**
**मयि सत्ये मनो युञ्जन् तथा तत् समुपाश्नुते ।। २६ ।।**

---

हरिं तत्र परकाये भावयेत् । एवंभावितः पृकृष्टानन्दरूपत्वात् प्रणयनकर्तृत्वाच्च प्राणः परमात्मा वायुभूतो वायौ भूतो वाय्वन्तर्गतः पिण्डं हित्वा इतरदृष्ट्या स्वदृष्ट्या न त्यक्त्वा योगिनं समादाय परकाये प्रविशेदित्यन्वयः । ''स्वदेहत्यागतः परे । परकायप्रवेशः स्यात्'' इति । ''परकायस्थितं हरिं । ध्यायन् विशेत् परे काये वाय्वन्तरगतः पुमान् । प्राणनामा हरिः प्रोक्तस्तस्मिन् वायुः समाश्रितः । वायावन्तर्गतो जीवो देहाद् देहं प्रयास्यति'' इति च ।। २३ ।।

स्वच्छन्दमृत्युताप्रकारमाह **पार्ष्ण्येति** । प्राणं हृदुरःकण्ठमूर्धस्वारोप्य षडाधारस्थितं विष्णुं ध्यायन् ब्रह्मरन्ध्रेण तनुमुत्सृजेत् । प्राणं ब्रह्मणि नीत्वा प्राणनामानं बहिःस्थे ब्रह्मनाम्नि स्मृत्वेत्यर्थः । ''युगादर्वाक्तना स्मृता । स्वच्छन्दमृत्युता'' इति । ''षडाधारस्थितं विष्णुं ध्यायन्नायुःक्षयं विना । यदि मृत्युमभीप्सेत तथा प्राप्नोत्यसंशयम्'', ''प्राणस्थं प्राणनामानं बहिःस्थे ब्रह्मनामके । विष्णुं विष्णावनुस्मृत्य विसृजेद् देहमञ्जसा'' इति । ''अनेयस्य हरेर्नीतिस्तद्गतस्य हरेः स्मृतिः । न हि नेयः क्वचित् क्वापि केनचित् स्ववशत्वतः'' इति च ।। २४ ।।

देवसहितक्रीडानुदर्शनसिद्धिधारणामाह **विहरिष्यन्निति** । सुराणामाक्रीडे विहरिष्यन् विहर्तुकामो योगी सत्वगुणं मत्स्थं विभावयेत् । सुरस्त्रियो विमानेन सत्ववृत्तिमुपतिष्ठन्ति समीपमाप्नुवन्तीत्यन्वयः । ''देवैः क्रीडा चेन्द्रादिभिर्विना'' इति ।। २५ ।।

यथासङ्कल्पसिद्धिध्यानमाह **यथेति** । सत्ये सत्यसङ्कल्पे मयि मनो युञ्जानो यथायथा मत्परः पुमान् बुद्ध्या सङ्कल्पयेत् यं यं गुणमुपसंहृत्य मामुपास्ते तथा तथा तत् काम्यमाप्नोतीत्यन्वयः । ''यथासङ्कल्पसिद्धिश्चाप्यन्नपानसुतादिषु'' इति ।। २६ ।।

**योो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ।**
**न कुतश्चन हन्येत तस्य चाज्ञा यथा मम ॥ २७ ॥**

**मद्भक्त्या शुद्धसत्वस्य योगिनो धारणाविदः ।**
**तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥**

**अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ।**
**मद्योगश्रान्तचित्तस्य यादसामुदकैर्यथा ॥ २९ ॥**

**मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः ।**
**ध्वजातपत्रव्यजनैः स भवेदपराजितः ॥ ३० ॥**

---

आज्ञाऽप्रतिहतिसिद्धिधारणाप्रकारं दर्शयति **य इति** । यः पुमान् ईशितुर्वशितुर्मदिति पञ्चमी षष्ठ्यर्थे । मम भावं भावनाम् ईशितृत्ववशितृत्वगुणोपसंहारलक्षणां भक्तिं सेवामापन्नः तस्य पुंसः आज्ञा कुतश्चन हेतोर्न विहन्येत । चशब्द एवार्थे । यथा ममाज्ञा । वै प्रसिद्धम् । ''आज्ञाऽप्रतिहतिर्ब्राह्मादर्वागस्त्रविघातनम् । विना महातपस्वींश्च शापप्रतिहतिः स्मृता'' इत्येतच्चशब्दतो वा गृहीतम् । ''भावो मनश्च भक्तिश्च क्वचिदभ्यास इष्यते'' इति च ॥ २७ ॥

त्रिकालज्ञत्वसिद्धिसाधनमाह **मद्भक्त्येति** । धारणाविदः त्रिकालान्तर्यामिहरिस्मरणप्रकारज्ञस्य जन्ममृत्यूपबृंहिता सृष्टिसंहारविषयिणी बुद्धिर्ज्ञानं, स्यादिति शेषः । ''वेदादिकं विना प्रोक्ता त्रिकालज्ञानिता बुधैः'' इति, ''त्रिकालप्रेरकं विष्णुं ध्यातुः कालत्रयज्ञता'' इति च ॥ २८ ॥

अग्न्यादिस्तम्भोपास्तिप्रकारमाह **अग्न्यादिभिरिति** । योगमयं ध्यानमयम् । एतदेव विशिनष्टि **मद्योगश्रान्तचित्तस्येति** । अग्न्यादीनामौष्ण्यादिशक्तिस्तम्भकाह्लादकत्वादिगुणार्णवस्य मम ध्यानं मद्योगः तेन श्रान्तं तदेकनिष्ठं चित्तं यस्य स तथा तस्य । ''अग्न्यादिशक्तिसंस्तम्भ अग्निसंस्तम्भ इष्यते'' इति । यादसां वपुः । ''अग्न्यादिषु हरिं ध्यायन् तत्प्रतिस्तम्भको भवेत्'' इति च ॥ २९ ॥

अपराजयसिद्ध्युपायमाह **मद्विभूतीरिति** । मद्विभूतीः मम विविधभूतीः । अपराजितः, मनुष्यैरिति शेषः ॥ ३० ॥

**उपासकस्य मामेवं योगधारणया पुनः ।**
**सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥ ३१ ॥**

**जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ।**
**मद्धारणां धारयतः का नु सिद्धिः सुदुर्लभा ॥ ३२ ॥**

**अन्तरायान् वदन्त्येतान् युञ्जतो योगमुत्तमम् ।**
**मया सम्पद्यमानस्य कालक्षपणहेतवः ॥ ३३ ॥**

**जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ।**
**योगेनाप्नोति ताः सर्वा यैर्यैर्योगगतिं व्रजेत् ।**
**सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ ३४ ॥**

---

उक्तानामनुक्तानां च सिद्धीनामवरोधोऽपरोक्षीकृततत्वस्य तत्सिद्धीराकांक्षमाणस्य ममोपासकस्योक्तविधया तत्तत्सिद्धिप्राप्तियोग्यगुणोपास्तिं कुर्वत एवेत्याह **उपासकस्येति** । उपासनयाऽपरोक्षीकृततत्वस्य पुनरुपासनं कार्यकाले कुर्वतः कार्यसिद्धिः स्यादित्यतो योगधारणया पुनरित्युक्तम् । योगधारणया सिद्ध्युपायध्यानेन ॥ ३१ ॥

निरन्तरध्यानरतस्य पुंसः सिद्धिर्निरूपणमात्रेण भवति न चिरध्यानापेक्षाऽस्तीत्याशयेनाह **जितेन्द्रियस्येति** । दान्तस्य उपरतस्य । जितश्वासस्य प्राप्तवायुप्रसादस्य । जितात्मनः प्राप्तमनोजयस्य । ''उपास्य वायुं प्रथमं वायौ सुष्ठ्वपरोक्षिते । अनुज्ञातस्ततस्तद्वं तत्र तत्र हरिं स्मरेत् । कृत्वाऽपरोक्षं तं चापि काले काले स्मरेत् पुनः । अभीष्टकार्यसिद्धिः स्यात् तस्य नास्त्यत्र संशयः । अकामो यदि वायुं च ध्यात्वा दृष्ट्वा हरिं तथा । न किञ्चित् कामयेत् पश्चात् स क्षिप्रं मुक्तिमेष्यति'' इति ॥ ३२ ॥

भगवद्ध्यानेनाणिमादिसिद्धीनां सौलभ्येपि तदर्थोपास्तिर्न प्रशस्तेत्याह **अन्तरयानिति** । एतान् सिद्धिविशेषान् । उत्तमं योगं मुक्तियोग्यध्यानं युञ्जतः कुर्वतः । सम्पंद्यमानस्य मत्प्रसादमाप्तुकामस्य । कुतोऽन्तराया इति तत्राह **कालेति** । ''यदि योगफलं भुङ्क्ते पुनः काममपास्य तु । तेनैव क्रमयोगेन वायुं दृष्ट्वा हरिं तथा । एष्टव्या मुक्तिपदवी नान्यथा तु कथञ्चन । पूर्वदृष्टिर्हि कामार्थे पश्चान्मोक्षार्थमिष्यते । येषां तु जन्मतः सिद्धिस्तेषां दोषो न तु क्वचित्'' इति ॥ ३३ ॥

जन्मादिभ्यो योग एव साधनोत्तम इत्याह **जन्मौषधीति** । यावतीर्यावन्त्यः । योगेन ध्यानेन ।

**अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनाम् ।। ३५ ।।**

**अहमात्माऽन्तरो बाह्योऽनावृतः सर्वदेहिनाम् ।**
**यथा भूतानि भूतेषु बहिरन्तस्त्वहं तथा ।। ३६ ।।**

**।। इति पञ्चदशोऽध्यायः ।।**

---

एतादृशो योगो विशिष्टदेवताभिरेव सुलभ्यो न सर्वैरित्याह **यैर्यैरिति**। यैर्यैः कैश्चित् जन्मादिभिर्योगगतिं व्रजेत्। कुत इति तत्राह **सर्वासामिति**। मृदो घटकारणत्वेपि न तत्स्वामित्वं किन्तु कुलालस्यैवेत्यत उक्तं **पतिरिति**। कुलालादिस्वामित्वं च न यावद्द्रव्यगतमित्यतः **प्रभुरिति**। समर्थेन मया विशिष्टा एवास्मिन् योगेऽधिकृताः स्युरिति सङ्कल्पितत्वाद् युक्तमित्यर्थः । ''जन्मादिभिः कैश्चिदेव प्राप्यते योगजं फलम्। योगेन सर्वैः प्राप्येत योगे यत्नं ततः कुरु'', ''कश्चिदर्थेऽपि यच्छब्द प्रश्नार्थे च क्वचिद् भवेत्। क्वचित् परामर्शवाची क्वचिदाक्षेपवाचकः'' इति वचनाद् यैरिति यच्छब्देन कश्चित् (इति) अर्थ उच्यते ।। ३४ ।।

न केवलं सिद्धीनामेव हेतुः किन्तु योगादीनामपीति भावेनाह **अहमिति**। ब्रह्मवादिनां वेदवादिनां वेदान्तिनामित्यर्थः ।। ३५ ।।

कीदृशस्त्वमिति तत्राह **अहमिति**। अहं सर्वदेहिनामात्मा प्रेष्ठः स्वामी। अन्तर्यामिरूपेणान्तरः अन्तः स्थित्वा रतिकृत्। अनेन प्रेष्ठत्वं विवृतम्। ब्रह्मरूपेण बाह्यो बहिःष्ठः। बहिःष्ठस्यापि ब्रह्माण्डस्येवान्येनावृतत्वमस्तीत्यतः अनावृत इति। अज्ञजनं विश्रम्भयितुं दृष्टान्तयति **यथेति**। पञ्चमहाभूतानि भूतेषु जीवादिवस्तुषु अन्तर्बहिश्च व्याप्नुवन्ति यथा तथेति ।। ३६ ।।

**।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य पञ्चदशोऽध्यायः ।।**

॥ अथ षोडशोऽध्यायः ॥

**उद्धव उवाच -**

**त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् ।**
**सर्वेषामपि भावानां प्राणः स्थित्यप्ययोद्भवः ॥ १ ॥**

**उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ।**
**उपासते त्वां भगवन् याथातथ्येन ब्राह्मणाः ॥ २ ॥**

**येषु येषु च भावेषु यथा त्वां परमर्षयः ।**
**उपासीनाः प्रपद्यन्ते संसिद्धिं तद् वदस्व मे ॥ ३ ॥**

**गूढश्चरसि भूतेषु भूतात्मा भूतभावनः ।**
**न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥ ४ ॥**

---

अधिकारिणामनेकविधत्वेन योग्यताया उपास्तेः फलस्य च तथाविधत्वात् तदानुकूल्येन तत्तदुपासनार्थं तत्तद्गुणोपसंहाराय स्वविभूतीरुपदिशत्यस्मिन्नध्याये । तत्रोद्धवः स्वप्रश्नप्रतिवचने तात्पर्यजननाय प्रवक्तारं कृष्णं वेदान्तवेद्यं ब्रह्म त्वदनुग्रहेण मया ज्ञातमिति वक्ति **त्वं ब्रह्मेत्यादिना** । साक्षात् परमं ब्रह्मत्वं तवैव, अन्येषाममुख्यमिति भावेनोक्तम् अनाद्यन्तमिति । प्रकृतेः कथञ्चिदुक्तविशेषणसम्भवेपि विकारित्वादमुख्यमिति भावेनोक्तम् **अपावृतमिति** । एवंविधस्य व्यावर्तकं लक्षणमाह **सर्वेषामिति** । अपिरेवार्थे । त्वमेव सर्वेषां भावानां प्राणश्श्रेष्ठकः स्थित्यप्ययोद्भवश्च सृष्टिस्थितिसंहारकर्ता । सत्ताया अपि त्वदेकाधीनत्वात् तत्त्वोक्तिः ॥ १ ॥

जन्मादिकर्तृत्वविशिष्टत्वेनोपास्योपि त्वमेवेत्याह **उच्चावचेष्विति** । ब्राह्मणा मुनयः याथातथ्येन निर्दुःखानन्दानुभवरूपत्वेन स्थितत्वात् ॥ २ ॥

नन्वेवमुक्तानुवादोऽस्तु, तवापेक्षितांशः क इति तत्राह **येष्विति** । येषु येषु केषु केषु । यथा कथम् । तत् उपासनम् । भासनोपसम्भाषज्ञानयत्नविमत्युपमन्त्रणेषु वद इत्यतो वदस्वेत्यात्मनेपदम् ॥ ३ ॥

बहुशृण्वतोपि मम त्वत्स्वरूपज्ञानं दुःसाधनमिति भावेनाह **गूढ इति** । ते त्वया ॥ ४ ॥

याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूतेः ।
ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ।। ५ ।।

श्रीभगवानुवाच -

एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर ।
युयुत्सुना विशसने सपत्नैरर्जुनेन वै ।। ६ ।।

ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्म्यं राज्यहेतुकम् ।
ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ।। ७ ।।

स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ।
अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ।। ८ ।।

अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ।
अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ।। ९ ।।

---

स्वप्रश्नं विशिनष्टि **याः काश्चेति** । महाविभूतेः ब्रह्मादिदेवाद्यचिन्त्यैश्वर्यस्य । त्वत्सन्निधानविशेषात् स्वजात्युत्तमाः यास्ता विभूतीराख्याहीत्यन्वयः । ते त्वया अनुभाविता निश्चिताः । यद्वा ते तव विभूतीः अनुभाविताः उपासिताः, महद्भिरिति शेषः । हे तीर्थपद ।। ५ ।।

परिहरति **एवमिति** । युयुत्सुना योद्धुकामेन । विशसने युद्धे ।। ६ ।।

किमभिप्रायेण पृच्छतीति तत्राह **ज्ञात्वेति** । ततो युद्धात् । कीदृशः । अहं हन्ता अयं हत इति निरूप्य । लौकिकः बहिर्जनस्वभावोऽज्ञ इत्यर्थः ।। ७ ।।

आत्मा सर्वगुण ईश्वरोहममीषां भूतानां सुहृत् अनुपकृतबन्धुः । कुत इति तत्राह **अहमिति** । नन्वियमुक्तिरैक्यात् किम् । तत्राह **तेषामिति** । ''सृष्टिस्थित्यदिहेतुत्वाद् भूतानि हरिरुच्यते । न तु भूतस्वरूपत्वात् । स हि सर्वेश्वरेश्वरः'' इति वस्तुतत्वे । एतस्मात् प्रमाणात् सृष्ट्यादिहेतुत्वात् तदधीनत्वादैक्योक्तिर्न तु स्वरूपैक्यादिति भावः ।। ८-९ ।।

**अहं गतिर्गतिमतां कालः कलयतामहम् ।**
**गुणानामप्यहं सौम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥**

**गुणिनामप्यहं सूत्रं महतां च महानहम् ।**
**सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥**

---

विभूतीराह **अहं गतिरिति**। गतिमतां ज्ञानवतां गतिर्ज्ञानमहम्। ज्ञानं ज्ञानवतामहमिति। तद्वत्सु नित्यसन्निहित इत्यर्थः। कलयतां संहरतां कालः कालाभिमानी ब्रह्मा। ''स्वस्वजात्युत्तमत्वं तु भवेद् यद्रूपसन्निधेः। विभूतिरूपं तत् प्रोक्तमिन्दिरादिषु संस्थितम्। तथा बहिः स्थितं रूपं विभूतीत्येव शब्दितम्। सर्वसाधारणं रूपमन्तर्यामीति चोच्यते। यथा कृष्णात्मना दुष्टहन्ता व्यासात्मना समः। असमोऽप्येकरूपोपि सामर्थ्यात् पुरुषोत्तमः''। इत्यनेन विभूतीनां भगवद्रूपसन्निधानात् स्वजात्युत्तमत्वादिकं निर्णीतम्। ''ब्रह्मरूद्रेन्द्रजीवेभ्यः पृथगेव व्यवस्थितम्। विभूतिरूपं विष्णोस्तु तद्रश्रैष्ठ्यैककारणम्। तदेव ब्रह्मरुद्रादिनामभिर्वाच्यमञ्जसा। तदेव देवेष्विन्द्रोऽस्मि तथा रुद्रेषु शङ्करः। इत्यादिनोक्तं कृष्णेन नेन्द्राद्या जीवसश्चयाः'' इत्यनेन ब्रह्मादिभ्यो भिन्नं तन्नामकत्वेनोच्यत इति विभूतिरिति ज्ञातव्यम्। ''प्रधानो ज्ञानिनां ब्रह्मा ज्ञानरूपी हृदि स्थितः। स एव कालमानी तु संहर्तॄणां प्रभुः स्मृतः'' इति वचनाद् युक्तम्। गुणानां मध्ये सौम्यमहम्। उमेनानन्दानुभवेन सहितः सोमः, तस्य भावः सौम्यम्। ''आनन्दानुभवस्तूम उत्कृष्टानुभवात् स्मृतः। तद्युक्तत्वं तथा सौम्यं गुणानामधिकं हि तत्। भक्त्यादिगुणपूगोपि दुःखहेतुत्वभावनात्। निष्फलो भवति ह्यद्धा प्रीतस्य साफलो भवेत्। तस्मादानन्दमानं तु गुणेषूत्कृष्टमुच्यते। यस्याभिमानी ब्रह्मैको भक्तिज्ञानाधिकस्य च। श्रद्धाभिमानिनी देवी तथैव तु सरस्वती। तदन्येषां गुणानां तु तदन्ये विबुधाः स्मृताः। गुणानां तु प्रभुर्ब्रह्मा तस्मादेकश्चतुर्मुखः'' इत्युक्तेः। आनन्दमानं हरिरानन्द इति ज्ञानमित्यर्थः। गुणिनां मध्ये गुणिनि स्थितो य औत्पत्तिको गुणः सूत्रं वायुः, सोऽहमित्यर्थः। अपिशब्दः सूत्रस्यौत्पत्तिकगुणाभिमानित्वं समुच्चिनोति। तदुक्तम् ''औत्पत्तिकगुणो नाम शुभप्राप्त्यैक-योग्यता। तस्याभिमानी प्राणस्तु स हि सर्वगुणाधिकः'' इति। ''गुणिनां गुणयोग्यत्वं यत् सर्वगुणिषु स्थितम्। वायुस्तदभिमान्येकः सर्वगुण्यधिकस्ततः'' इति च। महतां स्थूलानां महान् महत्तत्वम् ॥ १०-११ ॥

हिरण्यगर्भो देवानां मन्त्राणां प्रणवस्त्रिवृत्।
अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम्॥ १२॥

इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट्।
आदित्यानामहं विष्णू रूद्राणां नीललोहितः॥ १३॥

ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः।
देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु॥ १४॥

सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम्।
प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा॥ १५॥

मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम्।
सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम्॥ १६॥

ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम्।
तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम्॥ १७॥

---

त्रिवृत् अकारोकारमकारात्मकः। च्छन्दसां वेदानां पदानि, पद्यन्त इति पदानि, वेदानां मुख्यार्थः। उक्तं च ''स्वयूथानामथाऽऽधिक्ये स्वजातीनामथापि वा। यत् कारणं विभूत्याख्यं विष्णोस्तद् रूपमुच्यते'' इति। ''वर्णेशानि पदान्याहुः पादाश्चापि तदीश्वराः। पादानामीश्वरार्धर्चास्तदीशा ऋच एव तु। ऋचामधीशा वर्गाश्च तेषां सूक्तमधीश्वरम्। सूक्ताधीशास्तथाऽध्यायास्तेषामीशास्तथाऽष्टकाः। तदधीशास्तथा शाखा वेदाश्चापि तदीश्वराः। वेदानामीश्वरा वाच्या वाच्यानामीश्वरो हरिः। न हरेरीश्वरः कश्चित् कदाचित् क्वापि विद्यते'' इति। ''पदं पदसहस्रेण यश्चरन् नापराध्यते'' इतिवत्। ''पदं तु वाचकं प्रोक्तं क्वचिद् वाच्यमपीष्यते'' इति। अत्रेदं तात्पर्यमवगन्तव्यम्। ''सर्ववेदाभिमानिन्यो देव्यो लक्ष्मीस्ततोऽधिका। वेदाभिमानिनी साक्षात् सा विष्णोर्दूरवत् स्थिता। यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता। हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु। उत्तरोत्तरतः सापि विशिष्टा दक्षिणा सुखे। एवं वेदाभिमानाभ्यो देवीभ्यः सर्व एव तु। तदर्थरूपाः पतयस्तस्यास्तस्यास्तथोत्तमाः। शच्या इन्द्रस्ततश्चोमा तस्या रुद्रस्ततो वरः। भारती प्राण एवास्यास्तत श्रीस्तद्वरो हरिः'' इति॥ १२॥

उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ।
यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥ १८ ॥

नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ।
आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥ १९ ॥

तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम् ।
आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥ २० ॥

गिरीणामस्म्यहं मेरुर्गहनानां हिमालयः ।
वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥ २१ ॥

पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ।
स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥ २२ ॥

यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ।
वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥ २३ ॥

योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ।
आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥

---

द्युमतां प्रकाशवताम् ॥ १३-१७ ॥ धातूनां गैरिकाणाम् ॥ १८ ॥ ''गार्हस्थ्यं च यतित्वं च देवेष्वेकत्वमागतम् । प्राधान्योक्तिर्यतित्वस्य गार्हस्थ्यस्य क्वचित् क्वचित्'' इति च । तुर्यश्चतुर्थो यत्याश्रमः ॥ १९ ॥

स्रोतसां नदीनां तार्थानां शुद्धजलानाम् । रूपान्तरविवक्षया त्रिपुरघ्न इत्यादि ॥ २० ॥ गहनानां गभीराणाम् ॥ २१ ॥ ''वसिष्ठोऽभ्यधिकस्तेषां मनुष्याणां पुरोधसाम्'' इत्युक्तेः मनुष्याणां पुरोधसामधिको वसिष्ठः । ब्रह्मिष्ठानां वैदिकानाम् । सेनान्यां सेनापतीनाम् । अग्रण्यां श्रेष्ठानाम् । अजो ब्रह्मा ॥ २२ ॥ ब्रह्मयज्ञः स्वाध्याययज्ञः । वाय्वग्न्यर्काम्बुवाचामात्मा नियामकः । शुचीनां शुद्धिकराणां शुचिः शुचिकरः ॥ २३ ॥

योगानामात्मसंरोधः मनोरोधः । मन्त्रो गुह्योक्तिः । मन्त्रगर्गादिषु गुह्योक्तिरिति यादवः । कौशलानां शुभहेतूनां आन्वीक्षिकी तत्वविद्या । ख्यातिवादिनां ज्ञानवादिनां मध्ये विकल्पो विशिष्टकल्पो

स्त्रीणां तु शतरूपाऽहं पुंसां स्वायम्भुवो मनुः ।
नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥ २५ ॥

धर्माणामस्मि सन्त्यागः क्षेमाणामबहिर्मतिः ।
गुह्यानां सततं मौनं मिथुनानां पुमानहम् ॥ २६ ॥

संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ।
मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ॥ २७ ॥

अहं युगानां च कृतं धीराणां देवलोऽसितः ।
द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥ २८ ॥

वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ।
किम्पुरुषाणां च हनूमान् विद्याध्राणां सुदर्शनः ॥ २९ ॥

---

जीवेशादिभेदवादी । "जीवेशादिविशेषं यो यथार्थेन प्रकल्पयेत् । कलिमारभ्य चाविष्णोराधिक्यादुत्तरोत्तरम् । नियमेनैव केनापि न हेयः स विकल्पकः । सर्वज्ञानिविशेषेभ्यः स ज्ञानी सर्वथाऽधिकः" इति वचनादुक्त एवार्थः । अत्रापि भेददृष्ट्याऽभिमानेन चेत्युक्तम् । विद्याऽऽत्मनि भिदाबोध इति च वक्ष्यति ॥ २४ ॥

"शतरूपा वरा स्त्रीणां पुंसामभ्यधिको मनुः । तयोरभ्यधिकौ नित्यमिन्द्राणीन्द्रौ शुभैर्गुणैः" इति । नारायण ऋष्यवतारः ॥ २५ ॥ धर्माणां सुकृतानाम् । क्षेमाणां प्राप्तरक्षाणाम् अबहिर्मतिः प्रत्यगात्मज्ञानम् । गुह्यानां गोप्यानां मौनं वाचंयमत्वमसम्प्रज्ञातसमाधिस्थत्वं वा ॥ २६ ॥ अनिमिषां कालावयवानाम् ॥ २७ ॥ धीराणां गम्भीराणाम् । व्यासानां वेदविभागं कुर्वाणानाम् । कवीनां वाग्मिनाम् ॥ २८ ॥

भगवताम् ऐश्वर्यादिषड्गुणवतां देवानाम् । "ऐश्वर्यादिगुणैः षड्भिः सामग्र्यात् सर्वदेवताः । भगवच्छब्दवाच्याश्च साक्षात्तु भगवान् हरिः । निरपेक्षं तु सामग्र्यं तस्य सर्वाधिकं यतः" इति वचनात् । त्वं तु भागवतेष्वहमित्यत्र तात्पर्यार्थोऽयम् । "सर्वभागवताधीश उद्धवो भगवत्प्रियः । तस्मादभ्यधिको जिष्णुः प्रियत्वे भक्तितो हरेः । तस्मादभ्यधिको रामः कृष्णा त्वभ्यधिका ततः । तस्या अभ्यधिको भीमो न तु तत्सदृशः क्वचित्" इत्यादिस्मृतिप्रमाणकः । "तु स्याद् वेदेऽवधारणे" इति च ॥ २९ ॥

**रत्नानां पद्मरागोऽस्मि पद्मकोशस्तु पेशसाम् ।**
**कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविष्ष्वहम् ॥ ३० ॥**

**व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ।**
**तितिक्षाऽस्मि तितिक्षूणां सत्वं सत्ववतामहम् ॥ ३१ ॥**

**ओजः सहोबलवतां कर्माहं विद्धि सात्वताम् ।**
**सात्वतां नवमूर्तीनामादिमूर्तिरहं पुरा ॥ ३२ ॥**

**विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ।**
**भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥ ३३ ॥**

**अपां रसश्च परमस्तेजिष्ठानां विभावसुः ।**
**प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥ ३४ ॥**

---

पेशसां मुकुलानां मध्ये ॥ ३० ॥ कितवानां दीव्यताम् । छलग्रहो द्यूतम् ॥ ३१ ॥

सहोबलवताम् ओजोऽस्मि । ओजोऽवष्टम्भबलयोरिति प्रमाणम् । सात्वतां भागवतानां कर्माहमिति विद्धि । सात्वतां पाञ्चरात्रिकाणां श्रियादिनवमूर्तीनां मध्ये आदिः स्वकीयमूर्तिरहम् । कीदृश्यस्ताः । पुरा पूर्वकाले, प्रथमतः पूज्या इत्यर्थः । ''विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च । सुपर्णस्य च सम्प्रोक्ताः प्रत्येकं नवमूर्तयः । पूज्याः सात्वततन्त्रेषु तत्राद्या मूर्तयो हरेः । प्रधानास्ता हि सर्वेषां मूर्तीनां हरिमूर्तयः । अभेदादेव मूर्तीनामेकमूर्तिश्च सा स्मृता'' इति मानम् । किञ्च ''स्वरूपतश्च गुणतो न विशेषः कथञ्चन । विष्णोस्तु नवमूर्तीनां पूजा च नवधेष्यते'' इति वचनादासां स्वरूपत्वं सिद्धम् । ''नारायणः परब्रह्म वासुदेवादिकास्तथा । नरसिंहवराहौ च परंज्योतिर्हरेर्नव । इन्दिरा च रमा लक्ष्मीर्हिरण्या गगना तथा । रक्ता रक्ततरा मूर्तिर्विभूतिश्च श्रियो नव । ब्रह्मा चतुर्मुखो धाता विधाता विधिरेव च । कर्ता विरिञ्चो भूतेशः शतानन्दश्च ता नव । धनञ्जयमृते चैव वायोस्तु नवमूर्तयः । शेषोऽनन्तो नरश्चैव लक्ष्मणो बल एव च । सङ्कर्षणो नीलवासा जगद्भक्षो जलेशयः । सुपर्णो गरुडश्चैव वैनतेयो महाशनः । नववर्णः पञ्चवर्णः पन्नगाशोऽमृताकरः । तथैव सर्ववेदात्मा सुपर्णो नवधा स्मृतः'' इति वचनान्मूर्तिभेदो ज्ञातव्यः ॥ ३२ ॥

ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ।
भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः ॥ ३५ ॥

गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणम् ।
आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ॥ ३६ ॥

पृथिवी वायुराकाश आपो ज्योतिरहं महान् ।
विकारः पुरुषोऽव्यक्तं रजः सत्वं तमः परः ।
अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्वविनिश्चयः ॥ ३७ ॥

मयेश्वरेण जीवेन गुणेन गुणिना विना ।
सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित् ॥ ३८ ॥

---

गन्धर्वाणां विश्वावसुः अप्सरसां पूर्वचित्तिः अहमस्मि । गन्धमात्रं गन्धाख्यविषयः ॥ ३३ ॥ तेजिष्ठानामर्चिष्मताम् ॥ ३४ ॥ प्रतिसङ्क्रमः संहारः ॥ ३५ ॥

गतिः पादविषयः । उक्तिर्वागिन्द्रियविषयः । उत्सर्गोऽपानस्य । उपादानं हस्तयोः । आनन्द उपस्थस्य । स्पर्शस्त्वगिन्द्रियस्य । अहमिति शेषः । आस्वादो जिह्वाकर्म । श्रुतिः कर्णयोः । अवघ्राणं घ्राणेन्द्रियस्य । सर्वेन्द्रियाणामिन्द्रियमिन्द्रियशक्तिप्रदः ॥ ३६ ॥

विकारो ब्रह्माण्डम् । पुरुषो ब्रह्माण्डान्तःस्थितः । अव्यक्तमचेतनप्रकृतिः । रजआदिकमप्यहम् । रजआदिस्थत्वाद् रजआदिनामा । ''सत्वादिनाम विष्णोस्तु सत्वादिस्थस्य केवलम् । जीवस्थस्य च तन्नाम जीवादेरुपचारतः''इत्यादिवचनात् । गत्यादितमःपर्यन्ताः पदार्थाः तत्स्वरूपं किम् । नेत्याह **पर इति** । परो विलक्षणो भिन्नः । तन्नियन्तृत्वात् तत्त्वेपदेशः । ''यस्य यस्य स्वभावो यस्तत्तन्नामा हरिः परः । नियामकः स्वभावस्य तत्तच्छब्दादिनामवान् । वैशेषाख्या विभूतिश्च विभूतिश्च स्वभावजा । द्विधा विभूतिर्विज्ञेया विष्णोस्तु परमात्मनः'' इति वचनात् । एतत्प्रसंख्यानम् एतेषामव्यक्तादीनां तत्वानां प्रकृष्टसंख्यानं यस्मात् तत् तथा ज्ञानं वा अहम् । भगवदविषयत्वादिदं न श्रद्धेयमिति नेत्याह **तत्त्वेति** । हरेरनारोपितं स्वरूपं निश्चाययतीति तत्वनिश्चयम् ॥ ३७ ॥

ननु गतिर्गतिमतामित्याद्युक्तषष्टचर्थेन पृथक्कृताः पदार्थास्तेषु तव व्याप्तिर्नास्तीत्यायातम् । तथा च पुरुषेणेदं व्याप्तमित्यादिश्रुतिविरोधः प्राप्त इति तत्राह **मयेति** । मया विना क्वचिदपि भावः पदार्थो

**सङ्ख्यानं परमाणूनां कालेन क्रियते मया।**
**न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥ ३९ ॥**

**तेजः श्रीः कान्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः।**
**वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥ ४० ॥**

**एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः।**
**मनोविकारा एवैते तथा वाचाऽभिधीयते ॥ ४१ ॥**

---

न विद्यत इत्यन्वयः। षण्णवत्यङ्गुलादिलक्षणपरिच्छिन्नपुरुषाकारेण त्वया विना कथं नास्तीत्युच्यत इति तत्राह **सर्वेणेति**। सर्वं समाप्नोति ततोऽसि सर्व इति स्मृतेः सर्वं व्याप्य तिष्ठता। ननु बहिरेव व्याप्तो न त्वन्तरिति मन्दाशङ्कां परिहरति **सर्वात्मनेति**। सर्वेषामन्तश्च व्याप्तत्वेन। ननु सर्वव्याप्तस्यापि व्योम्नः को विशेष इत्यतो वाऽऽह **सर्वात्मनेति**। सर्वनियामकेन। ननु ज्ञानादिगुणरहितस्य नियन्तृत्वं कथं युज्यते निर्गुणश्चेति श्रुतेरत्राह **गुणिनेति**। यः सर्वज्ञ इति श्रुतेः। ननु कदाचिद् दण्डिनो यथा दण्डाभावेनादण्डित्वं तथाऽस्यापि संभाव्यत इत्यत्राह **गुणेनेति**। विज्ञानमानन्दं ब्रह्मेति श्रुतेः। न केवलं गुणानामेव तदभिन्नत्वं (किन्तु) प्राणधारकत्वादिक्रियाणामपीति भावेनाह **जीवेनेति**। ननु गुणी चेन्न गुणः स चेन्न गुणीति युक्तिविरोध इति तत्राह **ईश्वरेणेति**। अघटितघटकेन। अनेन वैशेष्याख्या स्वभावजेति द्विधा विभूतिरुक्तेति ज्ञातव्यम्। ''वैशेष्याख्या विभूतिस्तु विभूतिश्च स्वभावजा। द्विधा विभूतिर्विज्ञेया विष्णोस्तु परमात्मनः'' इति वचनात्॥ ३८ ॥

एवं विभूतीनामनन्तत्वमुक्तं स्पष्टयति **संख्यानमिति**। कालेन सर्वगुणात्मकेन मया। असंख्यत्वात् तथा न क्रियते नाविज्ञानात्। ''अनन्तमिति वेत्तीशस्त्वनन्तं त्वन्तवत्तया। अनन्तस्य हि संख्याने न तु सर्वज्ञता भवेत्। अनन्तमपि वेत्तीशः प्रत्येकं च विशेषतः। सर्वज्ञत्वान्न संख्यानमनन्तस्य कुतो हि सा'' इति वचनात्॥ ३९ ॥

स्वभावजविभूतेर्वैशेष्याख्या कीदृशीत्यत्राह **तेज इति**। यत्र यत्र यस्मिन् यस्मिन् पुरुषे तेजआदयो गुणा विशिष्टाः सन्ति स मे अंशकः वैशिष्ट्यापादकमदंशयोगी। सौभगं शुभैकभागित्वम्। भग ऐश्वर्यादिकः। त्यागो निषिद्धत्यागः॥ ४० ॥

उपसंहरति **एता इति**। यथाऽन्यैर्वाचा जीवादीनां नामादिकम् अग्निमित्र इति अस्य नाम देवदत्त

**वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च ।**
**आत्मानमात्मना यच्छ न भूयः कल्प्यसेऽध्वने ।। ४२ ।।**

**यो वै वाङ्मनसी सम्यङ् न यच्छेद् धिया यतिः ।**
**तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ।। ४३ ।।**

**तस्माद् वचोमनःप्राणान् नियच्छेन्मत्परायणः ।**
**मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ।। ४४ ।।**

**।। इति षोडशोऽध्यायः ।।**

---

इति अस्याभिधानमित्यादिप्रकारेण सङ्केतितत्वेन क्रियते तथाऽन्यपदार्थेष्वेते सर्वे इन्द्रादिशब्दाः मनोविकाराः, मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरतीति श्रुतेः, मनःसङ्कल्पविषया न तु मुख्यवाचका इत्यर्थः ।। ४१ ।।

विभूतिज्ञानस्य फलितार्थमाह **वाचमिति** । यतः सर्वशब्दो मय्येव स्वतो मुख्यस्तस्मादितरविषयत्वं विहाय वागादिकं मय्येव कुर्वित्यर्थः । प्राणं सर्वचेष्टां मद्विषयां तद्द्वारेण इन्द्रियाणि मद्विषयाणि कृत्वा आत्मना प्रयत्नेन आत्मानं परमात्मानं लक्ष्यत्वेन (कृत्वा) आत्मानं जीवमपि सर्वात्मना यच्छ । नियम्यनियामकलक्षणसम्बन्ध(ज्ञान)शरस्त्वं पुनः संसराध्वरे न कल्प्यस इत्यन्वयः ।। ४२ ।।

वागादीनां स्वविषयाकरणे बाधकमाह **य इति** । यतिः प्रयत्नवान् । स्रवति निष्फलं भवति ।। ४३ ।।

मत्सर्वोत्तमत्वज्ञानमेव मुक्तिसाधनमित्युपसंहरति **तस्मादिति** । ततः ज्ञानसामग्र्यनन्तरं समाप्यते, संसार इति शेषः । ''वाङ्मनःप्राणबुद्ध्यादि नियच्छेत् केशवे परे । सर्वशब्दाभिधेयत्वं तस्य ज्ञात्वा विशेषतः । मुख्यवृत्त्याऽभिधेयत्वमन्येषां मनसो भ्रमात् । तस्मात् तथा चिन्तयतः स्रवेज्ज्ञानं यथा-तथम् । तस्मान्मनोवचःप्राणान् माधवैकपरायणान् । कुर्यात् तद्धि तपो ह्यग्र्यं महाधर्मोत्तमश्च सः'' इति, ''यच्छेत् वाङ्मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति तद् यच्छेच्छान्त आत्मनि'' इति वाक्यद्वयं तूक्तार्थे प्रमाणम् ।। ४४ ।।

**।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य षोडशोऽध्यायः ।।**

॥ अथ सप्तदशोऽध्यायः ॥

उद्धव उवाच -

यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ।
वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥ १ ॥

यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ।
स्वधर्मेणारविन्दाक्ष तन्ममाख्यातुमर्हसि ॥ २ ॥

पुरा किल महाबाहो धर्मं परमकं भवान् ।
यमाह त्वयि भक्तेभ्यो ब्राह्मणेभ्यश्च माधव ॥ ३ ॥

स इदानीं सुमहता कालेनामित्रकर्शन ।
प्रायोऽन्तर्भविता मर्त्यलोके प्रागनुशासितः ॥ ४ ॥

वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि ।
सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥

---

तत्तद्वर्णादिभिरनुष्ठीयमानेन स्वधर्मेण भगवद्भक्तिर्भवतीत्यतस्तद्वर्णविभागं तत्तत्स्वधर्मं च निरूपयत्यस्मिन्नध्यायद्वये । तत्रोद्धव उक्तार्थमनूद्य ज्ञातव्यांशं पृच्छति **यस्त्वयेति** । पूर्वं त्वया यस्त्वद्भक्तिलक्षणः, त्वद्भक्तिरेव लक्षणं सम्पद् यस्य स तथा, अभिहितः ॥ १ ॥

तेन स्वधर्मेणानुष्ठीयमानेन वर्णाश्रमाचारवतां नृणां यथा त्वयि भक्तिर्भवेत् तथा आख्यातुमर्हसीत्यन्वयः ॥ २ ॥ ननु मयोक्तो धर्मस्त्वया ज्ञातश्चेत् पुनः किमिति वक्तव्य इति तत्राह **पुरेति** ॥ ३ ॥ स धर्म इदानीं प्रायोऽन्तर्भविता तिरोभूतः ॥ ४ ॥

अस्य धर्मस्य वक्ता त्वदन्यो नास्तीत्याह **वक्तेति** । ते तव धर्मस्य । विरिञ्चोऽस्तीत्यत्राह **सभायामिति** । त्वत्प्रसादं विना विरिञ्चोपि न वक्ष्यतीत्यपिपदार्थः । ''विना प्रसादं विष्णोर्न धर्मं ब्रह्माऽभिवक्ष्यति । तत्प्रसादेन वक्तुं तु ब्रह्मा शक्ष्यति नापरः'' इति वचनात् । यत्र सभायां कलाः प्राणाद्याः मूर्तिधराः अङ्गोपाङ्गाद्यवयववन्तः । ''स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च । ता इमाः षोडशकलाः पुरुषायणाः'' इति श्रुतेः ॥ ५ ॥

कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन ।
त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥ ६ ॥

त्वमतः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः ।
यथा यस्य विधीयेत तथा वर्णय मेऽच्युत ॥ ७ ॥

बादरायणिरुवाच -

इत्थं तु भृत्यमुख्येन पृष्टः स भगवान् हरिः ।
प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥ ८ ॥

श्रीभगवानुवाच -

धर्म्य एष तव प्रश्नो नैश्रेयसकरो नृणाम् ।
वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ९ ॥

आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ।
कृतकृत्याः प्रजा जात्या तस्मात् कृतयुगं विदुः ॥ १० ॥

वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ।
उपासते तपोनिष्ठा हंसा मां मुक्तकिल्बिषाः ॥ ११ ॥

---

यदा ब्रह्मसभायामपि त्वदृतेऽन्यो नास्ति किमुत भूतल इति भावेनाह **कर्त्रेति** । भवता त्यक्ते महीतले विनष्टं धर्मं कः पुरुषः प्रवक्ष्यतीत्यन्वयः । कर्तेति पाठे यो भवान् धर्मस्य कर्ता तेन भवता (इत्यर्थः) ॥ ६ ॥ ततः किमत्राह **त्वमिति** । यतोऽन्यो नास्ति अतस्त्वद्भक्तिलक्षणो धर्मो यस्य यथा विधीयेत तत् तथा मे वर्णयेत्यन्वयः ॥ ७ ॥

धर्म्यः धर्मविषयः ॥ ८-९ ॥ नृणां वर्णो हंस इति हंसाभिधानः कृतयुगं पर्याप्तयुगम् ॥ १० ॥

अग्रे कृते प्रकृष्टो नवो भगवद्गुणानां येन स प्रणव ओङ्कारस्तद्रूपः, तद्व्याख्यानरूपो वेद एक एव न ऋगादिभेदेन विभक्तः । ''ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति सर्वमोङ्कार एव'' इति श्रुतिः । तस्य विषयः क इत्यत उक्तम् **धर्म इति** । स क इत्यतः **अहमिति** । किंविशिष्टः । वृषरूपधृक् । ''चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य'' इत्यादि-श्रुतिः । एवंविधे त्वयि किं प्रमाणमत्राह **उपासत इति** । हंसा इत्यस्य विवरणं मुक्तकिल्बिषा इति ॥ ११ ॥

**त्रेतामुखे महाभाग प्राणान्मे हृदयात् त्रयी।**
**विद्या प्रादुरभूत् तस्या अहमासं त्रिवृन्मुखः ॥ १२ ॥**

**विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः।**
**वैराजात् पुरुषाज्जाता य आत्माचारलक्षणा ॥ १३ ॥**

**गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम।**
**वक्षःस्थलाद् वनेवासो न्यासः शीर्षण्यवस्थितः ॥ १४ ॥**

**वर्णानामश्रमाणां च जन्मभूम्यनुसारतः।**
**आसन् प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः ॥ १५ ॥**

---

अधुना त्रेतायुगे वेदादिप्रवर्तनप्रकारमाह **त्रेतामुख** इति। त्रेतामुखे त्रेताप्रारम्भे। मे मम हृदयात् प्रेष्ठात्। अना सरस्वती तस्याः प्रकृष्टो विरिञ्चः (प्राणः), तस्मात् प्राणात्[१] त्रयी त्रित्वसंख्याविशिष्टत्वेन विद्या वेदविद्या प्रादुरभूत्। त्रीन् वेदान् वृण्वत इति त्रिवृतो ब्राह्मणाः, त एव मुखं द्वारं यस्य स तथा। अहं तस्या विद्याया आसम्। विप्रद्वारा त्रय्या अभिव्यक्तोऽहमित्यर्थः। विप्राणां तत्वोपदेष्टृत्वात् ॥ १२ ॥

तव विप्रमुखत्वं किं विशिष्योच्यते क्षत्रादिमुखत्वं किं न स्यादित्याशंक्य मम सर्वावयवतोऽपि मुखस्य मुख्यत्वाद् वागधिकरणत्वात् तत्वज्ञापनस्य वागधिकारत्वाच्चेति भावेनाह **विप्रेति**। तव कस्माद् रूपाद् विप्राद्युत्पत्तिरिति तत्राह **वैराजादिति**। वैराजाद् ब्रह्मान्तर्यामिणः। ये आत्माचारलक्षणाः स्वस्वविहिताचार एव लक्षणं येषां ते तथा ॥ १३ ॥

इदानीमाश्रमोत्पत्तिस्थानमाह **गृहाश्रम इति**। वनेवासः वानप्रस्थः ॥ १४ ॥

ममावयवानां विशेषाभावेपि मन्दमतिमनुसृत्य जन्मस्थानमनुसृत्य वर्णादीनां स्वभाव-विशेषोऽस्तीत्याह **वर्णानामिति**। प्रकृतयः स्वभावाः। स्वभावभेदा नीचादिशब्दवाच्याश्चेत्याह **नीचैरिति**। नीचप्रकृतिः शूद्रः, नीचोत्तमो वैश्यः, उत्तमः क्षत्रियः, उत्तमोत्तमः विप्रः, नीचनीचः अन्तेऽवसायी ॥ १५ ॥

---

१. प्राणात् पूर्वकल्पे मुख्यप्राणात्, ब्रह्मणः इत्यर्थ इति सुधीन्द्रतीर्थाः।

**शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम्।**
**मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १६ ॥**

**तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः।**
**स्थैर्यं ब्रह्मण्यमैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ १७ ॥**

**आस्तिक्यं दाननिष्ठा च अदम्भो विप्रसेवनम्।**
**अतुष्टिरर्थोपचये वैश्यप्रकृतयस्त्विमाः ॥ १८ ॥**

**शुश्रूषणं द्विजगवां देवानां चाप्यमायया।**
**तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः ॥ १९ ॥**

**अशौचमनृतं स्तेयं नास्तिक्यं शुष्कनिग्रहः।**
**कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम्॥ २० ॥**

---

नीचैरित्यादि विप्रादिक्रमविषयं निवारयितुं विप्रादिस्वभावलक्षणमाह **शम इत्यादिना** ॥ १६ ॥ तेजः प्रभावः। बलं शक्तिः। ''अर्थहानौ च बन्धूनां वियोगेष्वपि सम्पदि। तयोः प्राप्तौ च सर्वस्य चित्तस्य स्थापनं धृतिः'' ॥ १७ ॥

''धर्माधर्मेषु विश्वासो यस्तदास्तिक्यमुच्यते। न्यायार्जितं धनं धान्यमन्यद् वा यत् प्रदीयते। अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम्'' । अर्थोपचये अर्थार्जने । अतुष्टिः अलंबुद्ध्यभावः ॥ १८-१९ ॥

''शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां तथा बाह्यं मनःशुद्धिरथापरम्'' इत्येतद्विपरीतमशौचम्। अनृतमयथार्थभाषणम्, जीवब्रह्मैक्यभाषणमित्यर्थः। ''कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहः। अस्तेयमिति सम्प्रोक्तमृषिभिस्तत्वदर्शिभिः'' इत्येतदन्यत् स्तेयम्, परकीयब्रह्मत्वमात्मीयत्वेन वचनमित्यर्थः। शुष्कविग्रहः निष्फलः कलहः, शुक्तिरजतं निदर्शनीकृत्य जगन्मिथ्येति कथालक्षणः। कामः निषिद्धविषयाभिलाषः, लक्ष्मीपतिरहमित्याद्यभिलाषलक्षण इत्यर्थः। क्रोधः तत्वोक्तावसहिष्णुता। तर्षः अनलंबुद्धिः, ब्रह्मगुणदूषणोक्तावित्यर्थः ॥ २० ॥

**अहिंसा सत्यमस्तेयमकामक्रोधलोभता ।**
**भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥**

**द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः ।**
**वसन् गुरुकुले दान्तो ब्रह्माधीयीत वाग्यतः ॥ २२ ॥**

**मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् ।**
**जटिलोऽधौतदन्तश्च वासः पीठकुशान् दधत् ॥ २३ ॥**

**स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ।**
**न छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥ २४ ॥**

**रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ।**
**अवकीर्णोऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥ २५ ॥**

---

साधारणधर्ममाह **अहिंसेति** । ''कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा । अक्लेशजननं प्रोक्तमहिंसा त्विति योगिभिः'' । सत्यभूतं हितं प्रोक्तं न यर्थार्थाभिभाषणम् । असत्यमपि तत् सत्यमुत्तमानां हि यद् वचः'' । विष्णुवैष्णवविषये द्रव्यत्यागे लोभाभावः । अन्यत्र लोभो गुणः ॥ २१ ॥

आनुपूर्व्यात् अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिश्रुत्या विहितप्रकारेणेत्यर्थः । उपनयनलक्षणं द्वितीयं जन्म प्राप्य । ब्रह्म त्रयीसञ्ज्ञम् । दान्तः उपरतो विष्णुभक्त इत्यर्थः । वाग्यतो मितभाषणः ॥ २२ ॥ मेखलादीन् वासआदींश्च दधत् ॥ २३ ॥

स्नानादिषु वाग्यतः काष्ठमौनवान् । जपे उच्चारे मूत्रोत्सर्गे पुरीषोत्सर्जने च । ''गुरुणा चोपदिष्टोऽपि वेदो ब्राह्मणवर्जितः[१] । विधिनोक्तेन मार्गेण मन्त्राभ्यासो जपः स्मृतः । अधीत्य वेदसूत्रे वा पुराणे सेतिहासके । यदेष्वध्ययनं तच्च तदभ्यासो जपः स्मृतः'' इति ॥ २४ ॥

नावकिरेत् नोत्सृजेत् । ''प्रसन्नगुरुणा पूर्वमुपदिष्टोप्यनुज्ञया । धर्मार्थमात्मसिद्ध्यर्थमुपायग्रहणं व्रतम् । प्राणापानसमायोगः प्राणायम उदीरितः'' । ब्रह्मव्रतधरः ब्रह्मचर्यव्रतधरः । ''कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते'' । स्वप्ने सुन्दर्यादिदर्शनेन यदृच्छया

---

१. वेदब्राह्मणवर्जितः, वेदबाह्यविवर्जित, वेदो बाह्यविवर्जितः, इति पाठा अन्यान्यकोशेषु ।

अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरान् नमेत् ।
समाहित उपासीत सन्ध्ये च यतावाग् जपेत् ।। २६ ।।

आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ।। २७ ।।

सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ।
यच्चान्यदप्यनुज्ञात उपभुञ्जीत संयतः ।। २८ ।।

शुश्रूषमाण आचार्यं सदोपसीत नीचवत् ।
यानशय्यासनस्थाने नातिदूरः कृताञ्जलिः ।। २९ ।।

एवंवृत्तो गुरुकुले वसेद् भोगविवर्जितः ।
विद्या समाप्यते यावद् बिभ्रद् व्रतमखण्डितम् ।। ३० ।।

यद्यसौ च्छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् ।
गुरवे विन्यसेद् देहं स्वाध्यायार्थे बृहद्व्रतः ।। ३१ ।।

अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ।
अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ।। ३२ ।।

---

रेतोऽवकीर्य अप्स्ववगाह्य निमज्य यतासुः प्राणायामोपेतः त्रिपदीं गायत्रीं जपेदित्यन्वयः । "स्वप्नेपि रेतःस्खलने प्रायश्चित्तं विधीयते" इति स्मृतेः ।। २५ ।।

अतो देवा अवन्तु न इत्यादेरग्न्यर्कव्यतितिरक्तसुरा अपि नन्तव्या इत्यर्थः ।। २६ ।।

स्रक्चन्दनादिभोगवर्जितः । एवंवृत्त इत्येकं पदम्, उक्तसदाचारनिरत इत्यर्थः । कियन्तं कालमेवं वास इति तत्राह **विद्येति** ।। २७-३० ।।

असौ बृहद्व्रतः ब्रह्मचारी यदि छन्दसां वेदानां लोकमारोक्ष्यन् आरोढुकामो भवति स्वाध्यायैकप्रयोजनं देहं गुरवे विन्यसेत् गुरुशुश्रूषां कुर्यादित्यर्थः । कीदृशं (लोकम्) । ब्रह्मणाऽधिकृतं विष्टं प्रविष्टं पाति रक्षतीति ब्रह्मविष्टपं सत्यलोकमित्यर्थः ।। ३१ ।।

कस्मिन्नधिष्ठानविशेषे त्वदुपासनम् । अत्राह **अग्नाविति** । आत्मनि सूर्ये हृदये वा ।

**स्त्रीणां निरीक्षणस्पर्शसल्लापक्ष्वेलनादिकम् ।**
**प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥ ३३ ॥**

**शौचमाचमनं स्नानं सन्ध्योपासनमार्जवम् ।**
**तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥ ३४ ॥**

**सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन ।**
**मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३५ ॥**

**एवं ब्रह्मव्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ।**
**मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३६ ॥**

**अथानन्तरमावेक्ष्यन् यथाजिज्ञासितागमः ।**
**गुरवे दक्षिणां दत्वा स्नायाद् गुर्वनुमोदितः ॥ ३७ ॥**

**गृहं वनं चोपविशेत् प्रव्रजेद् वा द्विजोत्तमः ।**
**आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥ ३८ ॥**

---

अग्नावित्यादिसप्तम्या भेदे निर्धारितेपि सर्वथैक्येनोपास्तिर्न कर्तव्येति निश्चयार्थमाह **अपृथग्धीरिति** । अयथावस्तुज्ञानं पृथग्धीः यस्य नास्ति सोऽपृथग्धीः, अग्न्याद्यैक्यविषयमिथ्याज्ञानरहित इत्यर्थः । दृष्टफलमाह **ब्रह्मवर्चस्वीति** ॥ ३२ ॥

अप्रतिपक्षस्यानुमानस्येव विहितोपासनस्याभीष्टसाध्यसिद्धौ सामर्थ्यं स्यादित्यतः प्रतिपक्षं प्रतिक्षिपति[१] **स्त्रीणामिति** । क्ष्वेलनं जिह्वास्फोटो नर्मवचनं वा । स्मरणादिकमादिशब्दगृहीतम् । अगृहस्थो ब्रह्मचारी । अग्रतः प्रथमतः ॥ ३३ ॥

सर्वाश्रमसाधारणधर्ममाह **शौचमित्यादिना** ॥ ३४ ॥ सर्वभूतेषु मद्भावः मम व्याप्तिलक्षणसत्ता ॥ ३५ ॥ ब्रह्मचर्यानुष्ठानफलमाह **एवमिति** । तीव्रतपसा दग्धः कर्माशयः बाह्यान्तःकरणं यस्य स तथा । अत एवामलः संसारमलमुक्तो भवति ॥ ३६ ॥

---

१. अस्पष्टेयमवतारिका । अनुमानस्येव अप्रतिपक्षस्य विहितोपासानस्य अभीष्टसाध्यसिद्धौ सामर्थ्यं इत्यन्वयः ।

**गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ।**
**यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ॥ ३९ ॥**

**इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् ।**
**प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ४० ॥**

**प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् ।**
**अन्याभ्यां चैव जीवेत शिलैर्वा दोषदृक् तयोः ॥ ४१ ॥**

**ब्राह्मणस्य हि देहोयं क्षुद्रकामाय नेष्यते ।**
**कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥ ४२ ॥**

**शिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः ।**
**मय्यर्पितात्मा गृह एव तिष्ठन् नातिप्रसक्तः समुपैति शान्तिम् ॥ ४३ ॥**

**समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् ।**
**तानुद्धरिष्ये नचिरादपदो नौरिवार्णवात् ॥ ४४ ॥**

**सर्वाः समुद्धरेद् राजा पितेव व्यसनात् प्रजाः ।**
**आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥ ४५ ॥**

**एवंविधो नरपतिर्विमानेनार्कवर्चसा ।**
**विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥ ४६ ॥**

---

अथेति प्रमेयान्तरारम्भविषयः । ब्रह्मचर्याश्रमानन्तरं आवेक्ष्यन् गृहस्थाश्रमं प्रवेष्टुकामः स्नायात् स्नातको भवेत् ॥ ३७ ॥ द्विजोत्तमेन अनाश्रमतया न स्थेयमित्याह **गृहमिति** ॥ ३८ ॥ गृहार्थी चेत् कीदृशीमुद्वहेदत्राह **गृहार्थीति** । यां सवर्णामनुक्रमादिति पाठः ॥ ३९ ॥

द्विजन्मनां ब्राह्मणक्षत्रियवैश्यानाम् । इज्या यजनम् ॥ ४० ॥ प्रतिग्रहं तपस्तेजोयशोनुदं मन्यमानः पुरुषः अन्याभ्यां याजनाध्यापनाभ्यां जीवेतेत्यन्वयः । तयोर्याजनाध्यापनयार्दोषदृक् शिलैः शिलोञ्छवृत्त्या वा जीवेत् ॥ ४१ ॥

शिलोञ्छवृत्तेः क्लेशरूपत्वात् किमिति सा प्रशस्तेति विधीयत इति तत्राह **ब्राह्मणस्येति** । क्षुद्रकामाय

सीदन् विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत्।
खड्गेन वाऽऽपदाक्रान्तो न श्ववृत्त्या कथञ्चन ॥ ४७ ॥

वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि।
चरेद् वा विप्ररूपेण न श्ववृत्त्या कथञ्चन ॥ ४८ ॥

शूद्रवृत्तिं भजेद् वैश्यः शूद्रो वै कारुकक्रियाम्।
कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥

वेदाध्यायी स्वधास्वाहाबल्यन्नाद्यैर्यथोदयम्।
देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥ ५० ॥

यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा।
धनेनापीडयन् भृत्यान् मां यजेतान्वहं विभुम् ॥ ५१ ॥

कुटुम्बेषु न सज्जेत न प्रमाद्येत् कुटुम्ब्यपि।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५२ ॥

---

अल्पभोगाय ॥ ४२ ॥ शिलोञ्छवृत्तेः सुखसाधनत्वात् सैव निषेव्येति भावेनाह **शिलोञ्छेति**। शान्तिं मोक्षम् ॥ ४३ ॥ अपदः पदहीनान्। आपद इति वा (पाठः) ॥ ४४-४६ ॥

आपद्धर्ममाह **सीदन्निति**। दारिद्र्येण सीदन् नश्यन्। वणिजां वृत्त्या कथमापत्तरणमत्राह **पण्यैरिति**। आपदाक्रान्तः खड्गेन वा क्षत्रधर्मेणेत्यर्थः। श्ववृत्त्या नीचसेवया ॥ ४७ ॥ वैश्यवृत्त्या गोरक्षणादिलक्षणया ॥ ४८ ॥

कारुकक्रियां कटादिक्रियाम्। सम्पदि नैवेत्याह **कृच्छ्रादिति** ॥ ४९ ॥ गृहस्थधर्ममाह **वेदेत्यादिना**। यथोदयम्, सम्पदामिति शेषः। मद्रूपाणि मत्प्रतिमास्थानीयानि। ''प्रतिमावद् हरे रूपं तिर्यङ्नरसुरादयः। साक्षाद्रूपाणि मत्स्यादीन्यभिन्नान्येव सर्वदा'' इति वचनात् ॥ ५० ॥

शुक्लेन शुद्धेन ॥ ५१ ॥ मद्यजनतात्पर्ये इदमेव प्रथमं साधनमित्याह **कुटुम्बेष्विति**। अदृष्टं स्वर्गादिकं दृष्टवद् गृहादिवत् नश्वरं पश्येत् ॥ ५२ ॥

पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः ।
अनुदेहं भवन्त्येते स्वप्नो निद्रानुगो यथा ॥ ५३ ॥

इत्थं परिमृशन् युक्तो गृहेष्वतिथिवद् वसेत् ।
न गृहैरनुबध्येत निर्ममो निरहंकृतिः ॥ ५४ ॥

कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् ।
तिष्ठेद् वनं वोपविशेत् प्रज्ञावान् वा परिव्रजेत् ॥ ५५ ॥

यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ।
स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥ ५६ ॥

अहो मे पितरौ वृद्धौ भार्या बालात्मजा सती ।
अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः ॥ ५७ ॥

एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् ।
अतृप्तस्ताननुध्यायन् मृतोऽन्धं विशते तमः ॥ ५८ ॥

॥ इति सप्तदशोऽध्यायः ॥

---

कुटुम्बेष्वसङ्गतया प्रवर्तनोपायमाह **पुत्रेत्यादिना**। पान्थसङ्गम इति लुप्तोपमा। पान्थानां सङ्गमवत् पुत्रादीनां **सङ्गम इति**। एते पुत्रादयो देहमनु भवन्त्येव। अरुच्या दृष्टान्तान्तरमाह **स्वप्न इति**। पान्थसङ्गमः क्वचिद् भवति क्वचिन्न, न तथा स्वप्नः अपि तु निद्रामनुगत एव ॥ ५३ ॥ मयि मनसा युक्तः ॥ ५४ ॥

आश्रमादाश्रमं गच्छेदित्येवं विधिः काल्पनिक इत्याह **कर्मभिरिति** ॥ ५५ ॥

एवं मुक्तिसाधनमुक्त्वेदानीं संसारप्राप्तिं ततोऽनर्थं च वक्ति **यस्त्विति**। ममाहमित्यन्यथाज्ञानेन ॥ ५६ ॥ गृहाशया गृहेष्वतितृष्णया। आशा दिगतितृष्णयोरिति (अभिधानम्) ॥ ५७-५८ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य सप्तदशोऽध्यायः ॥**

## ।। अथ अष्टादशोऽध्यायः ।।

**श्रीभगवानुवाच -**

**वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ।**
**वनमेव वसेच्छान्तस्तृतीयं भागमायुषः ।। १ ।।**

**कन्दमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत् ।**
**वसीत वल्कलं वासस्तृणपर्णाजिनानि च ।। २ ।।**

**केशलोमनखश्मश्रुमलानि बिभृयाद् व्रती ।**
**न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ।। ३ ।।**

**ग्रीष्मे तप्येत पञ्चाग्निर्वर्षास्वासारषाड् जले ।**
**आकण्ठमग्नः शिशिर एवंवृत्तस्तपश्चरेत् ।। ४ ।।**

**अग्निपक्वं समश्नीयात् कालपक्वमथापि वा ।**
**उलूखल्यश्मकुट्टो वा दन्तोलूखल एव वा ।। ५ ।।**

**स्वयं सञ्चिनुयात् सर्वमात्मनो वृत्तिकारणम् ।**
**देशकालबलाभिज्ञो नाददीतान्यदाहृतम् ।। ६ ।।**

**वन्यैश्चरुपुरोडाशान् निर्वपेत् कालचोदितान् ।**
**न तु श्रौतेन पशुना मां यजेत वनाश्रमी ।। ७ ।।**

---

वने चोपविशेदित्युक्तवानप्रस्थप्रवृत्तिप्रकारमाह **वनमित्यादिना**। तृतीयभागमायुषः चतुर्मासाधिकं त्रयस्त्रिंशद्वर्षपरिमितम् ।। १ ।। वन्यैः वनभवैः ।। २ ।। व्रती वानप्रस्थव्रतवान् । धावनं पलायनं तेवनं वा[1] ।। ३ ।। वर्षासु वर्षर्तौ आसारषाट् वेगवर्षमपि सहत इति ।। ४ ।।

---

१. धावनं प्लवनमिति सुधीन्द्रतीर्थाः ।

अग्निहोत्रं च दर्शं च पूर्णमासं च पूर्ववत्।
चातुर्मास्यानि च मुनेराख्यातानि च नैगमैः ॥ ८ ॥

एवं चीर्णेन तपसा मुनिर्धर्मानसन्ततः।
मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ ९ ॥

यस्त्वेवं कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत्।
कामायाऽल्पीयसे युञ्ज्याद् बालिशः कोऽपरस्ततः ॥ १० ॥

यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः।
आत्मन्यग्निं समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥ ११ ॥

यदा धर्मविपाकेषु लोकेषु निरयात्मसु।
विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत् ततः ॥ १२ ॥

इष्ट्वा यथोपदेशं मां दत्वा सर्वस्वमृत्विजे।
अग्नीन् स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥ १३ ॥

विप्रस्य वै संन्यसतो देवा दारादिरूपिणः।
विघ्नं कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात् परम् ॥ १४ ॥

---

कालपक्वं कदलीफलादि। उलूखली उलूखलावहतनीवारादिना वर्तमानः। अश्मकुट्टः अश्मना चूर्णितपिष्टादिवृत्तिः। दन्ता एवोलूखलो यस्य स तथा, दन्तचूर्णितभोज्य इत्यर्थः। गजदन्तनिर्मितोलूखलो वा ॥ ५ ॥ सञ्चिनुयात् सङ्ग्रहं कुर्यात्। अन्यदाहृतं अन्येनानीतम् ॥ ६ ॥ कालचोदितान् अस्मिन् काल इदमिति विहितान् ॥ ७ ॥ पूर्ववत् गृहस्थाश्रमे यथा, तथा वनेऽग्निहोत्रादिकं कुर्यादिति शेषः नैगमैः कल्पशास्त्रज्ञैः ॥ ८ ॥

तपोमयं ज्ञानमयम्। ऋषीणां लोकान्मामुपैति ॥ ९ ॥ एवं कृच्छ्रेण चीर्णं तपो मदपरोक्षाय नियोक्तव्यम्, अन्यथा युञ्जानः सर्वहास्य इत्याह **यस्त्विति**। निःश्रेयसं मदपरोक्षलक्षणं पुरुषार्थसाधनम् ॥ १० ॥ स्वाश्रमविहितकर्मकरणासमर्थश्चेत् किं कुर्यादत्राह **यदेति** ॥ ११ ॥ क्रमप्राप्तं प्रव्रजनपूर्वकं यतिधर्ममाह **यदेति**। धर्मविपाकेषु धर्मफलेषु दुःखहेतुत्वान्निरयात्मसु नरकसमानरूपेषु ॥ १२ ॥

प्रव्रजने इत्थंभावमाह **इष्ट्वेति**। प्राणे अन्तर्यामिणि ॥ १३ ॥ देवान् सम्यक् सम्पूज्य तेभ्योऽनुज्ञामादायैव संन्यासः कार्योऽन्यथा ते दारादिषु सन्निधाय विघ्नं विधायाधः पातयन्तीत्याशयेनाह

बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम्।
त्यक्तं न दण्डपात्राभ्यामन्यत् किञ्चिदनापदि॥ १५॥

दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम्।
सत्यपूतं वदेद् वाक्यं मनःपूतं समाचरेत्॥ १६॥

मौनानीहानिलायामदण्डो वाग्देहचेतसाम्।
न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद् यतिः॥ १७॥

भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत्।
सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता॥ १८॥

बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः।
विभज्य याचितं शेषं भुञ्जीताशेषमाहृतम्॥ १९॥

एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः।
आत्मक्रीड आत्मरत आत्मवान् समदर्शनः।
विविक्तक्षेमशरणो मद्भावविमलाशयः॥ २०॥

आत्मानं चिन्तयेदेकमभेदेन मया मुनिः॥ २१॥

---

**विप्रस्येति**। वा इत्यनेन ''असम्पूज्य न्यसिष्णुं तु देवा वै पातयन्त्यधः। सुसम्पूज्य न्यसिष्णोस्तान् देवा एवानुजानते। अथवा तद्यशोवृद्ध्यै विघ्नन्तीव पुनःपुनः। तात्पर्याद् विघ्नितो देवैर्नोत्थातुं शक्नुयात् क्वचित्'' इति मानं सूचयति॥ १४॥

मौनेन वाग्दण्डः, अनीहया निषिद्धाचरणत्यागेन देहदण्डः, अनिलायामेन चेतोदण्डः॥ १५॥

आत्मना परमात्मना क्रीडा यस्य स तथा। आत्मनो रतं सुखं यस्य स तथा। आत्मवान् वशीकृत-मनाः। विविक्तं क्षेमं क्षेत्रं शरणं यस्य स तथा। यद्वा पुरुषार्थोत्तममोक्षशरणः। मद्भावेन मद्भक्त्या विमलाशयो विशुद्धबुद्धिः॥ १६-२०॥

तस्योपास्तिप्रकारमाह **आत्मानमिति**। मुनिर्यतिः आत्मानं परमात्मानम् एकं प्रधानं सर्वोत्तमं चिन्तयेत्। किञ्च मया अभेदेन, उपलक्षणमेतत्, मत्स्याद्यवताराभिन्नत्वेन, स्वगतभेदराहित्येन,

**अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ।**
**बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥**

**तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ।**
**विरक्तः क्षुल्लकामेभ्यो लब्ध्वाऽऽत्मनि सुखं महत् ॥ २३ ॥**

**पुरग्रामव्रजान् सार्थान् भिक्षार्थं प्रविशंश्चरेत् ।**
**पुण्यदेशसरिच्छैलवनाश्रमवर्ती महीम् ॥ २४ ॥**

---

मया लक्ष्म्या सहेति वा । अत्र किं मानम् । अत्राप्युत्तरं **मयेति** । पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यत इति श्रुतिप्रमाणेन । क्षेत्रज्ञः पुरुषो ह्यात्मेति मया सिद्धमात्मानं स्वाभेदेन न चिन्तयेत् किन्तु एकमन्यं चिन्तयेत् । एके मुख्यान्यकेवला इति (अभिधानम्) । अन्यमीशमस्य महिमानमिति वीतशोक इति मया हेतुना । यद्वा आत्मा वा इदमेक अग्र आसीदिति श्रुत्या मया सिद्धमात्मानम् एकं मुख्यं चिन्तयेत् । अभेदे अभेदविषये जीवैनैक्यं न चिन्तयेदित्यर्थः[1] । सत्यं भिदा सत्यं भिदेति श्रुत्याख्यमया सिद्धत्वात् । ''लक्ष्मीप्रमाणयोर्मा स्यान्निषेधे चापि कीर्त्यते'' इत्यभिधानम् ॥ २१ ॥

भगवदुपास्ताविदमन्तरङ्गमित्याह **अन्वीक्षेतेति** । ज्ञाननिष्ठया आत्मनः स्वस्य बन्धं मोक्षं च आत्मनो हरेः सकाशादन्वीक्षेत । नन्वयं हरिरस्य बन्धमोक्षौ कथमापादयतीति तत्राह **बन्ध इति** । इन्द्रियाणां विषयेषु विक्षेपः प्रसारणं बन्धः स्यात् । एषामिन्द्रियाणां संयमो निग्रहः, विषयेभ्य आहृत्य मयि स्थापनलक्षणः, मोक्ष इति ॥ २२ ॥

यत एवं तस्मादित्थं विधेयमित्याह **तस्मादिति** । कर्मेन्द्रियाणामैक्येन[2] मनसा सह षड्ज्ञानेन्द्रियाणि । आत्मनि भावि महत् सुखं लब्ध्वा तुच्छकामेभ्यो विरक्तो भूत्वा, विषये निरपेक्षत्वेनात्मनि सुखं लब्ध्वेति वा ॥ २३ ॥ पुण्यशब्दो देशादिभिः पृथक् संबद्ध्यते ॥ २४ ॥

---

१. अभेदे न मया मुनिरिति च्छेद इदानीम् । मया सिद्धमात्मानमेकं मुख्यं चिन्तयेत् । अभेदे, विषयसप्तमीयम्, अभेदविषये जीवैनैक्यमिति फलितार्थः, न चिन्तयेदिति वाक्यभेदेन योजना ।

२. केनैक्यं विवक्षितमिति न स्पष्टम् ।

**वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ।**
**संसिद्ध्यत्याश्वसंमोहः शुद्धसत्वः शिलान्धसा ॥ २५ ॥**

**नैतद् वस्तुतया पश्येद् दृश्यमानं विनश्वरम् ।**
**असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥ २६ ॥**

**यदेतदात्मनि जगन्मनोवाक्प्राणसंभृतम् ।**
**सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत् ॥ २७ ॥**

---

पदं स्थानम् । अभीक्ष्णमित्यनेन पुरादिषु विकल्प इति ज्ञायते । वानप्रस्थाश्रमस्थानेषु नित्यं भैक्ष्याचरणस्य किं क्षिप्रफलमित्यत आह **संसिध्यचतीति** । शिलान्धसा शिलाविहितान्नेन शुद्धं सत्वमन्तःकरणं यस्य स तथा । असंमोहः मिथ्याज्ञानरहितः । आशु संसिद्ध्यति अपरोक्षज्ञानं प्राप्नोति ॥ २५ ॥

संसिद्धस्य दर्शनप्रकारं विधत्ते **नेति** । एतद् जगत् । वस्तुतया परब्रह्मत्वेन । अत्र हेतुः **विनश्वरं दृश्यमानमिति** । एवं पश्यतो वैराग्यानुसन्धानं कर्तव्यमित्याह **असक्तचित्त इति** । इहामुत्र असक्तचित्तः स्यात् । ततः किम् । अत्राह **विरमेदिति** ।चिकीर्षितात् कर्तुमिष्टात् कर्मादेर्विरमेत्, कृतकृत्यो भवेदित्यन्वयः ॥ २६ ॥

एतदेव स्पष्टयति **यदेतदिति** । मनोवाक्प्राणैः सम्भृतं सम्पन्नम् आत्मनि हरौ स्थितम् । ऋचो अक्षरे परमे व्योमन्नित्यादिश्रुतेः । यदेतत् प्रत्यक्षगं जगत् सर्वं मायेति तर्केण अचेतनप्रकृतिकृतत्वेन । अनुष्ठितानुगुणमायातीत्यायः फलम्, तन्मा नेति, माशब्दो निषेधार्थः । तथा च मायेति निष्फल-मुच्यते । मायमिति वक्तव्ये मायेति स्त्रीलिङ्गत्वेन वचनमत्यन्तास्वातन्त्र्यप्रकटनायेत्यतोऽस्य ज्ञानेन प्रयोजनाभावात् नैतत् सुखाय स्यादिति त्यक्त्वा स्वतन्त्रत्वात् स्वो विष्णुः, अन्यसंवादराहित्येन मुक्तिफलदातृत्वात्, तत्स्थः तदेकशरणो भूत्वा तत् जगत् न स्मरेत् विष्णुमेव प्रयोजकं स्मरेदित्यन्वयः। यदि विष्णुः स्वतन्त्रो न स्यात् तर्ह्येतज्जगत् तन्नियतं न स्यात्, तच्चेन्नित्यसुखं स्यात्, न चैवम्, तस्मात् स एव तथैवेत्यादितर्केण । विश्वं मिथ्या दृश्यत्वादित्यादितर्केण विश्वस्य मायामयत्वमुच्यत इत्येतत् पूर्वोत्तरग्रन्थविरोधात्, विश्वं सत्यमित्यादिश्रुतिप्रामाण्यात्, अस्मदुक्तार्थे ''त्रिगुणा प्रकृतिर्माया तज्जत्वाद् विश्वमीदृशम् । अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः । अचेतनत्वान्नैवैतत्

**ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।**
**सलिङ्गानाश्रमान् मुक्त्वा चरेदविधिगोचरः ।। २८ ।।**

**बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् ।**
**वदेदुन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् ।। २९ ।।**

**वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ।**
**शुष्कवादविवादेन कञ्चित्पक्षं न संश्रयेत् ।। ३० ।।**

**नोद्विजेत जनाद् धीरो जनं चोद्वेजयेन्न तु ।**
**अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।। ३१ ।।**

---

प्रयोजकतया स्मरेत् । चेतनत्वं स्वतन्त्रत्वं स चैको विष्णुरेव तु । आयस्तु फलमादिष्टं प्रोक्तं मायेति निष्फलम् । फलाल्पत्वात् तु मायैषा सम्प्रोक्ता त्रिगुणात्मिका । महाफलप्रदत्वात् तु विष्णुराय इतीरतः'' इति प्रमाणसद्भावाच्चोपेक्षणीयमिति ।। २७ ।।

ज्ञानपरिपाकं प्राप्तस्य यतेर्वृत्तिप्रकारं दर्शयति **ज्ञाननिष्ठ इति** । ज्ञानस्य निष्ठा उत्कर्षो यस्य स तथा । वाशब्दौ समुच्चयार्थौ न विकल्पार्थौ । अन्योन्यनियमार्थौ वा । अनपेक्षकः शिष्यसङ्ग्रहाद्य-निच्छुः । सलिङ्गान् दण्डादिलक्षणविधिसहितान् आश्रमान् मुक्त्वा विधेरगोचरः अयं यतिरयं व्रतीत्यादिरूपव्यवहारागोचरः चरेत् विविक्ते अरण्ये वर्तेतैवेत्यर्थः । यद्वा वेदोक्तविधिचकितत्वेन सन्ध्योपसनादि न करोति किन्तु जलस्रोतोवत् स्वत एव करोतीति ।। २८ ।।

तं प्रकारं वक्ति **बुध इति** । गोचर्यां गोवच्चर्याम्, अज्ञवच्चरणमित्यर्थः । नैगमः वेदोक्तविधिना वर्तमान इत्यनेन अविधिगोचर इत्यत्र विध्यतिक्रमो नार्थ इति निरणायि ।। २९ ।।

नैगम इत्युक्तं विशदयति **वेदेति** । वेदेन सह वादो विवादः विप्रतिपत्तिः, तत्र रतो न स्यात् । कुतर्केण वेदस्य जीवब्रह्मणोरेकत्वार्थकथनपरो न स्यादित्यर्थः । ''वेदेन सह वादो यो वेदवाद इतीरितः । तर्केण वेदस्यान्यार्थकल्पनं तद् विदो विदुः । तन्न कुर्यात् कदाचिच्च तत् कुर्वन् वेदहा भवेत्'' इति वचनादुक्त एवार्थः । वेदविचारविधुर इत्यर्थो नैव । किञ्च पाखण्डी पाशुपतादिदर्शनाभिमानी च न स्यात् । हैतुकी अक्षपादादिदर्शनाभिमानी च न स्यात् । शुष्कवाद विवादेन प्रसङ्गतः प्राप्तनिरर्थकवादकलहेन । ''योगसांख्यकणादाक्षपादा वै हेतुवादिनः । पञ्चवीशशाक्तबुद्धाद्याः पाखण्डा इति कीर्तिताः'' इति वचनाच्च ।। ३० ।।

**देहमुद्दिश्य पशुवद् वैरं कुर्यान्न केनचित् ॥ ३२ ॥**

**एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ।**
**खं यद्वदुदपात्रेषु भूतान्येकात्मकानि च ॥ ३३ ॥**

**अलब्ध्वा न विषीदेत कालेकालेऽशनं क्वचित् ।**
**लब्ध्वा न हृष्येद् धृतिमानुभयं देवतन्त्रितम् ॥ ३४ ॥**

**आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।**
**तत्वं विमृश्यते तेन तद् विज्ञाय विमुच्यते ॥ ३५ ॥**

---

नोद्विजेत दुर्जनान्नोद्विग्नः स्यात् ॥ ३१-३२ ॥

वैराकरणे किं निमित्तमत्राह **एक इति** । परः सर्वोत्तमः आत्मा परमात्मा एक एव । भूतेषु चराचरसंज्ञेषु आत्मनि स्वस्मिंश्चावस्थितः । हि यस्मात् तस्मात् तदधिष्ठानत्वाद् वैरं न कुर्यात्, तदप्रियत्वादित्यर्थः । एको देवः सर्वभूतेषु गूढ इति श्रुतेः । अत्र दृष्टान्तमाह **खं यद्वदिति** । यद्वद् यथा आकाश उदपात्रेषु घटादिषु एक एव स्थितस्तथेति । अत्र विशेषस्तु ''घटादिषु महाकाशो निर्विशेषश्च सन्ततः । घटावयवरूपस्तु तथैवान्यो घटानुगः । घटनाशेऽप्यनाशः सन् मध्यमाकाश इष्यते । एकदेशाभिमानित्वादित्याकाशास्त्रयः स्मृताः । महाकाशो विघ्नराजो विघ्नास्तत्र तु मध्यगाः । क्षुद्रविघ्नास्तदितर एवमात्मा त्रिधा स्मृतः । महाखवत् परस्त्वात्मा जीवा मध्यखवत् स्मृताः । घटानुगखवत् प्रोक्ता असुरा नित्यदुःखिनः । महाकाशवशाः सर्वे आकाशा इतरे स्मृताः । परमात्मवशे तद्वज्जीवाः सर्वेपि संस्थिताः । एवं विष्ण्वात्मकमिदं जगत् पश्येद् यतिः सदा'' इत्यस्मान्मानादवगन्तव्यः । केवलं नाकाशवद् भूतानां परमात्मनश्च व्याप्यव्यापकभावसम्बन्धः, अपि तु तस्माद् विशेषोऽप्यस्तीत्याह **भूतानीति** । एकः परमात्मा एव आत्मा व्यापकश्चादाता च येषां तानीमान्येकात्मकानि । कप्रत्ययः स्वार्थं विशिनष्टि । ''भूतानामेक एवात्ताथैको भूतेषु सन्ततः । एको भूतानि चादत्ते तस्मादेकात्मकानि तु'' इति वचनात् ॥ ३३ ॥

अशनसिद्ध्यसिद्ध्योरपि मद्भक्तिह्रासो न कर्तव्य इति भावेनाह **अलब्ध्वेति** । देवस्य मम तन्त्रितमधीनम् ॥ ३४ ॥

**यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ।**
**तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३६ ॥**

**शौचमाचमनं स्नानं न तु चोदनया चरेत् ।**
**अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३७ ॥**

**नहि तस्य विकल्पाख्या क्रिया मद्वीक्षया हता ।**
**आदेहान्तं क्वचित् ख्यातिस्ततः सम्पद्यते मया ॥ ३८ ॥**

---

ननु तर्हि प्रयत्नोपि तदर्थं न कर्तव्य इति तत्राह **आहारार्थमिति** । ननु नाहारं चिन्तयेत् प्राज्ञ इति निषेधः कथमत्राह **युक्तमिति** । यावत् प्राणधारणमपि चिन्तनं विहितत्वाद् युक्तम् । न वा अजीविष्यमिमानखादन्निति श्रुतेः । अशनालामे देहस्य प्राणवियोगस्तेन देहस्य पञ्चत्वं वागादीनां स्वस्वकारणसम्पत्तिः, तत्र पुरुषार्थोपयोगितत्वविमर्शो न सम्भाव्यते, अतः पुरुषार्थानुदयः, अतो देहयात्रार्थमशनचिन्तनमावश्यकमिति भावेनाह **तत्वमिति** । तेन देहेन तत्वं विमृश्यते । तत् तत्वम् ॥ ३५ ॥ फलितमाह **यदृच्छयेति** ॥ ३६ ॥

शौचादिकर्माणि स्वभावत एव कुर्यात्, न तु विधिचकितत्वेनेत्याशयेनाह **शौचमिति** । ज्ञानी यतिः । ''स्वभावतो धर्मपरो न विधेश्चकितश्चरेत् । अल्पं फलं हि चकिते स्वभावे फलमुत्तमम्'' इति वचनात् ॥ ३७ ॥

अत्र हेतुमाह **न हीति** । तस्य ज्ञानिनो विकल्पाख्या श्रौतस्मार्तविरुद्धकल्पनाख्या क्रिया न हि यस्मादतो ज्ञानी विधिं विहाय स्वत एव श्रौतादिक्रियां कुर्यादित्यन्वयः । ज्ञानिनोपि यावद्देहं निषिद्धेऽपि मनोगमनात् कथं नास्तीत्यत्राह **मद्वीक्षयेति** । आदेहान्तं प्रारब्धकर्मनिबद्धदेहपर्यन्तम् । ज्ञानिनोपि क्वचिन्निषिद्धे ख्यातिर्मनोगतिलक्षणप्रतीतिः स्यात् । सापि मद्वीक्षया ज्ञानप्रपन्नमत्कटाक्षनिरीक्षणेन हता, स्वशक्तिमुद्बोधयितुमसमर्था स्यादिति शेषः । ततः प्रारब्धकर्ममूलदेहपातादनन्तरं मया सम्पद्यते मत्प्रसादेनाविर्भूतस्वारूपानन्दो भवतीत्यर्थः । ''निषिद्धं मनसा कल्प्य भीतो विहितमाचरेत् । अज्ञो ज्ञस्य तु सङ्कल्पः स्वभावाद् विहितानुगः । शरीरधर्मिणः क्वापि निषिद्धेऽपि मनो व्रजेत् । तथापि तस्य नानर्थो मोक्षे नैवान्यथा व्रजेत्'' इति स्मृतेः ॥ ३८ ॥

दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ।
अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ।। ३९ ।।

तावत् परिचरेद् भक्तः श्रद्धावाननसूयकः ।
यावद् ब्रह्म विजानीयान्मामेव गुरुमादृतः ।। ४० ।।

यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ।। ४१ ।।

सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ।
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ।। ४२ ।।

भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः ।
गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ।। ४३ ।।

---

एवंविधज्ञानप्राप्तावुपायमाह **दुःखोदर्केष्विति** । उपाव्रजेदित्युपसर्गेण मुक्तिपर्यन्तं गुरुनिकटे निवासः कर्तव्य इति ज्ञायते ।। ३९ ।।

"शुश्रूषेत् सहितस्तावद् यावज्ज्ञानोदयो गुरुम् । ततःपरं च शुश्रूषेद् यथा तस्य प्रियं भवेत्" इति स्मृत्यर्थं स्पष्टमाह **तावदिति** । यावद् ब्रह्म मां विजानीयात् तावद् गुरुमेव परिचरेदित्यन्वयः। आदृत इत्यनेन ज्ञानोदयानन्तरमपि गुरुशुश्रूषा कर्तव्येति ज्ञायते ।। ४० ।।

वेषमात्रधारिणो यतयः पूज्या इत्यस्मिन् पक्षे बाधकमित्याह **यस्त्विति** । प्रचण्डेन्द्रियाणां सारथिर्मनो यस्य स तथा । त्रिदण्डं त्रिवेणुलक्षणम् ।। ४१ ।। सुरान् आत्मस्थमन्तर्यामिणम् आत्मानं प्रेष्ठं मां च निह्नुते निराकरोति । सोऽस्माल्लोकात् अमुष्मात् स्वर्गादेश्च विहीयते अधःपततीत्यर्थः ।। ४२ ।।

यत्यादीनां विशेषकर्तव्यधर्मानाह **भिक्षोरिति** । यतेः शमाहिंसे धर्मौ । वानप्रस्थानां तप ईक्षा आलोचनं च धर्मः । गृहस्थानामन्नादिना प्राणिरक्षा इज्या यागश्च । द्विजस्य ब्रह्मचारिणः आचार्यसेवनं गुरुकुलवासः ।। ४३ ।।

ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम्।
गृहस्थस्याग्रतो गन्तुः सर्वेषां मदुपासनम्॥ ४४॥

इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक्।
सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते चिरात्॥ ४५॥

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम्।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः॥ ४६॥

इति स्वधर्मनिर्णिक्तसत्वो निर्ज्ञातमद्गतिः।
ज्ञानविज्ञानसम्पन्नो विरक्तो समुपैति माम्॥ ४७॥

वर्णाश्रमवतां धर्म एष आचारलक्षणः।
स एव मद्भक्तियुतो निःश्रेयसकरः परः॥ ४८॥

एतत् तेऽभिहितं साधो भवान् पृच्छति यच्च माम्।
यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परम्॥ ४९॥

॥ इति अष्टादशोऽध्यायः॥

---

गृहस्थस्याग्रतो गन्तुरवगन्तुः, तत्वादेरिति शेषः॥ ४४॥ एतैर्धर्मैः साध्यमाह **इतीति**॥ ४५॥ मत्प्राप्तौ भक्तिरेव प्रयोजिकेत्याह **भक्त्येति**॥ ४६॥

स्वविहितधर्मेण निर्णिक्तं धौतं सत्वमन्तःकरणं यस्य स तथा। निर्णीततत्वेन ज्ञातमद्गतिः॥ ४७॥ भक्तिरेव मम परमप्रीतिसाधनम्। वर्णादिविहितधर्मोपि भक्तिसंवलित एवेति भावेनाह **वर्णेति**॥ ४८॥ उपसंहरति **एतदिति**। चशब्द एवार्थे। यथा मां समियात् तथैवाभिहितम्॥ ४९॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य अष्टादशोऽध्यायः॥**

॥ अथ एकोनविंशोऽध्यायः ॥

**श्रीभगवानुवाच -**

**यो विद्याश्रुतसम्पन्न आत्मवानानुमानिकः ।**
**मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि सन्न्यसेत् ॥ १ ॥**

**ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ।**
**स्वर्गश्चैवापवर्गश्च नान्योर्थो मदृते प्रियः ॥ २ ॥**

**ज्ञानविज्ञानसम्बद्धाः पदं श्रेष्ठं विदुर्मम ।**
**ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥**

**तपस्तीर्थं जपो दानं पवित्राणीतराणि च ।**
**नालं कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता ॥ ४ ॥**

---

हरेः प्रसादजनकं ज्ञानमेव, तस्य भक्तिः, तस्या यमादयः, कृष्णो ब्रह्मेति यच्च ज्ञानम्, तत् सर्वमस्मिन्नध्याये निरूप्यते । तत्र प्रथमत उत्पद्यमानं तद् एवंविधप्रसादसम्पादकमिति भावेन वक्ति **यो विद्येति** । यो विद्याया वेदान्तादिलक्षणायाः श्रुतेन श्रवणेन सम्पन्न उत्पन्नज्ञानः आनुमानिकः उपक्रमादियुक्त्या निर्धूतसंशयविपर्ययश्च आत्मवान् ममात्मा स्वामी हरिरिति निश्चितहरितत्वो मामपरोक्षीकृत्य मद्भिन्नमिदं जगत् मायामात्रं मदिच्छोद्बोधितोपादानप्रकृतिनिर्मिततत्वात् तन्मात्रं ज्ञात्वा तज्ज्ञानं च ममेदं ज्ञानं हरिपूजालक्षणं तत्प्रसादेनोत्पन्नं तदधीनं चेति मयि सन्न्यसेदित्यन्वयः । ''त्रिगुणा प्रकृतिर्माया पश्येत् तन्मात्रकं जगत् । निर्मिमीते जगत् सर्वमतो मायेति सा स्मृता'' इति वचनात्, ''इदं ज्ञानं हरेः पूजा हरेरेवोदितं सदा । हर्यधीनं च सर्वत्रेत्येवं न्यासो हरौ स्मृतः'' इति वचनादुक्तप्रकार एव हरौ ज्ञानन्यासो न प्रकारान्तरः ॥ १ ॥

कस्मात् त्वयि ज्ञानसन्न्यास इत्यतस्तन्निमित्तमाह **ज्ञानिन इति** । तुशब्दस्तारतम्यद्योतकः । स्वस्यार्थ आनन्दलक्षणो यस्मात् स तथा । हेतुर्ज्ञानोत्पादकः । सम्मतो ज्ञातः । इतोपीत्याह **स्वर्गश्चेति** ॥ २ ॥

स्वार्थप्राप्तिप्रकारमाह **ज्ञानेति** । विदुर्लभन्ते । निगमयति **ज्ञानीति** । प्रियतमत्वे निमित्तमाह **ज्ञानेनेति** ॥ ३ ॥ तपआदिना उभयशुद्धमतस्तव प्रियत्वेन ज्ञानं विशिष्य किं स्तौषीति तत्राह **तप इति** । या शुद्धिर्ज्ञानलेशेन कृता तां शुद्धिं तपआदीनि अलं सम्यङ् न कुर्वन्तीत्यन्वयः ॥ ४ ॥

**ज्ञानविज्ञानसहितं ज्ञात्वा स्वात्मानमुद्धव ।**
**ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥ ५ ॥**

**ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि ।**
**सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽन्वगुः ॥ ६ ॥**

**त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो**
**मयाऽन्तराऽऽपतति नाद्यपवर्गयोर्यः ।**
**जन्मादयोऽस्य वद मां तव तस्य किं स्यु-**
**राद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥**

---

यतः सर्वश्रेयःप्राप्तौ ज्ञानस्योत्तमसाधनत्वमतस्त्वयापीदमेव सम्पादनीयमित्याह **ज्ञानेति**। स्वात्मानं परमात्मानम्। तं वा एतमभिवदन्ति स्वात्मेति श्रुतेः ॥ ५ ॥ कस्येदं दृष्टफलं येन विश्रभ्य भजनीयं स्यादत्राह **ज्ञानेति**। आत्मनि हृदये। समीचीना सिद्धिर्मुक्तिर्यस्मात् स तथा तम् ॥ ६ ॥

ननु तवापि देहित्वेन दुःखादिसम्भवात् कथं त्वत्प्राप्तिर्मुक्तिः स्यादित्याशंक्य स्वतश्चिदानन्दरूपस्य तव जन्मादिर्नास्ति स देहस्यैव, मम तु तादृशदेह एव नास्ति निर्गुणत्वात्, कुतो जन्मादिरतो नित्यनिर्दुःखानन्दानुभवस्य मम प्राप्तिरेव मुक्तिरिति भावेनाह **त्वयीति**। हे उद्धव यस्त्रिविधो जन्मस्थितिसंहारलक्षणो विकारस्त्वय्याश्रयति सम्प्रति वर्तते स मायानिमित्तो न तु स्वाभाविकः। ''अन्यस्थं निर्मितं जीवे जन्मादि हरिणा यतः। तस्मान्मायेति तत् प्राहुर्माया निर्माणमुच्यते। नहि जीवस्य जन्मादि स्वतो नित्यस्य संभवेत्। सृष्टेः प्राक् प्रलये चैव यतो जन्मादि नास्य हि। तस्मान्मध्येपि नास्यास्ति देहादिस्थं तु विष्णुना। कर्मभिर्निर्मितं जीवे प्रलये यन्न जीवगम्। यन्न विद्येत हि लये यन्न विद्येत मुक्तिगे। जीवस्य न स्वभावोऽसौ प्रायेणेति विनिश्चितम्'' इति प्रकाशिकायाम्। किञ्च ''मायेत्युक्तं निर्मितं तु यतो जन्मादि निर्मितम्। देहादिगं परेशेन माया जन्मादि तेन तु'' इत्य-स्माच्च। अतर्कितोपपन्नवदागतत्वान्न स्वाभाविक इत्याह **अन्तरेति**। यो जन्मादिरन्तरा सृष्टिकाल आपतति कर्मवशादागच्छति आद्यपवर्गयोः प्रलयमुक्त्योर्न विद्यते। ''यन्न विद्येत हि लये यन्न विद्येत मुक्तिगे। जीवस्य न स्वभावोऽसौ'' इत्युक्तत्वाच्च। उक्तार्थोऽयं तवाप्यनुभवसिद्ध इत्याशयेनाह **जन्मादय इति**। तस्य परिणामरूपस्य देहस्य दृश्यमानजन्मादयोऽस्य चिदानन्दरूपस्य तव स्युः किम्। मां प्रति वद। ''बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्'' इत्यादेः। उपसंहरति **आद्यन्त-**

उद्धव उवाच -

ज्ञानं विशुद्धं विपुलं यदेतद् वैराग्यविज्ञानयुतं पुराणम्।
आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्भिमृग्यम्॥ ८॥

तापत्रयेणाभिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीश।
पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात्॥ ९॥

दुष्टं जनं सम्पतितं बिलेऽस्मिन् कालाहिना क्षुद्रसुखोरुतर्षम्।
समुद्धरैनं कृपयाऽपवर्ग्यैर्वचोभिरासिञ्च महानुभाव॥ १०॥

श्रीभगवानुवाच -

इत्थमेतत् पुरा राजा भीष्मं धर्मभृता वरम्।
अजातशत्रुः पप्रच्छ सर्वेषामनुशृण्वताम्॥ ११॥

निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः।
श्रुत्वा धर्मान् बहून् भीष्मं मोक्षधर्मानपृच्छत॥ १२॥

तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान्।
ज्ञानविज्ञानवैराग्यश्रद्धाभक्त्युपबृंहितान्॥ १३॥

---

**योरिति**। असत इति हेतुगर्भविशेषणम्। अस्वतन्त्रत्वादवस्तुनो जगत आद्यन्तयोर्यज्जीवस्यास्ति चिदानन्दस्वरूपं तदेव मध्ये सृष्टिकालेऽपि स्वरूपम्। तस्मादाभिमानिकः संसारो मदपरोक्षज्ञानेन निवर्तत इति भावः। ज्ञानिनो मनुष्याऽहमित्यनुभवतः सुखैकरूपा मुक्तिः कथं सेत्स्यति अन्यस्यान्यादृशत्वानुपपत्तेरित्याशंक्य कालत्रयेपि जीवस्यैकरूपत्वेनाभिमानिक आगन्तुकः संसारो मत्प्रसादेन निवर्तत इति वाऽऽह **त्वयीति**। ''आद्यन्तयोरननुगमादाद्यन्तरहितस्य तु। आद्यन्तभाविनो मध्ये कथमन्यादृशं वपुः'' इत्यतः सिद्धम्। किञ्च ''अनित्यत्वात् तु देहस्य तस्य जन्मादिकं भवेत्। मुक्तिप्रलयसम्बन्धे कथं जीवे तदिष्यते'' इति, ''अनित्यस्य गुणा मध्ये भवेयुः स्वत एव तु। न तु स्वतस्तु नित्यस्य कादाचित्कगुणैर्युतिः'' इति॥ ७॥

एतत् ज्ञानं यथा स्थितं तथा आख्याहि॥ ८॥ ज्ञानं पृष्टं तस्योत्तरत्वेन धर्माणां कथनं कथं सङ्गच्छत इत्यत उक्तम् **ज्ञानेति**॥ ९-१३॥

**नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।**
**ईक्षताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥ १४ ॥**

**एतदेव हि विज्ञानं न तथैकेन येन यत् ।**
**स्थित्युत्पत्त्यप्यया नः स्युर्भावानां त्रिगुणात्मनाम् ॥ १५ ॥**

**आदावन्ते च मध्ये च यज्ज्ञं सृज्यं यदन्वयात् ।**
**पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत् ॥ १६ ॥**

---

येन ज्ञानेन भूतेषु जीवेषु स्थितान् नवैकादश पञ्च त्रीन् भावान् अष्टाविंशत्तत्वानि अन्वीक्षेत तत्तल्लक्षणं तत्तच्छक्तिस्वरूपपूर्वकं पश्यति, एषु तत्वेषु तन्नियामकतया स्थितम् एकं तत्वेभ्यः प्रधानं तत्र तत्वपतिं हरिमपि पश्यति तत् मम निश्चितं ज्ञानमिति । पृथिव्यादिपञ्चभूतबुद्ध्यहङ्कारचित्तमूल-प्रकृतयो नव, मनसा सह श्रोत्रादीन्द्रियाण्येकादश, त्रयः सत्वादयो गुणाः, शब्दादय पञ्च । ''ज्ञात्वा तत्वानि तेष्वीशं सर्वतत्वेश्वरं प्रभुम् । जानन् ज्ञानी भवेत्'' इत्यादिवचनमत्र मानम् ॥ १४ ॥

नन्विदं ज्ञानं चेद् विज्ञानं तर्हि किं तत्राह **एतदेवेति** । हिशब्दो विशेषद्योतकः । स्वस्य यद् विशेषतो योग्यं ज्ञानं[1] तद्विषयस्य बिम्बस्य ज्ञानेन सहितमेतदेव ज्ञानं विज्ञानम्, विद्धीति शेषः । ''स्वस्य योग्यं ध्यानं विशेषतः । पूर्वोक्तमेव[2] यो जानन् स विज्ञानी भवत्युत'' इति वचनमत्र मानम् । तस्यापि तत्वेशविषयत्वात् कथं विज्ञानं नेति तत्राह **न तथेति** । यद्यपि तत्तत्तत्वतदीश्वरविषयं तथापि तथैव पूर्वोक्तप्रकारेण तत्वानि ज्ञात्वा सर्वतत्वेश्वरं विषयीकुर्वत् ज्ञानं विज्ञानं न भवति स्वयोग्यपुरुषार्थासाधनत्वात् । तस्मात् स्वबिम्बज्ञानविशिष्टमेव विज्ञानमित्यर्थः । हरेस्तत्वेष्वेकत्वात् प्राधान्यं कुत इत्यत आह **एकेनेति** । नः अस्माकं तत्वानां मध्ये एकेन अन्यनिरपेक्षेण तत्वेन यत् यत्र स्थित्वा यदाधारत्वेन त्रिगुणात्मनां सत्वादिगुणनिर्मितदेहानां भावानां स्थित्युत्पत्त्यप्ययाः स्युः ॥ १५ ॥

यच्च तत्वमादावन्ते सृष्टेः प्राक् प्रलयादूर्ध्वं मध्ये स्थितिकाले च सर्वज्ञं पुनस्तत्प्रतिसङ्क्रमे तस्य सृष्टस्य संहारे च सृज्यं जगद् अन्वयात् प्रविशति । यच्च शिष्येत अवशिष्टमविनाशि तदेव सत् स्वतन्त्रम् । ''सत्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे । अस्वतन्त्रत्वात् तदन्येषामसत्वं विद्धि भारत'' इति वचनाद् हरिरेव तत्वेषु प्रधानं तत्वमिति भावः ॥ १६ ॥

---

१. ध्यानमिति पाठः तात्पर्यवचनानुसारेण ।

२. पूर्वोक्त एवेति पाठान्तरम् ।

**श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।**
**प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते ।। १७ ।।**

**कर्मणां फलरूपत्वादाविरिञ्चादमङ्गलम् ।**
**विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ।। १८ ।।**

**भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ।**
**पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ।। १९ ।।**

**श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ।**
**परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ।। २० ।।**

**आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।**
**मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ।। २१ ।।**

---

अत्र किं प्रमाणमिति तत्राह **श्रुतिरिति** । नैकमेवोक्तार्थे सर्वोत्तमत्वे हरेः प्रमाणमपि तु श्रुत्यादिचतुष्टमपि । ऐतिह्यमागमभेदः । प्रयोजनमाह **प्रमाणेष्विति** । एवं वेदादिप्रमाणैर्विदिताशेषतत्वतदीशविशेषतया ज्ञानविज्ञानसम्पन्नः पुरुषो विकल्पाद् विरुद्धकल्पनाज्जीवस्वातन्त्र्यज्ञानादिलक्षणाद् विरक्तो भवति, मिथ्याज्ञानरहितो भवतीत्यर्थः । सोपि प्रामाणिकश्चेत् कथमित्यत उक्तं **प्रमाणेष्विति** । श्रुत्यादिप्रमाणेषु अन्यप्राधान्यस्यानवस्थानात् तात्पर्यार्थज्ञाने स्थित्यभावात्, चोरवत् पलायमानत्वादित्यर्थः । प्रमाणानां नानेव प्रतीयमानानां तात्पर्यार्थापरिज्ञानत उत्पन्नाद्वा[1] ।। १७ ।।

वैराग्यं विशिनष्टि **कर्मणामिति** । आविरिञ्चात् मनुष्यमारभ्य विरिञ्चपर्यन्तम् जगद् अमङ्गल-

---

१. ''एवं सर्वनियामकस्य हरेः स्वातन्त्र्यं ज्ञेयमित्यत्र किं प्रमाणमित्यत आह **श्रुतिरिति** । ऐतिह्यागमभेदः । इति चतुष्टयं, भगवत एव स्वातन्त्र्यमस्तीत्यर्थे प्रमाणमिति शेषः । एवं श्रुत्यादिप्रमाणेन भगवत्स्वातन्त्र्यज्ञाने फलमाह **प्रमाणेष्विति** । सः सकलतत्वप्रेरकतया श्रुत्यादिप्रमाणकं भगवत्स्वातन्त्र्यं जानन् विकल्पाद् अहं कर्तेत्यादिजीवस्वातन्त्र्यज्ञानरूपाद् विरुद्धकल्पनाद् विरज्यते विरक्तो भवति । मिथ्याज्ञानरहितो भवतीत्यर्थः । ननु जीवस्वातन्त्र्यमपि श्रुत्यादिप्रमाणकं चेत् कथं तज्ज्ञानस्य विरुद्धज्ञानत्वमित्यत उक्तम् **प्रमाणेष्विति** । जीवस्वातन्त्र्यादेः श्रुत्यादिप्रमाणेष्वनवस्थानात् प्रतिपाद्यतयाऽवस्थानसद्भावस्याभावात् तज्ज्ञानस्य विरुद्धज्ञानत्वाख्यं विकल्पत्वं युक्तमित्यर्थः'' इति श्रीनिवासतीर्थाः ।

**मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।**
**मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥ २२ ॥**

**मदर्थे च परित्यागो भोगस्य च सुखस्य च ।**
**इष्टं दत्तं हुतं भुक्तं मदर्थं यद् व्रतं तपः ॥ २३ ॥**

**एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।**
**मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २४ ॥**

**यदा मय्यर्पितं चित्तं शान्तं सत्वोपबृंहितम् ।**
**धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २५ ॥**

**यद्यर्पितं तद्विकल्प इन्द्रियैः परिधावति ।**
**रजस्वलमसन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २६ ॥**

---

मसारमत एव नश्वरं पश्येत् । कर्मणां फलरूपत्वात् ॥ १८ ॥ विरक्तो मयि भक्तिं कुर्यादिति भावेनाह **भक्तियोग इति** ॥ १९ ॥ निरतिशयभक्त्युत्पत्तौ कारणं वक्ति **श्रद्धेति** । अमृतवज्जरा-मरणहारिण्यां हरिकथायां परिनिष्ठा आस्था अत्यापद्यपि नेमं नियमं मुञ्चामीति निश्चयः ॥ २० ॥ अभिवन्दनं प्रणामः । मन्मतिः सन्निहित इति मत्स्मरणम् ॥ २१ ॥

मदर्थेषु अहमेवार्थो येषां ते तेषु परमभागवतेषु अङ्गचेष्टा शरीरावयवैः नृत्यलक्षणचेष्टा[१] ॥ २२ ॥ मदर्थे मत्प्रीत्यर्थम् ॥ २३ ॥ निधौ हस्तप्राप्ते वराटकेन[२] किमित्याह **कोऽन्य इति** । अस्य पुरुषस्य ॥ २४ ॥

यदा सत्वगुणेनोपबृंहितं सम्बन्धितमत एव शान्तं चित्तं मय्यर्पितं भवति तदा धर्मादिकमाप्नोती-ति । अनेन धर्माद्यर्थो विशिष्टोऽस्तीत्येत्परिहृतम् ॥ २५ ॥

विपक्षे बाधकमाह **यदीति** । यदि तच्चित्तं विकल्पेऽर्पितम्, इन्द्रियैरपि निन्दितेषु विषयेषु धावति[३] तर्हि तच्चित्तं रजस्वलं रजोदूषितं राजसमसन्निष्ठं तामसं च विपर्ययं दुःखकारणं विद्धि ॥ २६ ॥

---

१. अस्पष्टोऽयमन्वयः ।

२. काणवराटकेनेति क्वचित् पाठः ।

३. विकल्पे निषिद्धे अर्पितं तच्चित्तमिन्द्रियैः सहकारिभिर्यदि परितो धावतीत्यन्वयः सरलः ।

धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ।
गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥ २७ ॥

उद्धव उवाच -

यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ।
कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥ २८ ॥

किं दानं किं तपः शौर्यं किं सत्यं कमलेक्षण ।
किमन्नं तृप्तिजननं किञ्च शौचं जनार्दन ॥ २९ ॥

कस्त्यागः किं धनं श्रेष्ठं को यज्ञः का च दक्षिणा ।
पुंसः किं स्विद् बलं श्रीमद् भगो लाभश्च केशव ॥ ३० ॥

का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ।
कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ॥ ३१ ॥

कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम् ।
क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ ३२ ॥

एतान् प्रश्नान् मम ब्रूहि विपरीतं च सत्पते ॥ ३३ ॥

श्रीभगवानुवाच -

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ ३४ ॥

---

धर्मादिकमभिपद्यत इत्युक्तम् । तद् विशिनष्टि **धर्म इति** । ऐकात्म्यदर्शनमित्येतत् ''एकः प्रधान उद्दिष्टो विष्णोः प्राधान्यदर्शनम् । ऐकात्म्यदर्शनं प्रोक्तं सर्वज्ञानोत्तमं च तत्'' इत्यनेन व्याख्यातम् ॥ २७ ॥

तत्र तत्र भक्तिसाधनानि यमादयः कथ्यन्ते । तत्स्वरूपविवित्सया तत्रोद्धवः पृच्छति **यम इत्यादिना** ॥ २८ ॥

श्रीमद् बलं किं स्वित् ॥ २९-३० ॥ विपरीतमुक्तेभ्योऽन्यं दोषम् ॥ ३१-३३ ॥

शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम्।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम्॥ ३५॥

एते यमाः सनियमा उभयोर्द्वादश स्मृताः।
पुंसामुपासितास्तात यथाकामं दुहन्ति हि॥ ३६॥

शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः।
तितिक्षा दुःखसम्मर्दो जिह्वोपस्थजयो धृतिः॥ ३७॥

दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम्।
स्वभावविजयः शौर्यं सत्वं च समदर्शनम्॥ ३८॥

ऋतं च सूनृता वाणी कविभिः परिकीर्तिता।
कर्मस्वसङ्गमः शौचं त्यागः सन्यास उच्यते॥ ३९॥

धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः।
दक्षिणा ज्ञानसन्देशः प्राणायामः परं बलम्॥ ४०॥

भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः।
विद्याऽऽत्मनि भिदाबोधो जुगुप्सा ह्रीर्विकर्मसु॥ ४१॥

श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखात्ययात् सुखम्।
दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित्॥ ४२॥

---

दुहन्ति, फलानीति शेषः॥ ३४-३६॥ दण्डन्यासः अशास्त्रविहितदण्डत्यागः। दण्डत्याग इति वा पाठः। स्वभावविजयः स्वमनोजयः। समदर्शनं यथावस्तुदर्शनम्॥ ३७-३८॥ कर्मस्वसङ्गमः नाहं कर्तेति॥ ३९॥ इष्टं धनं धर्मः। भगवत्तमोऽहं यज्ञो यज्ञेनेज्य इत्यर्थः। ज्ञानसन्देशः ज्ञानोपदेशः दक्षिणा॥ ४०॥

ऐश्वरो भावः ममेश्वरत्वभावनं भगः। आत्मनि भिदाबोधः सर्वतो विलक्षणो हरिरिति ज्ञानं विद्या॥ ४१॥ दुःखात्ययात् सुखं मोक्षलक्षणं सुखम्। कामानां विषयाणां सुखापेक्षा दुःखम्॥ ४२॥

**मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः ।**
**उत्पथश्चित्तविक्षेपः स्वर्गः सत्वगुणोदयः ।। ४३ ।।**

**नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे ।**
**गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ।। ४४ ।।**

**दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः ।**
**गुणेष्वसक्तधीरीशो गुणसङ्गी विपर्ययः ।। ४५ ।।**

**एत उध्दव ते प्रश्नाः सर्वे साधु निरूपिताः।**
**किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।। ४६ ।।**

**गुणदोषदृशिर्दोषो गुणस्तूभयवर्जनम् ।।४७।।**

**।। इति एकोनविंशोऽध्यायः ।।**

---

देहादावहंबुद्धिर्यस्य स तथा । मन्निगमः मद्विषयो वेदः । सत्वगुणोदयः सत्वगुणाभिवृद्धिः स्वर्गः ।। ४३ ।। तमउन्नाहः अज्ञानोन्नतिः नरकः । भक्त्यादिगुणाढ्यः ।। ४४ ।।

असंतुष्टो विवषयासन्तोषवान् दरिद्रः। ''विषये दोषबुध्दिः सन्निन्द्रियाणां वशे स्थितः । कृपणः स तु सम्प्रोक्तो गुणबुध्दिर्विपर्ययः'' इति वचनात् । गुणेषु विषयेषु असक्तधीःस्ववश ईश्वरः। गुणसङ्गी सर्वविषयसङ्गी विपर्ययो विपरीतो ज्ञेयः ।'' पुरुषार्थमतिर्यस्य विषयेष्वेव[1] देहिनः। विपरीतः स तु ज्ञेयः स्वात्मनो विपरीततः'' इति वचनात् । चित्तासन्तोषमात्राद् दरिद्रः सर्वविषयसङ्गी विपरीतः ।। ४५ ।।

निरूपिताः परिहृताः। शास्त्रतात्पर्यार्थं कथयति किं **वर्णितेनेति** । गुणदोषयोर्लक्षणमुद्दिश्य बहुना वर्णितेन किम् । विहितकरणाद् गुणः निषिद्धकरणाद् दोष इति दृष्टिर्दोषः, भगवत्प्रियत्वाप्रियत्व-मन्तरेणेति शेषः । उभयवर्जनं गुणः उभयोर्गुणदोषयोर्भेददर्शनत्यागो गुण इत्यर्थः ।[2] अत्र हरेर्यत्

---

१. विषयेष्वपीति क्वचित् पाठः ।

२. एकस्मिन् कोशे ''उभयवर्जनं गुणः उभयोर्गुणदोषयोर्भेदर्शनत्यागः अगुणः दोष इत्यर्थः'' इत्यस्ति । तथा सति अगुण इति मूले छेदः । भेददर्शनत्यागो गुण इत्यर्थ इत्युपरितनं वाक्यं त्वसङ्गतं प्रतीयते । अगुण इति छेदः सुधीन्द्रसम्मतः । ताम्रपर्णी आनन्दतीर्थाचार्यस्तु ''यमादयो गुणा उत्पथादयो दोषा इति निरूपितम् । तत्र विशेषोऽभिधीयते किं वर्णितेनेति । बहुनाऽनेन यमादिना उत्पथादिना च वर्णितेन किम् । किन्तु विहितकरणाद् गुणो निषिद्धकरणाद् दोष इति भगवत्प्रियत्वाप्रियत्वे अपहाय गुणदोषदृशिर्दोषः । उभयवर्जनं विहितनिषिद्धोः स्वतो गुणदोषत्वबुद्धिवर्जनं गुण इत्यर्थः'' इति व्याचक्रुः ।

## ॥ अथ विंशोऽध्यायः ॥

**उद्धव उवाच**

**विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।**
**अपेक्षतेऽरविन्दाक्ष गुणदोषं च कर्मणाम् ॥ १ ॥**

**वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ।**
**द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥२ ॥**

---

प्रियं स गुणः, यदप्रियं स दोष इति सतां मतमिति तात्पर्यम् । यद्वा बहुना वर्णितेन किम् । गुणदोषयोर्लक्षणम्, दुर्ज्ञानमिति शेषः । कथमत्राह **गुणेति** । गुणदोषयोरन्योन्यदृष्टिर्दोषः, उभयवर्जनं गुणः, अत्रापि हरिप्रियत्वादिकं प्रयोजकमिति ॥ ४६-४७ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य एकोनविंशोऽध्यायः ॥**

अधिकारिणामनेकविधत्वेन साधनानामपि तथात्वात् केषांचिदन्तर्भावविवक्षया (साधनं ) कर्मयोगादिभेदेन त्रिधा विभज्य तत्स्वरूपं कथयत्यस्मिन्नध्याये । तत्र भगवत्प्रिय एव गुणस्तदप्रियो दोष इति भगवदभिप्रायज्ञोऽप्युद्धवो विविच्य ज्ञापनाय पृच्छति **विधिश्चेत्यादिना** । हे अरविन्दाक्ष ईश्वरस्य ते तव विधिश्च प्रतिषेधश्च विधिनिषेधलक्षणः निगमो वेदः कर्मणां गुणं दोषं वाऽपेक्षते विहितकरणाद् गुणो निषिद्धकरणाद् दोष इति वक्तीत्यर्थः ॥ १ ॥

तदधिकारापादकवर्णाश्रमाणां विकल्पं भेदं च । प्रतिलोमजोऽनधिकारी अनुलोमजोऽधिकारीति प्रतिलोमानुलोमजं च । अत्रापि विशिष्टमातापितृजो विशिष्टाधिकारीति च । धर्मार्जितं द्रव्यं कुरुक्षेत्रादिदेशः जातः पुत्रः कृष्णकेश इत्यादि(?) वयश्च वसन्तादिकालं चेति द्रव्यदेशवयःकालाः, तान् । तथा पुण्यफलं स्वर्गं पापफलं नरकं च । अपेक्षत इति सर्वत्र योज्यम् ॥ २ ॥

**गुणदोषभिदादृष्टिमन्तरेण वचस्तव।**
**निःश्रेयसं कथं नु स्यान्निषेधविधिलक्षणम्॥ ३॥**

**पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर।**
**श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि॥ ४॥**

**गुणदोषभिदादृष्टिर्नियमात् तेन हि स्वतः।**
**नियमेनापवादश्च भिदाया इति हि भ्रमः॥ ५॥**

---

संशयबीजमुत्थापयति **गुणेति**। तव वचस्तु गुणदोषभिदादृष्टिमन्तरेण वर्तते विहितप्रतिषिद्धकर्मणां गुणदोषभेददर्शनं विहाय गुणदोषयोर्भेदो नास्तीत्येवंविधम्। तच्च निषेधविधिलक्षणं विहितनिषिद्धकरणहेतुकगुणदोषभेददर्शिविदवचनं कथं नु निःश्रेयसं पुरुषार्थपर्यवसायि स्यात्। तदर्थमेव प्रवृत्तस्य तदनुचितम्॥ ३॥

कुतोऽत्राह **पितृदेवेति**। हे ईश्वर तव वेदः अनुपलब्धेऽर्थे अप्रत्यक्षेश्वरधर्मादिविषये साध्ये सुखादौ साधने कर्मादावपि पित्रादीनां श्रेयः चक्षुः दिव्यमेव चक्षुरित्यन्वयः॥ ४॥

लौकिकं पूर्वपक्षमुपसंहरति **गुणेति**। यतो वेद उत्तमं चक्षुस्तेन कारणेन नियमाद् गुणदोषभेददृष्टिः स्वतो हि स्वाभाविक्येव। ननु तर्हीत्थं निश्चितवतस्तव किमिति भ्रम इति तत्राह **नियमेनेति**। चशब्द एवार्थे। भवता भिदायाः गुणदोषयोर्भेदस्य नियमेनैवापवादः अभावः उच्यते इति यस्मात् तस्माद् भ्रमः सञ्जात इत्यतो निश्चयं भवन्तं पृच्छामीति भावः। "स्वतः सर्वगुणात्मा तु विष्णुरेकः सनातनः। अन्यत् सर्वं तत्प्रियत्वात् गुणो दोषस्तथाऽप्रियम्। एवं ज्ञानवतां दृष्टिरज्ञस्तन्नावगच्छति। कालदेशविशेषेषु प्रीतिभेदमपेक्ष्य तु। अविज्ञानवतस्तस्य मर्यादा वेदतः कृता। गुणदोषभिदा नास्ति भगवत्प्रियमन्तरा। गुणदोषदृशेर्दोषो ह्यन्यत्र भगवत्प्रियात्। गुणाश्च दोषतामीयुर्दोषाश्च गुणतां क्वचित्। अतो दोषो न दोषः स्यान्न गुणोपि गुणो भवेत्। भगवत्प्रीतिविज्ञानाद् गुणदोषभिदां यदि। पश्येत् तत्तु गुणायैव विपर्यासं न कारयेत्। गुणदोषभिदा क्वापि स्वातन्त्र्येण न तु क्वचित्" इत्यनेनास्य तात्पर्यार्थो विज्ञायते। यद्वा गुणदोषभिदादृष्टिः नियमात् ते तव मते स्वतो न हि प्रत्युत गुणदोषभिदाया अपवादोपि, अतो भ्रम इति॥ ५॥

**श्रीभगवानुवाच -**

**योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।**
**ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ६ ॥**

**निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।**
**तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कर्मिणाम् ॥ ७ ॥**

**यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।**
**न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य मुक्तिदः ॥ ८ ॥**

---

गुणदोषयोर्विहिताविहितकर्मानुष्ठानपरिनिष्ठितत्वं वेदो वक्तीति यदवादि स तात्पर्यार्थो न किन्तु मत्प्रियाप्रियविवेकाज्ञानपरिनिष्ठाविषयः । ''स्वतस्तु गुणदोषत्वदृशेर्भेदेन वस्तुतः[१] । दोषोपि गुण एव स्याद् भगवत्प्रीतितो गुणः । दोषस्तु तद्वैपरीत्यादिति दृष्ट्या भवेद् गुणः । कालदेशविशेषेण प्रीत्यज्ञानाज्जगत्स्थितेः । मर्यादा गुणदोषाणां कृता वेदेषु सर्वशः'' इत्येतदेव ''स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः । विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः'' इत्यादिना वक्ष्यते । अतो विहिताद्यनुष्ठानपरिनिष्ठितत्वेन गुणदोषभेदनियमोक्तिर्मत्प्रियादिविवेकाज्ञानविषयेति भावेन भगवानुद्धवप्रश्नं परिहरिष्यन् त्रित्वेन क्रोडीकृत्य मुक्त्युपायानाह **योगास्त्रय इति** । योगा उपायाः । नृणाम् अर्थी समर्थो विद्वानिति गुणविशिष्टानाम्, नृ नय इति धातोः । तान् निर्दिशति **ज्ञानमिति** । अन्ययोगं व्यवच्छिनत्ति **नेति** ॥ ६ ॥

तत्र ज्ञानयोगाधिकारिण आह **निर्विण्णानामिति** । इह कर्मसु निर्विण्णानां न्यासिनाम्, सनकादीनामिति शेषः । ''सनकाद्या ज्ञानयोगा भक्तियोगास्तु देवताः । मानुषाः कर्मयोगाश्च त्रिधैते योगिनः स्मृताः । सर्वेषां सर्वयोगैश्च प्राप्या मुक्तिर्न संशयः । तथापि तु विशेषेण स तेषामभिधीयते'' इति वचनमत्र मानम् । ज्ञानादिगुणानां त्रिषु सत्वेपि सामान्यविशेषविवक्षया विभागो युज्यते प्रमाणानां सत्वात् । कर्मयोगाधिकारिण आह **तेष्विति** । ज्ञानभक्तियोगिनोऽपेक्ष्य ज्ञानभक्त्योरल्पत्वात् कर्मयोगिन इति ॥ ७ ॥

भक्तियोगाधिकारिण आह **यदृच्छयेति** । तुशब्दो विशेषं सूचयति । यः पुमानिति जातावेक-

---

१. वस्तुना, वस्तुनाम् इति पाठान्तरे ।

**तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ।**
**मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ।। ९ ।।**

**स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव ।**
**न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ।। १० ।।**

---

वचनम् । यदृच्छया स्वादृष्टोद्बोधितभगवदिच्छया जातश्रद्धाः मत्कथादौ विशिष्टश्रद्धावन्तः । न निर्विण्णाः नित्योत्पन्नसंसारासारज्ञानत्वान्न कादाचित्कनिर्वेदाः । नातिसक्ताः नित्यसम्पूर्णभोगत्वान्न कादाचित्कविषयाः । नातिसक्ता ये पुरुषाः अस्य एषां भक्तियोगो मुख्यभक्तित्वान्मुख्यसिद्धिद इत्यन्वयः । उक्तमेतल्लक्षणं देवानामेवेति देवा एव भक्तियोगिन इत्यर्थः । "भगवद्गुणानुसारेण वेदार्थो नीयते हि यैः । भक्तियोगास्तु ते प्रोक्तास्तादृशाः हि सुराः सदा । अङ्गानुसारिवेदार्थं ज्ञात्वा तदनुसारतः । भगवद्गुणा यैर्नीयन्ते ते प्रोक्ता ज्ञानयोगिनः । कर्माणि शास्त्रतो ज्ञात्वा तत्प्राधान्यानुसारतः । विज्ञाता यैर्गुणा विष्णोर्ज्ञेयास्ते कर्मयोगिनः । भक्तिर्ज्ञानं च किञ्चित्तु पश्चात् तेष्वपि जायते । तथापि कर्मयोगास्ते कर्मपूर्वत्वकारणात् । भगवद्गुणानुरागित्वमधिकं भक्तियोगिनाम् । तस्मात् तेऽभ्यधिका ह्येषु देवा एव विशेषतः । ईषद् वैराग्यमल्पं तु पूर्वं देवेषु जायते । पश्चाद् विरागोऽभ्यधिको देवानां नात्र संशयः । ज्ञानाधिक्यं तु देवानां भक्त्याधिक्यं तथैव च । विरागोऽभ्यधिकस्तेषां सदैव सनकादिनाम् । ज्ञानाधिक्यान्मनुष्येभ्यो भण्यन्ते ज्ञानयोगिनः । न तु ज्ञानाधिकास्ते वै देवेभ्यस्तु कथञ्चन । देवानामपि कर्मित्वं विद्यते यद्यपि स्फुटम् । तथापि प्रत्यवायित्वान्मनुष्याः कर्मयोगिनः । त्रियोगाभ्यधिको ब्रह्मा सर्वेभ्यः परमो विभुः । महायोगेश्वरेशेशस्तस्माद् ब्रह्मा चतुर्मुखः" इति वचनात् समस्तं युक्तम् ।। ८ ।।

ज्ञानभक्तियोगिनामपि ज्ञानभक्त्युदयात् पूर्वं ज्ञानभक्तिसाधनत्वादन्तःकरणशुद्धिद्वारा कर्मयोगः कर्तव्यतामर्हतीत्याह **तावदिति** । देवादित्वयोग्यानां मनुष्याणामिदं ज्ञातव्यम् । यद्वा कर्मयोगमेव विशिनष्टि **तावदिति** ।। ९ ।।

कर्मणां बन्धकत्वेन ज्ञानभक्तिद्वारा श्रेयःसाधनत्वं कथमित्याशङ्क्य परिहरन् तत्करणप्रकारमाह **स्वधर्मस्थ इति** । ज्ञानयोगी निराशीः निष्कामः अन्यत् निषिद्धं कर्म न करोति चेत् स्वर्गनरकौ न याति ।। १० ।।

**अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।**
**ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ।। ११ ।।**

**स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ।**
**साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ।। १२ ।।**

**न नरः स्वर्गतिं काङ्क्षेन्नारकीं च विचक्षणः ।**
**नेमं लोकं च काङ्क्षेत देहावेशात् प्रमाद्यति ।। १३ ।।**

**एवं विद्वान् पुरा मृत्योरभावाय घटेत सः ।**
**अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ।। १४ ।।**

**छिद्यमानं कालावयवैः कृतनीडं वनस्पतिम् ।**
**खगः स्वदेहमुत्सृज्य क्षेमं याति ह्यलम्पटः ।। १५ ।।**

---

विहितकर्मणा स्वर्गादिकमप्राप्यं चेत् किं तर्हि लभ्यमत्राह **अस्मिन्निति**। वाशब्द उपमाने समुच्चये वा। यथा ज्ञानमाप्नोति तथा मद्भक्तिं च (एवं) कर्मयोगी च शुद्धज्ञानभक्ती[1] ।। ११ ।।

ज्ञानभक्तिसाधनत्वान्मनुष्यशरीरमुत्तममित्याह **स्वर्गिण इति** । लोकं देहम् । निरयिणः नारकाः । ज्ञानभक्तिभ्यां पुरुषार्थसाधकम् । तदुभयं स्वर्गनरकस्थशरीरं ज्ञानभक्त्योरसाधकं फलरूपत्वात् तस्य। तस्मान्मानुषमुत्तममित्यर्थः ।। १२ ।।

मुमुक्षुणा नरकस्वर्गमनुष्यगतयः सदुःखत्वात् प्रमादहेतुत्वाच्च नाकांक्ष्या इत्याह **न नर इति**। इमं मनुष्यलोकम्। देहप्रवेशात् प्रमाद्यति प्रमादवान् भवति ।। १३ ।।

नन्वस्तु निराकाङ्क्षा तदुत्तरं कार्यं किमत्राह **एवमिति** । पुरा उक्तप्रकारेण स्वर्गादीनां दुःखादिमत्त्वाद् विद्वान् इदं मनुष्यशरीरं मर्त्यमप्यर्थसिद्धिदं ज्ञात्वा मृत्योरभावाय संसारस्योन्मूलनाय घटेतेत्यन्वयः ।। १४ ।।

किञ्चात इत्यत्राह **छिद्यमानमिति**। खैरिन्द्रियैर्गच्छति जानाति विषयानिति खगो जीवः कालावयवैः

---

१. यथा ज्ञानयोगी ज्ञानमाप्नोति भक्तियोगी च भक्तिमेवं कर्मयोगी ज्ञानभक्ती इत्युपमाने। यथा ज्ञानयोगी ज्ञानमाप्नोति मद्भक्तिं च एवं कर्मयोगी शुद्धज्ञानभक्ती इति समुच्चये।

**अहोरात्रैश्छिद्यमानं बुद्ध्वाऽयुर्भयवेपथुः ।**
**मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥**

**नृदेहमासाद्य सुदुर्लभं यः प्लवं सुकल्पं गुरुकर्णधारम् ।**
**मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स मार्गणः ॥ १७ ॥**

**यदाऽऽरम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।**
**अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥**

**धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।**
**अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥**

---

त्रुटिलवादिलक्षणैः छिद्यमानं स्वदेहमुत्सृज्य क्षेमं मोक्षं याति । अलम्पटो विरक्तो ज्ञानसामग्रीमान् । कथमिव । खे गच्छतीति खगः पक्षी । कल च्छेदन इति धातोः कालावयवैः परश्वधादिनिशिताग्रैः छिद्यमानमात्मना कृतनीडं वनस्पतिं विहाय क्षेमं प्राप्तरक्षामिव । अलम्पटः उत्पतनसमर्थः, पट गताविति धातुः ॥ १५ ॥

उक्तमेव विशदयति **अहोरात्रैरिति** । परं परमात्मानम् । संसारादुपशाम्यति शान्तदुःखो भवति । निरीहः निर्णीतहरिचेष्टः ॥ १६ ॥

मानुषत्वमवाप्य संसारसमुद्रतरीं स्वभक्तिमकुर्वतः पुंसोऽधःपात एवेत्याह **नृदेहमिति** । सुष्ठु कल्पवृक्षवदभीष्टसाधनं प्लवं संसारनदीतरणतरीं गुरुरेव कर्णधारो यस्य स तथा तं मया अनुकूलेन नभस्वता वायुनेरितं नृदेहं प्राप्य यः पुमान् भवाब्धेर्मध्यं न तरेत् स मार्गण इति लुप्तोपमा । वेगाख्यसंस्कारनाशे शश्वत् शरीरनाशे अधःपततीत्यर्थः । मद्भक्तिगुरुत्वभावात्[1] नरकं भूमिं वा प्राप्नोतीत्यर्थः ॥ १७ ॥

उपास्तिप्रकारमाह **यदेति** । वौ परमात्मनि रक्तोऽनुरक्तोऽतिस्निग्धः अत एव संयतेन्द्रियो योगी यदा आरम्भेषु कर्मोपक्रमेषु निर्विण्णः आत्मनोऽभ्यासेन पुनःपुनः प्रयत्नेन मनोऽचलं धारयेत् ॥ १८ ॥

शश्वद्विषयोपरक्तमनसश्चञ्चलत्वादचलत्वेन धारणं दुष्करमपि प्रयत्नेन भाव्यमिति भावेनाह

---

१. मद्भक्तिगुणत्वाभावादिति क्वचित् पाठः । अर्थस्तूभयथाप्यस्पष्टः ।

**मनोऽगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ।**
**सत्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥**

**एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः ।**
**हृदयज्ञत्वमन्विच्छन् दमश्चैवेच्छतो मुहुः ॥ २१ ॥**

**साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः ।**
**भवाप्ययावनुध्यायेन्मनो यावत् प्रसीदति ॥ २२ ॥**

**निर्विण्णस्य विरक्तस्य पुरुषस्यात्मवेदिनः ।**
**मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥**

---

**धार्यमाणमिति** । यर्हि यदा धार्यमाणमपि आशु विषयेषु भ्राम्यत् लक्ष्येऽनवस्थितं तदाप्यतन्द्रितो निरालस्यो भूत्वा अनुरोधेन अनुकूलेन मार्गेण मन आत्मवशं नयेदित्यन्वयः ॥ १९ ॥

दार्ढ्यार्थं पुनरुक्तमाह **मन इति** । अगतिं विरुद्धगतिं विषयगतिं प्रति । नाभावान्यविरोधिष्विति यादवः । सत्वगुणसम्पन्नया ॥ २० ॥

सर्वस्मान्मनसः संयमनं प्रधानमित्युपसंहरति **एष इति** । अभ्यासेन च कौन्तेय वैराग्येण च गृह्यत इत्येतस्य संवादमाह **वा इत्यनेन** । योग उपायः । सङ्ग्रहः संयमः । मनःसङ्ग्रहेण किं स्यादत्राह **हृदयेति** । हृदयज्ञत्वं मम प्रियत्वम् । हृद्ययनाद् हृदयं विष्णुस्तं जानातीति हृदयज्ञः, तत्वं हृदयज्ञत्वम् । स एव मम प्रिय इति भावः । हृदयज्ञत्वमन्विच्छन्, मनो नियच्छेदिति शेषः । ततः किमत्राह **दमश्चेति** । मत्प्रियत्वमिच्छतः पुंसो मत्प्रसादेनेतरेन्दियनिग्रहोपि, भवतीति शेषः । मुहुरित्यनेन क्षणमपि विषयानुगतं न स्यादिति ध्वनयति ॥ २१ ॥

अस्तु मनो वशं नयेदिति, तत् केन प्रकारेण स्यादिति तत्राह **सांख्येनेति** । यावन्मनः प्रसीदति भगवति संस्थितं भवति तावत् सर्वभावानां ब्रह्मादिसर्वपदार्थानां प्रतिलोमानुलोमतः व्युत्क्रानुक्रमतः भवाप्ययौ उत्पत्तिविनाशौ, अनुक्रमत उत्पत्तिर्व्युत्क्रमतो विनाश इति क्रमेण, सांख्येन ज्ञानेन अनुध्यायेत्, हरेरिति शेषः । अनेन प्रकारेण मन आत्मवशं नयेदिति भावः ॥ २२ ॥

अनेन योगेन मनः प्रसन्नं स्यात् किम्, अत्राह **निर्विण्णस्येति** । निर्विण्णस्य स्वर्गादिविषय-

**यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया।**
**ममार्चोपासनाभिर्वा नान्यैर्योगं स्मरेन्मनः॥ २४॥**

**यदि कुर्यात् प्रमादेन योगी कर्म विगर्हितम्।**
**योगेनैव दहेदंहो नान्यं यत्नं कदाचन॥ २५॥**

**स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः।**
**विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः॥ २६॥**

---

भोगोऽनित्य इति ज्ञानवतः अत एव तस्मिन् विरक्तस्य शोभनाध्यासबुद्धिरहितस्य। आत्मवेदिनः आत्मानात्मविवेकज्ञस्य। दौरात्म्यं कामकश्मलादि। चिन्तितस्य ध्यानविषयस्य हरेरनुचिन्तया पुनःपुनर्निरन्तरस्मरणेन। मनस्त्यजतीत्यन्वयः॥ २३॥

स्मरणात् पूर्वभाविनो यमादयोप्यावश्यका इति भावेनाह **यमादिभिरिति**। प्रयत्नसाध्ययमादिभ्यः सुखसाध्योपायान्तरमाह **ममार्चेति**। अर्चा प्रतिमा। हरिसन्निधानस्य मुख्याधिष्ठानत्वात् सन्तोप्यत्र प्रतिमेति विवक्षिता इति ज्ञातव्यम्। तत्राप्यशक्तानां स्थावरं च ग्राह्यम्। पुनरपि विकल्पोऽस्ति किम्। नेत्याह **नेति**। एतैरुक्तैरुपायैर्विना अन्यैरुपायैश्चित्तवृत्तिनिरोधलक्षणं योगं मनो न स्मरेदित्यर्थः॥ २४॥

योगिनः प्रामादिकपापपरिहारोपायमाह **यदीति**। योगेन ध्यानेन। अन्यं यत्नं, न कुर्यादिति शेषः। यन्त्रमिति पाठे अन्यत् साधनं नास्तीत्यर्थः[1]॥ २५॥

विहिताविहितकरणयोर्गुणदोषत्वाभावे कयोर्भगवत्प्रियाप्रियनिबन्धनगुणदोषत्वे इत्युद्धवप्रश्नं परिहरति **स्वेस्व इति**। उभयोर्गुणदोषयोरेष निर्णय इत्यन्वयः। विधिनिषेधबद्धं देवादिजनं प्रति मयाऽयमधिकारस्तुभ्यं दत्तोऽयमधिकारस्तवेति यथायथोपदिष्टं तथातथा स्वेऽधिकारे विहितकर्मणि या निष्ठा व्रतनियमः स गुणः[2] मत्प्रीतिजनकत्वात्। परिकीर्तितः, मयेति शेषः। विपर्ययोऽनधिकारे

---

१. नान्यद् यन्त्रं कदाचनेति पाठान्तरं स्यात्।

२. ''देवादिजनं प्रति वेदे अत्रास्याधिकारोऽत्रानधिकार इति यथायथोपदिष्टं तथातथा स्वेस्वेऽधिकारे विहिते कर्मणि या निष्ठा नियमः स गुणः'' इति पाठान्तरं विधिनिषेधबद्धमित्यारभ्य स गुण इत्येतदन्तवाक्यस्थाने दृश्यते।

**कर्मणां जात्यशुद्धानामनेन नियमः कृतः।**
**गुणदोषविधानेन त्वंहसां त्याजनेच्छया॥ २७॥**

**जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु।**
**वेद दुःखात्मकान् कामान् परित्यागेप्यनीश्वरः॥ २८॥**

---

अविहितकर्मणि या निष्ठा स दोषः परिकीर्तितः। मदप्रीतिहेतुत्वात्। तुशब्देन निषिद्धस्य वृत्रहत्यादेर्गुणत्वं विहितस्याप्यसुरादिकृतस्य दोषत्वं च वक्ति। इन्द्रो वै वृत्रं हत्वा महानास, य ईं शृणोत्यलकं शृणोतीत्यादिवचनात्॥ २६॥

विहिताविहितकरणाद् गुणदोषोक्तिर्भगवत्प्रियाप्रियविषयेत्याशयेनाह **कर्मणामिति**। विधिनिषेधात्मको वेदो जात्यशुद्धानां स्वतोऽशुद्धानां कर्मणां नियमेन गुणदोषभेदमपेक्षत इति यो नियमस्त्वयोक्तः स नियमो मदिष्टो गुणो मदनिष्टो दोष इति विवेकमजानतां पुंसां न तु विदुषां पक्ष इति विहितकरणेन गुणो निषिद्धकरणेन दोष इत्यनेन गुणदोषविधानेन अंहसां त्याजनेच्छया नियमो मया कृतः। स्वतोऽशुद्धानां गुणत्वं कथं स्यादित्यत उक्तम् **त्विति**। विध्यनुसारेणानुष्ठाने गुणत्वमेव स्यादित्यर्थः। विध्यनुसारित्वं च मत्प्रियोपहितत्वमित्यपि विशेषं तुशब्द एव वक्ति।

भगवत्प्रियाप्रियत्वे गुणदोषयोः कारणं चेद् वेदे तद्विधानं किमर्थं क्रियत इत्यतो वाह **कर्मणामिति**। गुडजिह्विकान्यायेन अंहसां त्याजनेच्छया स्वतोऽशुद्धानां कर्मणां अनेन गुणदोष-विधानेन नियमः कृतो न तु प्रियाप्रियत्वनिषेधेन। कर्मबहिर्मुखानां कर्मणि बुद्ध्यवतारार्थं शाखाचन्द्रन्याय-वत्। अन्यथा जात्यशुद्धानां शुद्धत्वं न स्यात्, अतो मत्प्रियाप्रियत्वे गुणदोषयोः कारणम्, अनेवंवित् महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवेति श्रुतेरित्यर्थः।

गुणदोषयोः कारणं भगवत्प्रियाप्रियत्वनियमः कस्मादित्यतो वाह **कर्मणामिति**। अंहसां त्यागेच्छया जात्यशुद्धानां कर्मणामनेन गुणदोषविधानेन मत्प्रियत्वाप्रियत्वनियमः कषायोपरिचूर्णवत्। अन्यथा जात्यशुद्धानां पापहरणसामर्थ्यानुदयादचिकित्सितौषधवद् यथा पङ्केन पङ्काम्भ इतिवत् स्यादतो मत्प्रियत्वेन मदर्पणेन कर्म कर्तव्यमिति भावः॥ २७॥

मत्प्रियाप्रियविवेकज्ञानेन गुणदोषविदो भक्तियोगिनो देवा इत्याशयेन भक्तियोगिनां स्थितिं विदधानो निगमयति **जातश्रद्ध इति**। यतो मत्प्रियाप्रियनिबन्धनौ गुणदोषौ ततो मां भजेतेत्य-न्वयः। कीदृशो भक्तियोगी। प्रारब्धादृष्टाद् विषयपरित्यागेऽनीश्वरोपि शास्त्रज्ञानेन मत्कथासु जातश्रद्धत्वेन सर्वकर्मसु निर्विण्णो यः कामान् विषयान् दुःखानां प्रापकान् वेद॥ २८॥

**ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ।**
**जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ।। २९ ।।**

**प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।**
**कामा हृदिस्था नश्यन्ति सर्वे मयि हृदि स्थिते ।। ३० ।।**

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ।। ३१ ।।**

**तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।**
**न ज्ञानान्न च वैराग्यात् प्रायः श्रेयो भवेदिह ।। ३२ ।।**

---

यश्च प्रीतः श्रद्धालुः, प्रेत्यापि भगवदुपास्तिं न मुञ्चतीत्यर्थः, अत एव दृढनिश्चयो भजन्, विरोधिनः कामान् जुषमाणश्च दुःखोदर्कान् निषिद्धान् कामान् गर्हयंश्च, स इत्यर्थः ।। २९ ।।

विषयसेविनो योगिनः कर्दमगर्ते पतत् पर्णवत् ततः कदाप्युत्थानं न स्यादित्यतः तद्भजनफलमाह **प्रोक्तेनेति** । उक्तलक्षणेन भक्तियोगेन असकृत् सदा निरन्तरं मां भजतो मुनेरपरोक्षज्ञानिनो भक्तियोगिनो हृदि स्थिताः अनभीष्टाः कामाः सर्वे निर्मूलतया नश्यन्ति । कदा । मयि हृदि स्थिते प्रकाशमाने सति ।। ३० ।।

एतदेव विवृणोति **भिद्यत इति** । हृदयग्रन्थिः प्राकृतान्तःकरणाख्यो बन्धः लिङ्गशरीरलक्षणः । अखिलात्मनि सर्वगते मयि दृष्टे अपरोक्षिते, सतीति शेषः ।। ३१ ।।

यस्मात् पूर्वकर्मणां विनाशेन किञ्चिद्भुक्तस्योपमर्देनोत्तरस्याश्लेषेण भक्तियोगिनः सर्वपुरुषार्थोत्तमः **तस्मादिह** जीवराशौ मदात्मनो मदेकचित्तस्य मद्भक्तियुक्तस्य योगिनो देवजातेः ज्ञानाच्छ्रेयो न **भवेद्** वैराग्याच्च तस्मादित्यन्वयः[१] । नन्वेवं ज्ञानवैराग्याभ्यां श्रेयउक्तिः कथमित्यत उक्तम् **प्राय**

---

१. अस्पष्टमिदं वाक्यम् । ''मद्भक्तियुक्तस्य भक्त्युनुसारिज्ञानवैराग्ये विनाऽन्यस्माज्ज्ञानाद् वैराग्याच्च न श्रेयो भवेत्'' इति तात्पर्यकारस्य वचनम् । तदनुसृत्य सुधीन्द्रतीर्थैर्वाक्यभेदमाश्रित्यैवं व्याख्यातम् - अवतारापरोक्षस्यासुराणामपि सत्वात् तेषां पापक्षयः कस्मान्न भवतीति जिज्ञासायामाह तस्मान्मद्भक्ति-युक्तस्येति । मदात्मनः मां ध्यायतो वैराग्याद् भक्तिप्राप्तात्, भक्तिप्राप्तापरोक्षाच्च श्रेयः कर्मक्षयादिश्रेयः प्रायः प्रारब्धलक्षणप्रतिबन्धाभावे इह देहे भवेत् । ख्यातिलाभपूजार्थं सम्पादिताद् वैराग्याज्ज्ञानाच्च श्रेयो न भवेत् । तस्मात् साधनेषु भक्तिः प्रधानमित्यर्थः'' इति ।

**यत् कर्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत् ।**
**योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३३ ॥**

**सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।**
**स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥ ३४ ॥**

**न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।**
**वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३५ ॥**

**नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमकल्मषम् ।**
**तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३६ ॥**

**न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।**
**साधूनां समचित्तानां बुद्धेः पारमुपेयुषाम् ॥ ३७ ॥**

---

**इति**। भक्त्यनुसारिज्ञानवैराग्ये विना अन्यस्मात् ज्ञानाद् वैराग्याच्च श्रेयो निषिध्यते। देवानां रागित्वेपि मुक्तिसम्भवात् । ''रागिणोपि विमुच्यन्ते देवा नास्त्यत्र संशयः । रागापनोदनार्थं च ज्ञानं साध्यं व्रतीश्वरैः'' इति वचनात् । किञ्च ''स्मर्तव्या विषये दोषा यतिभिर्नतु दैवतैः । हरिरेव सदा पूज्य इत्यर्थं दैवतैरपि'' इति च ॥ ३२ ॥

कर्मादिना प्राप्यं यच्छ्रेयो न तत् त्वद्भक्त्या स्यादित्याशङ्का माभूदित्याह **यत् कर्मभिरिति**। यदि वाञ्छति तर्हि लभते, न तत्रेतरापेक्षास्तीत्यर्थः। । योगेन प्राणायामलक्षणेन ध्यानेन वा ॥ ३३ ॥

ननु यदीति व्यर्थं, रागिणां तेषां सर्वाभिलाषसम्भवादिति तत्राह **न किञ्चिदिति**। रागिणोपि ते भक्तिफलबुद्ध्या न किञ्चिद् वाञ्छन्ति ॥ ३४-३५ ॥

सुखं न वाञ्छन्ति चेत् ते दुःखयोग्याः किम् । नेत्याह **नैरपेक्ष्यमिति**। नैरपेक्ष्यमकल्मषं निष्पापं परं पूर्णं निःश्रेयसं प्राहुरिति यस्मात् तस्मात् । त्वदेकपरायणानां तेषां सुखलक्षणं फलम्, अन्यथा पाषाणत्वमपि श्रेयः स्यादित्याशङ्कां परिहरन्नुपसंहरति **तस्मादिति**। निराशिषः संसारविषयनिर्मुक्तस्य मे सकाशात् तस्य भक्तिरानन्दरूपिणी भवेदित्यन्वयः । यतो भक्तिविषयेण भक्ताय फलं देयमत इति । ''यदि दद्याद् भक्तियोगफलं मोक्षमपीश्वरः । भक्तियोगफलत्वेन न तद् गृह्णीयुरेव ते'' इत्यस्माद् वाक्यान्मुक्तिफलाद् भक्तिलक्षणसाधनस्याधिकानन्दबुद्ध्येत्यर्थः ॥ ३६ ॥

भक्तियोगिनो रागिणश्चेद् तेषां विषया गुणदोषोद्भावकाः स्युरिति तत्राह **नेति** । कामित्वेपि

**एवमेतान् मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः ।**
**क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥ ३८ ॥**

**॥ इति विंशोऽध्यायः ॥**

**॥ अथ एकविंशोऽध्यायः ॥**

**श्रीभगवानुवाच -**

**य एतां मत्कथां हित्वा भक्तिज्ञानक्रियात्मिकाम् ।**
**क्षुद्रान् कामान् खलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥**

---

तेषां भक्तिफलत्वेन विषयभोगाभावाद् गुणाः विषयाः गुणदोषोद्भावका न भवन्ति । कुतः । समचित्तानां समत्वेन मत्प्रियविहितकरणान्मदप्रियनिषिद्धवर्जनाच्च । एतदपि कुत इत्यत उक्तम् **बुद्धेरिति** । बुद्धेः प्रकृतेः पारमाप्तुकामानां मदेकहितकरणस्य युक्तत्वादित्यर्थः । अनेनैषां वैराग्यमप्यधिकमित्युक्तं भवति । तदुक्तम् ''कामिनोपि स्वयं कामान् भुञ्जते न फलात्मना । तस्माद् विरागेऽप्यधिका देवा एव हि तादृशाः'' इति ॥ ३७ ॥

त्रयाणामपि योगिनां फलमाह **एवमेतानिति** । कर्मयोगिनः क्षेमं विन्दन्ति ज्ञानयोगिनो वैकुण्ठादिस्थानं भक्तियोगिनो ब्रह्म तत्रापि मुख्यभक्तिभाग् ब्रह्मा परमं ब्रह्म विन्दतीति । ''उत्तमो भक्तियोगस्तु ज्ञानयोगस्तु मध्यमः । अधमः कर्मयोगश्च ब्रह्मैको मुख्यभक्तिभाक् । ज्ञानमप्यधिकं तेषां नियतं भक्तियोगिनाम् । उदेति भगवद्भक्त्या तद्वन्न ज्ञानयोगिनः । भक्त्यंशकं यतो ज्ञानं ज्ञानस्नेहात्मिका च सा । तथापि ज्ञानयोगित्वं मानुषज्ञानतोऽधिकम् । भक्तियोगे ततो यत्नः कार्यो विद्वद्भिरञ्जसा'' इत्यत फलतारतम्यमवगन्तव्यम् ॥ ३८ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य विंशोऽध्यायः ॥**

कर्मयोगिनां भगवत्प्रियत्वेन द्रव्यदेशादिशुद्धिकथनपूर्वकं कर्मकरणप्रकारं वक्त्यस्मिन्नध्याये । तत्र कथितानां त्रयाणां मध्ये एकमप्यननुतिष्ठतां गतिमाह **य एतामिति** । भक्तिज्ञानक्रियात्मिकां भक्तिज्ञानकर्मयोगविषयाम् ॥ १ ॥

**स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।**
**विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥**

**शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।**
**द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥**

**धर्मार्थं व्यवहारार्थं[1] यात्रार्थमिति वाऽनघ ।**
**दर्शितोऽयं मयाऽऽचारो धर्म्यमुद्वहता धुरम् ॥ ४ ॥**

**भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ।**
**आब्रह्मस्थावरादीनां शरीरा आत्मसंयुताः ॥ ५ ॥**

**भेदेन नामरूपाणि विषमाणि समेष्वपि ।**
**धातुशुद्ध्यै विकल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥**

---

यथा गुणदोषौ मत्प्रियाप्रियोपहतविहितकरणनिबन्धनौ एवं गुणदोषमूले पुण्यापुण्यनिबन्धने शुद्ध्यशुद्धी अपि मत्सन्निधानविशेषतदभावकृते न ब्राह्मणजात्यादिकृते इति पूर्वोक्तानुवादपूर्वं शुद्ध्यशुद्धिव्यवस्थामाह **स्वे स्व इति** । उक्तार्थोयम् ॥ २ ॥

पञ्चभूतात्मकत्वेन समानेष्वपि वस्तुषु द्रव्यस्य शुद्ध्यशुद्धी गुणदोषौ शुभाशुभौ च मत्सन्निधानविशेषतदभावकृतत्वेन विधीयेते । किमर्थमत उक्तम् **विचिकित्सार्थमिति** । शुद्ध्यशुद्धिविवेकज्ञानेन पुण्याधिक्येन सुखाधिक्यं भवतीति ज्ञापनार्थमिति । ''पञ्चभूतात्मकत्वेन समता सर्ववस्तुषु । हरिसन्निधिवैशेष्याद् विशेषश्च महान् सदा'' इति वचनात् ॥ ३ ॥

एतदेव विवृणोति **धर्मार्थमिति** । सुकृतादिप्रयोजनमुद्दिश्य । धर्म्यं धर्मसाधनं धुरमुद्वहता मया । यात्रार्थं शरीरयापनार्थम् ॥ ४ ॥

शुद्ध्यशुद्धी इत्युक्तमेव विवृणोति **भूमीति** । स्थावरादीनामाब्रह्मपर्यन्तानां जीवानामात्मना संयुता शरीरा भूम्यादयः पञ्चधातवः महाभूतानि ॥ ५ ॥

पञ्चभूतात्मकत्वेन समानेष्वपि ब्रह्मादिस्थावरान्तेषु धातुः परमेश्वरः, य उ त्रिधातु पृथिवीमिति

---

१. इदं शुद्धमिदमशुद्धमितिज्ञानपूर्वकं हानोपादानादिव्यवहारार्थमिति सुधीन्द्रतीर्थाः ।

**देशकालादिभावानां वचनान्मम सत्तम ।**
**गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥**

**कृष्णसारोऽथ देशानां ब्राह्मणानां शुचिर्भवेत् ।**
**कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणः ॥ ८ ॥**

---

श्रुतिः, तस्य सन्निधानविशेषात् शुद्ध्यै तदसन्निधानविशेषादशुद्ध्यै च भेदेन तारतम्यलक्षणेन विषमाणि नामरूपाणि विकल्प्यन्ते विविधत्वेन कल्प्यन्ते व्यवहारयोग्यायोग्यानि क्रियन्ते, विद्वद्भिर्मया चेति शेषः । किमर्थम् । एतेषां देहित्वेन प्रत्यक्षलक्षणानां स्वार्थसिद्धये स्वयोग्यपुरुषार्थसिद्धय इति । ब्रह्मस्थावरादीनाम् आ स्मृतिलक्षणज्ञानयोग्यानामित्यर्थः, वाक्यस्मरणयोरङिदिति वचनात् । ''यद्यद् हरेः सन्निहितं तत्तच्छुद्धतरं मतम् । स्वतः शुचितमो विष्णुः सान्निध्यं च स्वभावतः'' इति वचनात् ॥ ६ ॥

देशादीनां श्रुतिस्मृतिलक्षणं मम मुखोद्गतं वचनमेव गुणदोषयोर्विवेचकमित्याह **देशेति** । अयं देशोऽयं काल एतद् द्रव्यमितीमानि कर्मयोग्यानि नेतराणीति मम वचनाद् देशादीनां गुणदोषौ विधीयेते । कर्मणां नियमार्थं फलसाधनार्थम् ॥ ७ ॥

कीदृशाः देशाः शुचय इत्यतस्तानाह **कृष्णसार इति** । ब्राह्मणानां कर्मकरणाय कृष्णसारो नाम मृगो देशानां शुचिः शुद्धिकरो भवेत् । कृष्णसारो यं देशमधिवसति स देशः शुचिरित्यर्थः । अथशब्देन कृष्णसारविधुरोपि देशः शुचिरिति सूचयति । ''नदीसमुद्रगिरय आश्रमाश्च वनानि च । नगराणि च दिव्यानि शालग्रामादयस्तथा । तेषां समीपगाश्चैव देशा योजनमात्रतः । कर्मण्यास्तु समाख्यातास्तदन्ये कीकटाः स्मृताः । तदन्येपि तु ये देशाः कृष्णसारोषिताः स्वतः । कर्मण्या एव ते ज्ञेयाः'' इति वचनात् । उक्तस्यापवादमाह **कृष्णसारोपीति** । कृष्णसारोपि सौवीरकीकटासंस्कृतेरिणेभ्योऽन्यदेशस्य शुचिहेतुः । एषां स्ववासेनापि शुचिकरो नेत्यर्थः । खर्पराद्युषितो देशोऽसंस्कृत इत्युच्यते । तदुक्तम् ''यदि नाध्युषिता खलैः'' इति । तत्रापि विशेषोऽस्तीत्युक्तम् ''खलैरध्युषिताश्चापि यदि सद्भिरधिष्ठिताः । कर्मण्या इति विज्ञेया विष्णुलिङ्गानि यत्र च'' इति । ईरिणदेशो लावाणिक उपद्वीपादिकः ॥ ८ ॥

**कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा।**
**यतो निवर्तते कर्म सदोषोऽकर्मकः स्मृतः ॥ ९ ॥**

**द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन वा।**
**संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथ वा ॥ १० ॥**

**शक्त्या शक्त्या च वाग्बुद्ध्या समृद्ध्या च तथाऽऽत्मनः।**
**अन्ये शुद्ध्यन्ति हि तथा देशावस्थानुसारतः ॥ ११ ॥**

---

देशान् निरूप्य कर्मयोग्यं कालमाह **कर्मण्य इति**। कर्मण्या इति विज्ञेया इत्यादिप्रमाणसिद्धोऽयमर्थ इति प्रकटनाय कर्मण्य इति स्मृत्युक्तशब्दानुवादः। गुणवानावृत्तिमान् कालः कर्मण्यः यज्ञादिकर्म-योग्यः। स च द्विविधो द्रव्यतः स्वत इति। वाशब्देन द्वावपि योग्याविति वक्ति। एवशब्देन तृतीयो नास्तीति निश्चीयते। द्रव्यतः कर्मण्यो वसन्तादिलक्षणः। स्वतः कर्मण्यो सन्ध्यादिलक्षणः। कालस्य गुणवत्त्वं नाम किं येन कर्मावर्तते इति तं विविनक्ति **यत इति**। यतो यस्मिन् काले निषेधात् कर्म निवर्तते न क्रियते स कालः सदोषः निषिद्धः अकर्मकः कर्मानर्हः निशीथादिलक्षणः स्मृतः। निशीथो मध्यमा रात्री राक्षसानां तु गोचर इत्यादिना यतो दोषात् कर्म निवर्तते तेन दोषेण युक्तत्वात् कालः सदोषत्वादकर्मकः ॥ ९ ॥

द्रव्यस्य शुद्ध्यशुद्धिप्रकारोपि बहुविध इत्याह **द्रव्यस्येत्यादिना**। ताम्रादेर्द्रव्यस्याम्लादिद्रव्यसंयोगेन शुद्धिः। भाण्डादिद्रव्यस्य तूच्छिष्ठामेध्यसुरादिसंयोगेनाशुद्धिः। महतां वचनेन शुद्ध्यशुद्धी स्तः। तद्यथा। अभक्ष्यत्वं यतिपात्रत्वं चालाम्बुनो दृष्टम्। केषांचित् प्रक्षालनादिसंस्कारेण शुद्धिः असंस्कारेणाशुद्धिः। गर्दभयानमसंस्कृतवाणीत्यादेः। केषांचिदयोग्यापहृतगृहादिद्रव्यविशेषाणां कालतः शुद्धिः अन्नादीनां कालेनाशुद्धिः। अन्नादीनां महत्त्वे श्वादिस्पर्शे स्पृष्टांशत्यागेन शिष्टस्य शुद्धिः। अथवा अन्नस्याल्पतयाऽल्पत्वेन शुना स्पृष्टस्य तस्याशुद्धिः। अल्पस्यापि पापस्य पिपीलिकाहननादेरशुचित्वं न, महतो द्रव्यस्य वधादशुद्धिः ॥ १० ॥

शक्त्या शुद्धिः शक्तस्य पुंसः तीर्थयात्रादिना ब्राह्मणयाचनादिना[१] वा शुद्धिः। अशक्तस्य ज्वरादिरोगपीडितस्य देवार्चनादिलक्षणनित्यकर्मानुष्ठानेन शुद्धिः। अशुद्धस्यापि महतां वाचा

---

१. ब्राह्मण्या व्रतादिना इति पाठान्तरम्।

**धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ।**
**कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥ १२ ॥**

**अमेध्यलिप्तं यद् येन गन्धलेपं व्यपोहति ।**
**भजते प्रकृतिं तस्य तच्छौचमुपदिश्यते ॥ १३ ॥**

**स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः ।**
**मदभ्यासान्मनःशौचं कृत्वा कर्माचरेद् द्विजः ॥ १४ ॥**

**मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ।**
**धर्मः सम्पाद्यते सद्भिरधर्मस्तु विपर्ययैः ॥ १५ ॥**

---

शुद्धिः । शुद्धस्यापि बहूनां वाचा त्वशुद्धिः । बुद्धिरपि शुद्ध्यशुद्धिहेतुः । तथा हि । सुरापानादिपापनिश्चये अशुद्धिः । हरिकथाश्रवणादिपुण्यनिश्चये शुद्धिः । तथा समृद्धिः सम्पद् आत्मनः शुद्ध्यशुद्ध्योः कारणम् । सत्पात्रदानादिसद्व्ययेन शुद्धिः । असत्पात्रप्रदानगणिकादिभोगविषया अशुद्धि-कारणम् । अन्ये मांसविशेषाः सोमादिद्रव्यविशेषाश्च देशावस्थानुसारतः शुद्ध्यान्त्यशुद्ध्यन्ति हि । तथा हि । मांसविशेषा विन्ध्यादुत्तरदेशे शुद्धाः दक्षिणदेशे त्वशुद्धाः । तथा सोमादिद्रव्यविशेषा यज्ञकर्माद्यवस्थायामेव शुद्धा नान्यदा ॥ ११ ॥

पार्थिवानां पृथिवीविकाराणां धान्यादीनां युतायुतैः कालादिभिः शुद्धिः । धान्यानामयुतेन एकेन कालेन । दारुपात्राणामस्थ्नां शङ्खादीनां च युताभ्यां मृत्तोयाभ्याम् । तन्तूनामयुतेन केवलतोयेन । आज्यादिरसानां तैजसानां कांस्यादीनां चायुतेनाग्निना । चर्मणां युताभ्यां मृत्तोयाभ्यां शुद्धिरित्यर्थः ॥ १२ ॥

यदमेध्यलिप्तं येन गन्धं लेपं च व्यपोहति । येन तस्य (स्वस्य) प्रकृतिं भजते तस्य वस्तुनः तच्छौचं शुद्धिरुपदिश्यते ॥ १३ ॥

कर्माङ्गशुद्धिप्रकारमाह **स्नानेति** । अवस्था यौवनादिलक्षणा । वीर्यं माहात्म्यं शक्तिर्वा । संस्कार ऊर्ध्वपुण्ड्रादिधारणम् । कर्म नित्यसन्ध्यावन्दनादि मत्पूजावसानम् । एभिः मनःशौचं मनसः शुद्धिं कृत्वा अभीक्ष्णं कर्माचरेत् ॥ १४ ॥

ऋष्याद्युपेतस्य मन्त्रस्य परिज्ञानम्, आपादनीयमिति शेषः । कर्मणः शुद्धिः कथमित्यत उक्तं

**क्वचिद् गुणोपि दोषः स्याद् दोषोऽपि विधिना गुणः।**
**गुणदोषार्थनियमस्तद्भिदामेव बाधते ।। १५ ।।**

**समानकर्माचरणेऽपतितानां न पातकम्।**
**औत्पत्तिको गुणो सङ्गो न शयानः पतत्यधः ।। १७ ।।**

---

मदर्पणं ब्रह्मार्पणमस्त्विति (अनुसन्धानम्)। एतैः साध्यं किमत्राह **धर्म इति**। धर्मो मद्भक्तिलक्षणः सम्पाद्यते। तत्राधिकारिण आह **सद्भिरिति**। विपर्ययैः मदर्पणमकुर्वद्भिः असद्भिः एतैरधर्मः पापलक्षणः सम्पाद्यत इत्यन्वयः। ''आन्तरः सन्निधिर्विष्णोर्बाह्यः सन्निधिरेव च। द्विविधः सन्निधिः प्रोक्तः कृत्रिमो बाह्य उच्यते। स्वाभाविकस्त्वान्तरः स्यात् प्रतिमाजीवगो यथा'' इति वचनेन सन्निधानार्थं ब्रह्मार्पणं कर्तव्यमिति ज्ञायते ।। १५ ।।

इतोपि भगवदर्पणं कर्तव्यमन्यथा कृतहानाकृताभ्यागमौ स्यातामिति भावेनाह **क्वचिदिति**। क्वचित् कर्मणि विहितत्वेन गुणोपि दोषः स्यात्, मद्भक्तेनानर्पितत्वेनानुष्ठितत्वाद्, अन्तत इति शेषः। अपि विधिना ब्राह्मणो न हन्तव्य इति निषेधविधिना दोषोपि गुणः स्यात्। यथेन्द्रस्य वृत्रहत्या ऋषिनारायणप्रीतिजनकत्वात्। ननु गुणदोषविधाननियमः कथमत्राह **गुणेति**। गुणदोषाभ्यामर्थनियमः स्वर्गनरकादिफलनियमः तौ गुणदाषौ विदन्ति जानन्तीति तद्विदो मनुष्यादयः, तेषामेव बाधते क्लेशकरो भवति। प्रयत्नसाध्यत्वात्। एवशब्देन तिर्यगादयो व्यावर्त्यन्ते। श्रुतेर्ग्रहणशक्त्यभावात् तेषाम्। अतो मनुष्यादीन् प्रति विधीयमानौ गुणदोषौ भगवदर्पणाभावे स्वर्गनरकादिफलं दत्त इत्युक्तम्। तद्विधानं तद्विदामित्यनेन मनुष्यादिष्वपि शुभाशुभज्ञानयोग्यवयसां तदजानतां महानज्ञानजो दोषो मूर्खाणां तिर्यगादीनां तदभावश्चेति सूच्यते। ''वर्षाच्चतुर्दशादूर्ध्वं ये न विद्युः शुभाशुभम्। तेषामज्ञानजो दोषो सुमहान् कर्मजादपि'' इति ''तिरश्चामिन्द्रियाशक्तेर्न दोषोऽज्ञानजो भवेत्। गुणोपि नैव कश्चित् स्याद् यतो ज्ञानबहिष्कृताः'' इति वचनात् ।। १६ ।।

गुणदोषनिमित्तबाधा यथा न स्यात् तं प्रकारं वक्ति **समानेति**। अपतितानां विप्रादीनां समानकर्माचरणे मदर्पणेनात्मयोग्यकर्मकरणे पातकं न स्यात्। तथा पूर्वमपतिता विप्रादयो येन कर्मणा पतन्ति तत्समानकर्माचरणे तप्तसुरापानतप्तस्त्रीमूर्त्याद्यालिङ्गनादिके देहत्यागिवद् दोषलक्षणं तत् कर्म पातकं च न भवति। तथा शयानः शूद्रश्च ब्राह्मणादिपातित्यहेतुभिर्लशुनभक्षणादिभिरधो न

**यतो यतो निवर्तेत विमुच्येत ततस्ततः ।
एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥**

**विषयेषु गुणध्यानात् पुंसः सङ्गस्ततो भवेत् ।
सङ्गादेव भवेत् कामः कामादेव कलिर्नृणाम् ॥ १९ ॥**

**कलेर्दुर्विषहः क्रोधस्तमस्तदनुवर्तते ।
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी ततः ॥ २० ॥**

---

पतति । अध इति विशेषणात् सुरापानादिभिरेव पतति । कुतो न पततीत्यत उक्तम् **औत्पत्तिक इति** । तस्य शूद्रस्य लशुनभक्षणादिलक्षणैः गुणैरमुख्यैः कर्मभिः सङ्गः औत्पत्तिकः स्वाभाविको यतस्तस्मात् स्वायोग्य एव कर्मणि पततीत्यर्थः । ''त्रैवर्गिकाः सञ्चरन्तो वेदकर्मप्रवर्तनात् । शयानः शूद्र उद्दिष्टो वेदकर्माप्रवर्तनात् । न तस्याभक्ष्यजो दोषः शुश्रूषायां प्रवर्ततः । यथा सुवर्णस्य मलं शुक्लं ताम्रस्य नैव तत् । एवं विप्रादिदाषैस्तु न शूद्रो दोषितामियात् । मलं तु तस्यापि मलं यथैवं शूद्र-जन्मनः । स्वधर्मप्रतिरूपस्य चरणं दोषदं मतम्'' इति वचनात् ॥ १७ ॥

किं बहुनोक्तेन । सर्वतोऽप्यभिमानत्यागेन श्रीनारायणसमर्पणमेव समस्तदोषनाशकरमित्याह **यतो यत इति**। यतो यतः कर्मणो नाहं कर्तेति निवर्तेत अहंकारराहित्येन यद्यत् कर्म परमेश्वरार्पणबुद्ध्या करोति ततस्ततः कर्मणो विमुच्येत तत्तत् कर्म बन्धकं न स्यादित्यर्थः । तत्कर्तव्यताया बुद्ध्यवतारार्थं स्तौति **एष इति** । एषः परमेश्वरसमर्पणलक्षणो धर्मः क्षेमः संसारमुक्तिहेतुः । मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसेत्यादेः ॥ १८ ॥

विपक्षे बाधकमनर्थलक्षणमाह **विषयेष्विति** । अयमर्थः । भगवदर्पणबुद्धिराहित्येन क्रियमाणं कर्म शब्दादिविषयेषु गुणबुद्धिं जनयति तृष्णिका पयःपूरमतिमिव । तदनु निरङ्कुशस्य पुंसो विषयेषु गुणध्यानात् सुखसाधनत्वध्यानात् तेषु स्नेहलक्षणः सङ्गः स्यात् । ततस्तेषु काम इच्छा स्यात् । इच्छातः कलिः, कल द्रावण इति धातोः, चेतनधर्मज्ञानद्रावणहेतुरधर्माज्ञानात्मा विशति ॥ १९ ॥

कलेरावेशात् स्वाभीष्टपरिपन्थिषु सत्सु दुर्विषहः क्रोधः स्यात् । तदनु द्वेषानन्तरं तमो वर्तते । ततस्तमसि मग्नस्य पुंसः व्यापिनी इन्द्रियसन्तता चेतना सुखानुभवशक्तिः तमसा दुःखोद्रेकेण ग्रस्यते नष्टा भवति ॥ २० ॥

**तया च रहितः साधो जन्तुः शून्याय कल्पते।**
**ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च॥ २१॥**

**विषयाभिनिवेशेन नात्मानं वेद नापरम्।**
**वृक्षजीविकया जीवन् व्यर्थं ग्रस्तवयाः श्वसन्॥ २२॥**

**फलश्रुतिरियं नॄणां नः श्रेयोरोचनं परम्।**
**श्रोतुर्विवक्षया प्रोक्तं यथा भैषज्यरोचनम्॥ २३॥**

---

तयाऽनुभवशक्त्या रहितो जन्तुरासुरो जीवः शून्याय सुखनाशाय कल्पते। नित्यत्वाच्चेतनस्य न स्वरूपेण नाशः किन्तु सर्वात्मना सुखनाश एवेत्याह **तत इति**। चशब्द एवार्थे। ततो मृतस्य अन्धंतमःपतनानन्तरमस्य मूर्च्छितस्य दुःखसमुद्राभिभूतत्वेन निःसञ्ज्ञस्य स्वार्थस्य सुखस्य विभ्रंशः स्वरूपतो हानिर्भवति॥ २१॥

न केवलं सर्वात्मना सुखनाशः, तस्य निरतिशयं दुःखमपि भवतीत्याह **विषयेति**। विषसाम्यं यातीति विषयो दुःखं तस्याभिनिवेशेन उद्रेकेण आत्मानं न वेद अपरं प्रतियोगिनं च न वेत्ति। स्वानुवभवमन्तरेण न किञ्चिद् वेत्तीत्यर्थः। स्वपरविषयज्ञानं नास्ति चेच्छून्यवादप्रवेश आपन्न इति तत्राह **वृक्षेति**। भगवद्भागवतप्रद्वेषातिशयेन नित्यं तमःपतितो निरन्तरं दुःखमेवानुभवन् यमकिङ्करैरविरतं वृश्च्यमानत्वेन वृक्षजीविकया वृक्षजीवनवद् व्यर्थं जीवन् निष्प्रयोजनो ग्रस्तवयाः दुःखपरीतायुः दृतिच्छ्वसन्नास्त इत्यन्वयः। ''दोषिणो गुणवत्त्वेन श्रूयन्ते विषया सदा। असतां सङ्गतेस्तेषु दोषाः श्रोतुं सुदुर्लभाः। अतो नित्यगुणध्यानात् तद्गुणे प्रीतिमान् भवेत्। अतस्तत्र भवेत् कामः कामिनं कलिराविशेत्। अधर्माज्ञानरूपेण कलिनाऽऽविष्टदेहिनः। सत्सु क्रोधो दुर्विषहस्ततस्तमसि पात्यते। अन्धे तमसि मग्नस्य चेतनेन्द्रियसङ्गता। सुखानुभवशक्तिर्या सा विनश्यति सर्वदा। तदा शमूनभावेन शून्य इत्युच्यते नरः। सर्वात्मना तु शंभ्रंशस्तस्य दुःखविवर्धनः। अमूर्च्छितस्य च भवेन्मृत्यनन्तरमेव च। दुःखाख्यविषयावेशान्नात्मानं परमेव च। यथावद् वेत्ति पतितस्तमस्यन्धे कदाचन। वृक्षवद् वृश्च्यते नित्यं निष्प्रयोजनजीवनः। नित्यदुःखपरीतायुर्दृतिवत् प्रश्वसित्यपि'' इति वचनादसुरजनविषयोऽयमिति ज्ञायते॥ २२॥

श्रुतिविहितत्वात् स्वर्गादिषियेच्छा सतां स्यादित्याशंक्य एतद्विषयदृष्टान्तेन स्वर्गादि-विषयस्यानित्यसुखहेतुत्वेन न तत्रेच्छा कार्या, श्रुतिर्भैषज्यरोचनार्थमिक्षुदण्डदानवत् स्वर्गादिवादिनी मुख्यतो मुक्तिपरेत्याह **फलश्रुतिरिति**। इयं फलश्रुतिः मोक्षफलश्रवणेन चरितार्थत्वात् न स्वर्गादि-

**उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च।**
**आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥**

**न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि।**
**कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः ॥ २५ ॥**

**एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः।**
**फलश्रुतिं कुसुमितामवेदज्ञा वदन्ति हि ॥ २६ ॥**

---

कुसुमश्रुतिः। तथात्वे वेदस्यानर्थहेतुत्वं स्यात्। न तद् युक्तम्। "स्वर्गादिकामनायुक्तस्त्वैहिकेष्वपि सज्जते। तत्रापि देवकामेभ्यो विशेषं चाभिवाञ्छति। ततस्तमसि पातः स्यादतो वेदः कथं हि तान्। काम्यत्वेनाभिचक्षीत सर्वं जानन् स्वयं सदा" इति वचनात्। तदुपपादयति **न इति**। नः अस्माकं सकाशात् श्रेयो मोक्षाख्यं तदेव रोचयति कामयति, स्वर्गादेरनित्यतादिदोषज्ञानान्मोक्षस्यादोषताज्ञानाच्चेति। भैषज्यरोचनं प्रति इक्षुदण्डं ददातीति यथा तथा ईषदुत्तमस्य मन्दाधिकारिणः श्रोतुर्विवक्षया अभिमुखीकरणाय प्रोक्तं न तु तत्र तात्पर्यविवक्षया। "मन्दाधिकारिणां नित्यं तपसैव प्रतीक्षितुम्। मोक्षो न शक्यतेऽधैर्यात् ततः स्वर्गादिकं वदेत्। स्वर्गादिष्वल्पफलतां ज्ञापयित्वा विमोक्षदम्। वेदं[1] वक्तुं तूत्तमानां नित्यो वेदः प्रवर्तते। इक्षुदण्डं ददातीति यथा भैषज्यरोचनम्। एवं मन्देषूत्तमेषु मोक्षमाहात्म्यमुच्यते। न ह्यल्पफलभाग् वेदो वासुदेवैकसंश्रयः" इति वचनात् ॥ २३ ॥

फलश्रुतेर्मोक्षैकार्थत्वे युक्तिमाह **उत्पत्त्यैवेति**। उत्पत्त्या स्वभावत एव आत्मनोऽनर्थहेतुषु कामादिष्वासक्तमनसो ये मर्त्यास्तान् वृजिनाध्वनि संसारे भ्राम्यतः अत एव स्वार्थमविदुषो जनान् तेषां स्वार्थोपायं बुधो जानन् वेदस्तेषु न नियुञ्ज्यात्। नियुञ्जानश्चेदुन्मत्तवाक्यवदप्रमाणं स्यादित्याशयेनाह **कथमिति**। विषयाभिनिवेशेन तमो विशतस्तान् पुनस्तेषु विषयेषु वेदः कथं युञ्ज्यात्। न कथमपि युनक्ति। उन्मत्तवाक्यसाम्यप्राप्तिभयादिति शेषः। कामादिषु नतान् मग्नानिति वा पदच्छेदः। तथा चैकवाक्यं प्राप्नोति ॥ २४-२५ ॥

स्वमतं प्रदर्श्यासुरमतं प्रदर्शयति **एवमिति**। केचिदसुरपक्षीया वेदस्यैवं मुख्यं व्यवसितमविज्ञाय फलश्रुतिं फलं मोक्षस्तद्विषयां श्रुतिं कुसुमितां स्वर्गविषयां वदन्ति। अत एवावेदज्ञा इति ॥ २६ ॥

---

१. ज्ञानं वक्तुमिति हृषीकेशतीर्थपाठः। वेदमिति पाठेपि ज्ञानमित्येवार्थः, विद ज्ञान इति धातोः।

**कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः।**
**अग्निमुग्धा धूमतान्ताः स्वं लोकं[१] न विदन्ति ते ॥ २७ ॥**

**न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः।**
**उक्थशासो ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥**

**ते मे मतमविज्ञाय परोक्षविषयात्मकाः।**
**हिंसायां यदि कामः स्याद् यज्ञ एव न चोदना ॥ २९ ॥**

एतदेवोपपादयति **कामिन इति**। कामिनो निषिद्धकामिनो नतु योग्यकामवन्तः (ते) निषेध्याः। ''अयोग्यभार्यापुत्रादिकामिताऽनर्थसाधनी। योग्यकामाद् हरेः प्रीतिरतो ब्रह्मादयोऽमलाः। भार्यापुत्रादिसंयुक्ता वासुदेवमुपासते'' इति प्रमाणात्। एवंविधा असुरा इत्यभिप्रेत्य कृपणादिशब्दाः प्रयुक्ताः। ननु स्वर्गकाम इति श्रुतेः स्वर्गादिष्वेव स्पष्टार्थत्वात् कथं पुष्पेषु फलबुद्धय इति निन्दा क्रियत इति तत्राह **अग्निमुग्धा इति**। मामविज्ञायाग्निरेवेज्यत इति मुग्धाः। मिथ्याज्ञानिनः प्रत्यक्षफलमाह **धूमेति**। मिथ्याज्ञानित्वं कथमत्राह **स्वं लोकमिति**। स्वलोकं स्वाश्रयं परमात्मानं न विदन्ति। अनेन स्वर्गकामाः स्वर्गकामशब्दार्थमपि न विदन्तीति ज्ञापितम्। ''नित्यानन्दो हरेर्भक्तिज्ञानाद्याः स्वर्गशब्दिताः। पुत्रभार्याप्तवित्ताद्याः सर्वं मोक्षगतं फलम्। उद्दिश्य स्वर्गकाम्य-यजनं श्रुतिचोदितम्। तदविज्ञाय पुष्पाख्यमनित्यं स्वर्गमिच्छवः। यजन्ति मन्दमतयो वेदवादपरायणाः'' इति मानेन स्वर्गशब्दविवरणात्। स्त्रीभिर्वा यानैर्वेत्यादि चात्र मानम् ॥ २७ ॥

कोऽसावाश्रय इति तत्राह **न त इति**। ये उक्थेन प्राणेन शाः शासनं येषां ते उक्थशासः, अन्धे तमसि पातयित्वा प्राणेन दण्ड्याः। असुतृपः केवलेन्द्रियारामास्ते य इदं व्याप्तो यतश्चेदं जातं (तं) हृदि स्थितं मां न जानन्तीत्यन्वयः। ''विष्ण्वभक्तान् सदा वायुः शासयेत् तमसि क्षिपन्। विष्णुभक्तान् विमोक्षाय प्रापयित्वा सुखं नयेत्'' इति च। अज्ञानं निदर्शयति **यथेति**। यथा नीहारचक्षुषः नीहारावृत-दृष्टयः पदार्थान् यथावन्न विदन्ति ॥ २८ ॥

तथा ते मे मतमविज्ञाय ''मोक्षाख्यं फलमेवाह स्वर्गादिवचनं तु यत्। असुराणामयं स्वर्गशब्दः पुष्पात्मकं वदेत्। देवानां हरिसम्प्राप्तिं वेदो विष्णुपरो यतः'' इत्येतत्सिद्धमविदित्वा। ततः किमत्राह

१. स्वलोकमिति पाठान्तरम्।

**हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ।**
**यजन्ते देवता यज्ञैः पितॄन् भूतपतीन् खलाः ॥ ३० ॥**

**स्वप्नोपममममुं लोकमसन्तं श्रवणप्रियम् ।**
**आशिषो हृदि संकल्प्य त्यजन्त्यर्थान् यथा वणिक् ॥ ३१ ॥**

**रजःसत्वतमोनिष्ठा रजःसत्वतमोजुषः ।**
**उपासते इन्द्रमुख्यान् देवादीन् न तथैव माम् ॥ ३२ ॥**

---

**परोक्षेति** । परोक्षमन्धन्तमः तद्विषयः तत्प्राप्तियोग्यः आत्मा स्वरूपं येषां ते तथा । ''अन्धन्तमः परोक्षं च पञ्चकष्टं तथोच्यते'' इति वाक्यसिद्धम् (एतत्) । कामिनः कृपणा इत्यादिनैवंविधा असुरा इत्यर्थत उक्ताः । इदानीं स्पष्टयति **हिंसायामिति** । अयं भावः । ये कामिनस्तेषामसुराणां यदि यदा हिंसायां कामस्तदा यज्ञ एव न चोदना । यद्यदात्मनो हिंसनमिष्टं तत्तद् विहितमिति कुतर्कैः प्रतिपाद्य यज्ञं प्रापयन्ति । ''आसुरोऽविहितां हिंसां विहितत्वेन वर्णयेत् । आसुरा याज्ञिकाः सर्वे नारायणपराङ्मुखाः'' इति वचनात् ॥ २९ ॥

एषां प्रवृत्त्यन्यथानुपपत्त्या[1] आसुरत्वं स्पष्टमित्याह **हिंसाविहारा इति** । आलब्धैः हिंसितैः ॥ ३० ॥

अमुं लोकमुद्दिश्य । असन्तमनित्यम् । अर्थहानिरेवैषां न स्वाभीष्टप्राप्तिरित्याह **आशिष इति** । हृदि स्वर्गाशिषः संकल्प्य यास्याम इति निरूप्य वणिग् यथा तथा अर्थान् त्यजन्ति ॥ ३१ ॥

सन्तु वा पितृभूतपतीनां यष्टारोऽसुराः, इन्द्रादिदेवतार्चकाः कथमित्याशंक्य यथावत् तदर्चनाभावादित्याह **रज इति** । एवंविधा याज्ञिकास्तामसाः । कुतः । ''विष्णुं विहाय ये देवान् पितॄन् भूतेशमेव च । साम्येन वा पूजयन्ति ते ज्ञेया आसुरा गणाः'' इति स्मृतेः । तेष्वपि विशेषोऽस्ति तामससात्त्विकास्तामसराजसास्तामसतामसा इति । तत्र ते सर्वे इन्द्रमुख्यान् देवादीन् मां च यथोपासते रजःसत्वतमोनिष्ठाः रजःसत्वतमोजुषो भवन्ति । कथम् । तामससात्त्विकव्रताः किञ्चित्स्वर्गादिसुखोपेता निरयदुःखोद्रिक्तान् लोकान् जुषन्ते, तामसराजसव्रताः केवलं निरयदुःखाकुललोकान्, तामसतामसव्रता अन्धन्तमोदुःखाविलान् लोकान् सेवन्त इति । ''तामसेषु च ये सत्वा निरयप्रचुरास्तु

---

१. एषां प्रकृत्यन्यथानुपपत्त्येति पाठान्तरम् ।

**इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।**
**तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥**

**एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ।**
**मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥ ३४ ॥**

**वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया अपि ।**
**परोक्षवादो वेदोऽयं परोक्षं मम च प्रियम् ॥ ३५ ॥**

---

ते। ईषत्स्वर्गादिसंयुक्तास्तमोनिष्ठास्तु ते स्मृताः[१]। केवलं निरये निष्ठा ये ते तामसराजसाः। अन्धेतमसि ये निष्ठास्ते वै तामसतामसाः। एवं त्रिभेदयुक्तास्तु याज्ञिका विष्णुवर्जिताः'' इत्यनेन त्रैविध्यं प्रामाणिकम्[२]। निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते व्रतयाश्रयोरिति वचनात्। रजआदिव्रतयुक्ता रजआदिलोकांश्च प्रार्थयन्त इत्यर्थः ॥ ३२ ॥

तत्प्रार्थनाप्रकारमाह **इष्ट्वेति**। रंस्यामहे रन्तुमिच्छामः। इह भूमौ। अनेनायथोपासनं च दर्शितं नित्यानन्दलक्षणमोक्षाकांक्षानुगुणगुणोपसंहाराभावात् ॥ ३३ ॥

अयथोपासने निमित्तमाह **एवमिति**। पुष्पितया स्वर्गादिपुष्पविषयया वाचा व्याक्षिप्तं मनो येषां ते तथा तेषाम्। मानिनामतिस्तब्धानामिति विशेषणद्वयेन मनःसमीचीनत्वजनकगुर्वादिसेवापि दूरीभूतेति ध्वनयति ॥ ३४ ॥

स्वर्गादिपरस्य वेदस्य मुक्तिपरत्वं कथं घटत इत्यत्राह **वेदा इति**। स्वत एव पूर्णस्वरूपत्वाद् ब्रह्मात्मा विष्णुः, स एव विषयो येषां ते ब्रह्मात्मविषया वेदाः। नारायणपरा वेदा इत्यादेः। ''ब्रह्मत्वं पूर्णता प्रोक्ता तद् यस्य स्वयमेव तु। स ब्रह्मात्मा समुद्दिष्टो वासुदेवः सनातनः'' इति च। अनेन ब्रह्मात्मप्राप्तिलक्षणमोक्षपरत्वं वेदस्याविनाभूतमिति ज्ञायते। उक्तशङ्कायाः परिहारः कथमायात

---

१. ईषत्स्वर्गादिसंयुक्ता एवंनिष्ठास्तु इति हृषीकेशतीर्थपाठः। तमोनिष्ठा इति पाठे तामससात्त्विका इत्यर्थो ग्राह्यः, तामसराजसानां तामसतामसानां च पृथगुक्तेः, तमोनिष्ठेषु तामससात्त्विकानामेव मुख्यत्वाच्च।

२. अत्र मनुष्याधमास्तामससात्त्विकाः प्रधानदैत्यानुगास्तामसराजसाः कल्यादिप्रधानदैत्यास्तामसतामसा इति विवेको गीतातात्पर्यानुसारेण मन्तव्यः।

**शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।**
**अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥**

**मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ।**
**भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥**

---

इत्यत उक्तम् **त्रिकाण्डविषया अपीति** । यद्यपि ब्रह्मदेवकर्मकाण्डविषया अधिकारिभेदेन प्रतीयन्ते तथाप्युत्तमाधिकारिणां काण्डद्वयपरत्वं विहाय ब्रह्मगुणप्रतिपादनद्वारा मोक्षपरत्वं स्पष्टमिति भावः । सर्ववेदानां ब्रह्मात्मपरत्वं सत्यं चेन्मुखतः किमिति प्रतीत्यभाव इति तत्राह **परोक्षेति** । किमनेन प्रयोजनमत्राह **परोक्षेति** । परोक्षप्रिया इव हि देवा इति हि श्रुतिः । चशब्दान्मद्भक्तानां देवादीनां प्रियमित्यर्थोऽवगम्यते ॥ ३५ ॥

परोक्षत्वान्मम प्रसादं विना वेदार्थो दुरवबोध इत्याह **शब्दब्रह्मेति** । तर्हि निरधिकारित्वात् डिवित्थडित्थादिशब्दवद् हेयो वेद इत्यत आह **प्राणेति** । अत्र प्राणादिशब्दैर्ब्रह्मादयो विवक्ष्यन्ते । प्राणेन्द्रियमनोभिः मीयते ज्ञायत इति प्राणेन्द्रियमनोमयम् । ''मेयत्वान्मय उद्दिष्टो वेदः प्राणादिभिः सदा'' इति वाक्यात् । वाक्यत्वे पौरुषेयत्वेन लौकिकवाक्यवत् परिमितमनित्यं च नेत्याह **अनन्तपारमिति** । ''अन्तो विनाश उद्दिष्टः पारः परिमितिस्तथा । अनन्तपारो वेदोऽयं ताभ्यां स रहितो यतः'' इति वचनमत्रोदाहृत्यार्थो वक्तव्यः । समुद्रवदित्यल्पाधिकारिणोऽपेक्ष्योक्तं न तूत्तमाधिकारिण इति ॥ ३६ ॥

वेदस्य प्रतीयमानोऽर्थो न चेद् वाच्यार्थाभावेन वैयर्थ्यमापन्नमत्राह **मयेति** । अनन्तगुणपूर्णत्वाद् भूम्ना ब्रह्मादिशब्दवाच्येन मया उपबृंहितं मत्प्रतिपादकत्वेन पूर्णार्थोपेतम् । किमत्र प्रमाणमत्राह **भूतेष्विति** । भूतेषु घोषरूपेण लक्ष्यते । कथमिव । बिसेषूर्णेव, शब्दब्रह्मेति शेषः[१] ॥ ३७ ॥

---

१. भूम्ना ब्रह्मणा अतिमहापरिपूर्णेन अत एवानन्तशक्तिना अप्रतिहतसामर्थ्येन मया उपबृंहितं व्याप्तम् । पदादिशक्तिप्रेरकमूर्तिभिरिति भावः । प्रतिपाद्यमूर्तिभिर्वा व्याप्तम् । वेदे निरर्थकः शब्दो नास्तीति भावः । बिसेषु कमलनालेषूर्णेव तिरोहितमिति भावः । भूतेषु अध्यापकेषु घोषरूपेण ध्वन्यात्मकशब्दप्रभेदेन लक्ष्यते - इति यादवेन्द्रतीर्थाः । भूतेषु अध्यापकेषु घोषरूपेण ध्वन्यात्मकशब्दप्रभेदेन लक्ष्यते, व्यज्यते, शब्दब्रह्मेति शेषः- इति सुधीन्द्रतीर्था अपि ।

**यथोर्णनाभिर्हृयदादूर्णामुद्वहते मुखात्।**
**आकाशाद् घोषवान् प्राणो मनसाऽऽस्पर्शरूपिणा ॥ ३८ ॥**

**छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः।**
**ओङ्कारेष्वञ्जितां स्पर्शस्वरोष्मान्तस्थभूषिताम् ॥ ३९ ॥**

**विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः।**
**अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥**

प्राणादिभिर्मीयत इत्युक्तम्। तत्प्रकारमाह **यथेति**। यथोर्णनाभिर्हृयादूर्णामुद्धृत्य मुखादुद्वहते निष्कासयति पुनर्ग्रसति च एवं घोषवान् आकाशगुणशब्दव्यक्तिमान् (अस्योत्तरेणान्वयः) ॥ * ॥ छन्दांसि मीयन्तेऽनेनेति छन्दोमयः, अमृतमयः मत्प्रसादेन मोक्षदः प्राणः[२]। आस्पर्शो विष्णुः, तं रूपयतीत्यास्पर्शरूपि प्राणस्य मनः। तेन स्वमनसा सहस्रपदवीं मदनन्तरूपविषयाम् ओङ्कारेषु त्रिमात्राद्यनन्तमात्रावसानप्रणवेषु अञ्जितां स्पष्टव्यक्तां तद्व्याख्यानरूपां स्पर्शादिवर्णैरलङ्कृताम् (अस्याप्युत्तरेणान्वयः ॥ * ॥ गुह्यदर्शनादिभेदेन विचित्राभिर्नानाविधाभिरेकाशीतिसंख्याताभिर्भाषाभिर्विततां चतुरुत्तरैः चतुर्वर्णाधिकोष्णिग्युक्तैः गायत्र्यादिच्छन्दोभिश्च वितताम् अनन्तपारां विनाशपरिमाणरहितां बृहतीं श्रुतिं हृदयाकाशादुद्धृत्य सृजति उच्चारयति, रुद्रादिभ्य उपदिशति। पुनः कल्पान्ते स्वस्मिन्नेवाक्षिपते विदधातीत्यन्वयः। चतुरुत्तरत्वनियमो जगत्यन्तानामेव। गायत्र्या उष्णिक् चतुर्वर्णाधिकेत्यादिचतुरुत्तरैः। ''भुङ्क्ते यदखिलान् स्पर्शानास्पर्शो विष्णुरुच्यते। तस्य प्रकाशकं नित्यं नमस्ये प्राणमेकलम्। प्राणस्यैव मनो नित्यं वासुदेवं प्रकाशयेत्'' इति च, ''मीयन्तेऽनेन च्छन्दांसि प्राणश्छन्दोमयस्ततः'' इति च, ''त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः। प्रणवास्तेऽपि भेदेन ह्यनन्ताः परिकीर्तिताः। एकमात्रोत्तराः सर्वे वासुदेवाभिधायकाः। तेषां व्याख्यानरूपा हि सर्वे वेदाः प्रकीर्तिताः। ओङ्कारेणाश्रितास्तस्मात् सदोच्चार्या हरेः प्रियैः'' इति चोक्तार्थे प्रमाणम्। ''गुह्यदर्शनभाषे च भाषा चैव समाधिका। तिस्रस्तु मूलभाषाः स्युरेकैका च त्रिधा पुनः। गुह्यदर्शनसञ्ज्ञा च गुह्यगुह्या तथाऽपरा। एवमादिक्रमेणैव त्वेकाशीतिविभेदिताः। भाषास्तत्र च गुह्या च प्रसिद्धार्थेष्वनन्विता। गुह्यार्थतत्परैवान्धो मणिमित्यादिका च सा। दर्शनान्यवलम्ब्यैव पशुपत्यादिनां तु या। बहुश्रुतिविरुद्धं तु वदेत् सा दर्शनात्मिका। अन्तेनिषेधसंयुक्ता भस्मस्नानादिका

---

२. प्राणः सृजतीत्युत्तरेणान्वयः।

**गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च।**
**त्रिष्टुप् जगत्यतिच्छन्दो ह्यष्टचत्यष्टी जगद् विराट्॥ ४१॥**

**किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्।**
**इत्यस्या हृदयं लोके नान्यो मद् वेद कश्चन॥ ४२॥**

---

च सा। यथा प्रदृश्यमानार्था समाधिः सा प्रकीर्तिता। विष्णुः परम इत्याद्या सा च विद्वद्भिरीरिता'' इति वचनात् सम्प्रदायज्ञैर्गूरुचरणशरणैरेव पुरुषैर्ज्ञेयोयमर्थ इति। ''भस्मस्नानविधानं तु श्रुत्युक्तं दर्शनानुगम्। भस्मस्नानं ततोऽग्राह्यं विधानं तु नृसिंहगम्'' इति वाक्यादन्ते निषेधयुक्तत्वाद् भस्मस्नानादरोपि कर्तव्य इति॥ ३८-४०॥

गायत्र्यादिच्छन्दसां क्रमोऽपि छन्दोवैचित्र्याद्युक्तविध[१] इत्याशयवानाह **गायत्रीति**। ''छन्दस्तु नवपादं यज्जगदित्युच्यते बुधैः'' इति वचनाज्जगन्नाम छन्दो नवपादात्कमित्यर्थः॥ ४१॥

मुख्यप्राणोपि मत्प्रसादादेव वेदार्थं जानाति मुख्यतः सर्ववेदार्थतत्वमहमेव जानामीत्याशयवानाह **किं विधत्त इति**। विकल्पयेत् विविधरूपत्वेन कल्पयेत्। लोके विद्वज्जनमध्ये मदन्यः कः पुरुष इति अस्याः श्रुतेः हृदयं तात्पर्यार्थं वेद। कोऽपि न वेद। वेद चेत् को वायुर्मत्प्रसादाद् वेत्तीत्यर्थः। सन्ध्यामुपासीतेत्यादेः सन्ध्योपासनादिविधिलक्षणमर्थमन्तरेणान्यमर्थं भगवान् कथं वेत्तीति तत्राह **मामिति**। सन्ध्यामुपासीतेत्यादिविधिलक्षणो वेदो मामुद्दिश्य विधत्ते सन्ध्यावन्दनादेर्मद्विषयत्वात्। ध्येयः सदा सवितृमण्डलमध्यवर्तीत्यादेः। यदादित्यगतं तेजो जगद् भासयतेऽखिलमित्यादेश्च। सत्यं ज्ञानमनन्तं ब्रह्मेति सत्यत्वादिगुणवाचको वेदः सत्यत्वादिगुणविशिष्टं मामभिधत्ते। चत्वारि वागित्यादिषु वेदादिवाच्यत्वाद् वागाख्यं मां वागित्यनूद्य चत्वारीति मां विविधं कल्पयित्वा वासुदेवसङ्कर्षणादिरूपविशिष्टत्वेन ध्येय इति, न सुरां पिबेद् ब्राह्मणो न हन्तव्य इत्याद्यपोह्यभागः सुर ऐश्वर्य इति धातोः सुराणामैश्वर्यादिमद्गुणानां पानं मम स्यादिति चिन्तनं (तथा) वेदैकवेद्यत्वेन ब्राह्मणो विष्णुः (स) नास्तीत्यादिचिन्तनं मदप्रियमपोह्य निषिध्य आत्मनमेव लोकमुपासीतेत्यादि मद्विषयोपासनं वेदतात्पर्यार्थ इति अस्याः श्रुतेर्हृदयमहमेव वेदेति गतेनान्वयः। ''विधिभागे हरेः

---

१. विजयध्वजतीर्थपाठे छन्दोवैचित्र्यमिति एतत्तात्पर्यवचनाकरमूलग्रन्थनाम स्यात्। हृषीकेशतीर्थपाठे तु छन्दोविधानमिति।

**एतावान् सर्ववेदार्थः शब्द आस्थाय माऽभिदाम्।**
**मायामात्रमनूद्यान्ते प्रतिषिध्य प्रशाम्यति ॥ ४३ ॥**

**॥ इति एकविंशोऽध्यायः ॥**

---

पूजैवाभिधाने च तद्गुणाः। विकल्पे तद्बहुत्वं चाप्यपोहे तु तदप्रियम्। उच्यते सर्ववेदेषु तच्च वेद स एवं हि'' इति वचनात्। ''सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम्। सुरापानमिति प्रोक्तं तन्न कुर्यात् कथञ्चन। ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम्। ब्रह्महत्या समुद्दिष्टा तां न कुर्यात् कथञ्चन। इत्याद्यपोह्यवाक्यार्थश्चिन्त्यो विष्णुर्बुधैर्जनैः'' इति वचनाच्च ॥ ४२ ॥

न केवलं कतिपयवाक्यार्थः, सर्ववेदार्थोऽप्येवमेवेति भावेनोपसंहरति **एतावानिति**। कदा नु वेदस्य विश्रम इति तत्राह **शब्द इति**। निर्दोषः शब्दो वेदः अभिदां मा मामास्थाय सर्वावतारेषु भेदरहितो विष्णुरिति प्रतिष्ठाप्य मायामत्रं मदिच्छोद्बुद्धादृष्टनिर्मितं शरीरादिकं बन्धमनूद्य निरूप्य तस्य प्रतिषेधार्थमुपासनादिकं विधाय अन्ते मोक्षे ज्ञानोदयेन जीवस्य शरीरादिकं प्रतिषिध्य प्रशाम्यति स्तिमितसमुद्रवत् स्वभावोपास्तिरूपेण तिष्ठतीत्यन्वयः। न भिदा यस्य सोऽभिदः, अभिदश्चासौ अश्चेत्याभिदाः, तम् अभिदाम्। अः इति ब्रह्मेति। अ निषेधे पुमान् विष्णाविति यादवः। प्रपञ्चनिषेधो वेदस्यार्थोऽनेनोच्यत इति मतं ''सर्वावताररूपेषु निर्भेदत्वाददोषतः। अभिदा विष्णुरुद्दिष्टस्तमेवोक्त्वा तदिच्छया। निर्मितं दैहिकं बन्धं तस्योपासनयैव तु। प्रतिषिध्य विमोक्षे तु स्वभावोपास्तिरूपतः। प्रतिशाम्यति वेदोऽयं वासुदेवैकसंश्रयः'' इति समाख्यया निरस्तमिति ज्ञातव्यम्। विद्यात्मनि भिदाबोध इति भेदज्ञानस्य विद्यात्वोक्तेश्च ॥ ४३ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य एकविंशोऽध्यायः ॥**

## ॥ अथ द्वाविंशोऽध्यायः ॥

**उद्धव उवाच -**

**कानि तत्वानि विश्वेश संख्यातान्यृषिभिः प्रभो ।**
**नवैकादशपञ्चत्रीण्यात्थ त्वमिह शुश्रुम ॥ १ ॥**

**केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ।**
**सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ।**
**केचित् सप्तदश प्राहुः षोडशैके त्रयोदश ॥ २ ॥**

**एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ।**
**गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥**

**श्रीभगवानुवाच -**

**युक्तयः सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ।**
**मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४ ॥**

---

भगवत्सृष्टानां तत्त्वानां संख्यानं जीवस्य हरेश्च भेदं (च) निरूपयत्यस्मिन्नध्याये । तत्रादौ भगवदुपदेशाज्ज्ञाततत्वस्वरूपोप्युद्धव ऋषिभिस्तत्वानां बहुधा संख्यायमानत्वाद् (तत्र) युक्तीर्ज्ञातुकामः पृच्छति **कानीति** । त्वं नवेत्यादीनि तत्वान्यात्थ वयं च शुश्रुम । तत्र ऋषिभिः संख्यातानि तान्येव उतेतराणि ॥ १ ॥ संशयनिमित्तमाह केचिदिति ॥ २ ॥ ऋषयस्तत्वानां संख्यानामेतावत्त्वं यद्विवक्षया कया युक्त्या पृथग् गायन्ति नोऽस्माकमिदं सयुक्तिकं वक्तुमर्हसि ॥ ३ ॥

ऋषय इति त्वयोक्तत्वात् सर्वेषु पक्षेषु युक्तिशङ्का न कार्येत्याशयेन परिहरति **युक्तय इति** । यथा ब्राह्मणा वेदविचारकुशला ऋषयो भाषन्ते संक्षेपविस्तराभ्यां वदन्ति तथा सर्वेषु पक्षेषु युक्तयः सन्तीत्यन्वयः । स्वकपोलकल्पितत्वेन वदतां मतं प्रमाणं कथं स्यादिति तत्राह **मायामिति** । मदीयां मायां मम सामर्थ्यमुद्गृह्य आलम्ब्य नानाविधां तत्तत्संख्यां वदतां ऋषीणां मतं किं नु दुर्घटं किमनुपपन्नम् । सर्वं प्रामाणिकमेवेत्यर्थः । ''विष्णोः सामर्थ्यमालम्ब्य तत्वसंख्यां मुनीश्वराः । चक्रुर्हि तदविज्ञाय विवदन्त्यल्पबुद्धयः । तत्रापि कारणं विष्णोः शक्तिर्यस्या विकारतः । अव्यक्तादेर्विकल्पोऽयं मनसा

**नैतदेवं यथात्थ त्वं यदहं वच्मि तत् तथा।**
**एवं विवदतां हेतुः शक्तयो मे दुरत्ययाः ॥ ५ ॥**

**यासां व्यतिकरादासीद् विकल्पो वदतां पदम्।**
**प्राप्ते शमदमे व्येति वादस्तमनुशाम्यति ॥ ६ ॥**

**परस्परानुप्रवेशात् तत्वानां पुरुषर्षभ।**
**पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥**

---

सम्प्रजायते। विरुद्धकल्पनं तच्च वासुदेवैकनिष्ठया। निरहंकारया नश्येद् विवादैकाश्रयं हि तत्'' इति वाक्यात् श्रीनारायणसामर्थ्यमेव मयोच्यते नानिर्वाच्याविद्येति ॥ ४ ॥

ननु प्रामाणिकं चेद् किमिति विप्रतिपद्यन्त इत्याशंक्य तन्मततत्वापरिज्ञानादिति भावेनाह **नैतदिति**। त्वं यथाऽऽत्थ एतदेवं न भवति दुष्टत्वात्।अहं यद् वच्मि तत् तथा निर्दोषत्वादिति। तदविज्ञाय विवदन्त्यल्पबुद्धय इत्यत्रापि मच्छक्तिरेव हेतुरित्याह **एवमिति**। तत्रापि कारणं विष्णोः शक्तिरिति ॥५॥

सत्वादिभेदेन यासामिति बहुवचनम्। यासां मच्छक्तीनां सकाशाज्जातादव्यक्तादितत्वानां व्यतिकराद् विकारन्मनसो यो विकल्पो मिथ्याज्ञानलक्षणः स एव विवदतां विवदमानानां पदमाश्रय आसीत्। तत्वसंख्या विवक्षाभेदेन बहुविधान्मनोविकाराद् भवतीत्यर्थः।''यस्या विकारतः। अव्यक्तादेर्विकल्पोऽयं मनसः सम्प्रजायते।विरुध्दकल्पनं तच्च'' इति। कदा नु विकल्पोपशम इत्यत आह **प्राप्त इति**।दम इन्द्रियनिग्रहः तद्द्वारा शमे प्राप्ते मन्निष्ठायां प्रवृध्दायां स विकल्पो व्येति विनश्यति। तमनु विकल्पनाशानन्तरं विवादोपि शाम्यति। ''तच्च वासुदेवैकनिष्ठया। निरहंकारया नश्येद् विवादैकाश्रयं हि तत्''इति ॥ ६ ॥

तत्वानामनेकविधसंख्याने युक्तिमाह **परस्परानुप्रवेशादिति**। कार्यकारणरूपाणां तत्वानां परस्परानुप्रवेशात् कारणेषु कार्यानुप्रवेशात् क्वचित् कार्येषु कारणानुप्रवेशात् अन्तर्भावाच्च, तथाऽ-प्रवेशेन पृथगेवावस्थानाच्च। पौर्वापर्यप्रसंख्यानं न्यूनाधिकत्वेन तत्वानां गणनं वक्तुर्विवक्षितं यथा तथा क्रियते। पूर्वा संख्या अल्पा अपरा बह्वी तत्सम्बान्धी पौर्वापर्यम् ॥ ७ ॥

**एकास्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च।**
**पूर्वस्मिन् वाऽपरस्मिन् वा तत्वे तत्वानि सर्वशः ॥८॥**

**पौर्वापर्यमथोऽमीषां प्रसंख्यानमभीप्सताम्।**
**यथा विविक्तं यद् युक्तं गृह्णीमो युक्तिसम्भवात्॥ ९ ॥**

**अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम्।**
**स्वतो न सम्भवेद् यस्मात् ततोऽन्यः पुरुषो भवेत्॥ १० ॥**

**पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि।**
**तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः॥ ११ ॥**

---

एतदेव विवृणोति **एकस्मिन्निति**। इतराणि तत्वानि एकस्मिन् पूर्वस्मिन् कारणे तत्वे अपरस्मिन् कार्ये तत्वे वा प्रविष्टानि दृश्यन्तेऽपि। यस्मात् तस्मादमीषां तत्वानां गणनमिच्छतां पौर्वापर्यं पूर्वापरसम्बन्धिप्रसंख्यानमपि युज्यत इत्यर्थः। नन्विदमार्षमतं तव चित्तेऽङ्गीकार्यमुत नेति तत्राह **यथेति**। ऋषिभिरुक्तमिदं यथावदेव विविक्तं पृथक्पृथक् स्पष्टमत एव युक्तं चेति यद् यस्मात् तस्माद् गृह्णीमः। हेतुं स्पष्टयति **युक्तिसम्भवादिति**। यद् युक्तं यथा विविक्तं तथा गृह्णीमः। कुतः। युक्तिसम्भवादिति वा॥ ८-९ ॥

तैर्ऋषिभिरप्यनाद्यविद्याबद्धादस्वतन्त्राज्जीवात् सर्वथाऽन्यः परमेश्वरः स्वीकर्तव्य इति भावेनाह **अनादीति**। अनादिकालमारभ्याविद्याकामकर्मयुक्तस्य पुरुषस्य पुराणि शरीराणि सरतो जीवस्य आत्मवेदनं स्वस्वरूपाविर्भावलक्षणं ज्ञानं तथा आत्मनः परमात्मनोऽपरोक्षलक्षणं ज्ञानं च स्वतः स्वशक्त्या न सम्भवेत्, उक्तहेतोरिति यस्मात् तस्मात् पुरुषः पूर्णषड्गुणो विष्णुस्ततो जीवादन्यो भवेदित्यङ्गीकर्तव्यम्॥ १० ॥

अत्रेदमनुसन्धेयमित्याह **पुरुषेति**। हृदि स्थित्वा जीवानां ज्ञानोत्पादनात् पुरुषनाम्नो वहिः स्थित्वा ज्ञानफलमुक्तिदानादीश्वरनाम्नश्चाण्वपि वैलक्षण्यं न द्रष्टव्यम्। भेददर्शनेऽनर्थमाह **तदन्येति**। तयोः पुरुषेश्वरयोरन्यत्वकल्पना भेददृष्टिलक्षणा अपार्था तत्स्वरूपादपगमनप्रयोजना अनर्थकारिणी चेत्यर्थः। ज्ञानात्मनो जीवस्य ज्ञानोत्पादनं कथं घटत इति तत्राह **ज्ञानं चेति**। प्रकृतेर्गुणः सत्वगुण-जन्यम्। ''स्वरूपभूतं ज्ञानं तु सदा जीवस्य विष्णुना। नियतं प्राकृतं ज्ञानं भक्त्या तेनैव दीयते'' इति वचनात्॥ ११ ॥

**प्रकृतेर्गुणसाम्ये तु प्रकृतेर्नात्मनो गुणाः ।**
**सत्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ १२ ॥**

**सत्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ।**
**गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥**

---

जन्यज्ञानस्य प्राकृतत्वं साधयति **प्रकृतेरिति** । तुशब्दो विशेषद्योतकः । प्रकृतेर्गुणसाम्ये प्रलये वर्तमानस्य आत्मनो जीवस्य यथा सत्वं रजस्तम इति प्रकृतेर्गुणा आवरका न भवन्ति ईश्वरेच्छानियतप्रवृत्तिशून्यत्वात् । तदा स्वरूपज्ञानादिगुणा अपि भवन्ति । तथा सृष्टिकाले जीवस्वरूपं तैर्गुणैरावृतं भवति । गुणानां वीर्यमाह **स्थितीति** ॥ १२ ॥

किमायातमनेन प्रकृत इत्यत्राह **सत्वमिति** । इह सृष्टिकाले सत्वं ज्ञानं सत्वगुणजन्यं ज्ञानं रजोगुण-जन्यं कर्म तमोगुणजन्यमज्ञानमित्युच्यते । प्रलयकालात् सृष्टिकालेऽयं विशेष इति बाह्यज्ञानं प्राकृतमिति सिद्धम् । यद्वा प्रलये सृष्टावपि प्रकृतेर्गुणा आत्मनः परमात्मनो न विशेषापादकाः किन्तु जीवस्यैव । कथमत्राह **सत्वमिति** । सत्वादयो जीवस्य बाह्यादिज्ञानजनका इति । ''अन्तस्थः पुरुषो नाम ज्ञानदः सर्वदेहिनाम् । बहिस्थ ईश्वरो नाम ज्ञानादिफलदो हरिः'' इति वचनात्, ''पुरुषाख्यो हृद्गतस्तु विष्णुर्जीवविबोधकः । फलदात्रा तु बाह्येन य ईशेन भिदां वदेत् । तथैवान्यस्वरूपेषु विष्णोर्यो भेददर्शकः । ये च जीवेश्वराभेदं पश्यन्तोऽनर्थभागिनः'' इति वाक्याच्च पुरुषेश्वरशब्दावुक्तार्थाविति सिद्धम्[१] । इदानीं ऋषिभिरुक्ततत्वानां संख्याभेदं वक्ष्यन् तत्त्वकारणस्वरूपं तावदाह **गुणव्यतिकर इति** । सत्वादिगुणानां महदाद्यात्मना व्यतिकरो यस्मात् स सत्वादिगुणव्यतिकरो भगवान् किन्नामधेय इत्यत उक्तम् **काल इति** । कल कामधेनाविति धातोः सर्जनेन ब्रह्मादीनामभीष्टदोग्धृत्वात् कालनामेत्यर्थः । अनेन कारणत्वानुपपत्तिरपि[२] परिहृतेति ज्ञायते । कारणस्य नामान्तरं चाह **स्वभाव इति** । स्वतन्त्रो भावः स्वभावः, स्वरूपभूतो भावो भूतिरैश्वर्यं यस्य स तथेति वा, स्वाधीनो भावः सत्ता यस्येति वा, स्वनिमित्तो भावो जन्मादिलीला यस्य स तथेति वा । वायुना वै गौतम सूत्रेणेत्यादेर्वायोरेव सर्जनादिप्रतीतेः कथमयमेव सर्वकर्तेति तत्राह **सूत्रमिति** । सूत्रं सर्वाधारः । अक्षरमम्बरान्तर्धृतेरिति सूत्रादेतल्लिङ्गं भगवदेकनिष्ठमित्यवधारयति । चशब्देन यो देवानामिति श्रुतेः वायुशब्दः सावकाश इति दर्शयति ॥ १३ ॥

---

१. अन्तस्थ इत्यादि तात्पर्यवचनोदाहरणं पुरुषेश्वरयोरित्याद्येकादशश्लोके तथा प्रकृतेरित्यादिद्वादशे श्लोके च सङ्गतमिति भाति । सर्वेष्वपि कोशेषु सत्वमित्यादि त्रयोदशश्लोकव्याख्यानावसर एव दृश्यते ।

२. कारणत्वानुपपत्तिरित्यस्पष्टम् । कारणाभावशङ्केति स्यात् । भावप्रधाननिर्देशो वा ।

**पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।**
**ज्योतिरापः क्षितिरिति तत्वान्युक्तानि मे नव ॥ १४ ॥**

**श्रोत्रं त्वग् दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ।**
**वाक्पाण्युपस्थपाय्वङ्घ्रि कर्माण्यङ्गोभयं मनः ॥ १५ ॥**

**शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ।**
**गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥**

**सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ।**
**सत्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्तमीक्षते ॥ १७ ॥**

---

नवैकादशपञ्चत्रीणीत्यत्र नव तत्वानि वक्ति **पुरुष इत्यादिना**। पुरुषो हिरण्यगर्भः, प्रकृतिर्गायत्री, व्यक्तो रुद्रः, अहङ्कारः स्कन्दः । "यदा पुरुषशब्देन विरिञ्चस्यैव वाच्यता । परस्य पृथगुक्त्यैव व्यक्तस्तत्र तु शङ्करः । तदाऽहङ्कारशब्देन स्कन्दस्यैव वचो भवेत्" इति वाक्यादयं नियमः प्रामाणिक इत्यर्थः ॥ १४ ॥

एकादशतत्वान्याह **श्रोत्रमित्यादिना** । ज्ञानशक्तयः ज्ञानेन्द्रियाणि । कर्माणि कर्मेन्द्रियाणि । उभयं सङ्कल्पविकल्पात्मकं मनः ॥ १५ ॥

एषां विषयानाह **शब्देति** । अर्थजातय : विषयसामान्यानि । अनेन पञ्चतत्वान्युक्तानि । कर्मायतनसिद्धयः कर्मेन्द्रियविषयाः । पायूपस्थयोर्विषयावुत्सर्गशब्देनोक्तौ । द्विविधत्वात् पञ्चकद्वयं पञ्चेत्यनेन द्विरावृत्तिर्ग्राह्या पञ्चपञ्चेति । तथा च शब्दादिशिल्पान्तानि दशतत्वानि ॥ १६ ॥

त्रीनिति सत्वादिगुणास्त्रीणि तत्वानीति वक्तुं सत्वादिगुणप्रवृत्तिमाह **सर्गादाविति** । अस्य जगतः सर्गादौ उपादानकारणात्मकजडप्रकृत्यभिमानिनी चित्प्रकृतिर्हरिवन्निमित्तकारणरूपिणी, अन्तर्नियन्तृरूपेण प्रवेशात् कार्यरूपिणी च । सत्वादिभिः श्रीभूर्दुर्गेतिरूपभेदेन सत्वादिगुणाभिमानिनी धत्ते, जगदिति शेषः । एवं च पुरुषादितमोगुणान्तानि हरिणा सह चतुस्त्रिंशत्तत्वानीति भागवतं मतम् । परस्परानुप्रवेशादित्युक्तयुक्तिं विवृणोति **पुरुष इत्यादिना** । कालादिनाम्ना हरिणाऽनुगृहीतः पुरुषनामा हिरण्यगर्भः सृष्ट्यर्थमव्यक्तनाम्नीं सरस्वतीमीक्षते संक्षोभ्ये इति मत्वा अव्यक्तादितत्वानि सरस्वतीं निमित्तीकृत्य सृजतीत्यन्वयः ॥ १७ ॥

**व्यक्तादयो विकुर्वाणा धातवो पुरुषेक्षया।**
**लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात्॥ १८॥**

**सप्तैव धातव इति यत्रार्थाः पञ्च खादयः।**
**ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः॥ १९॥**

**षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान्॥**
**तैर्युक्त आत्मसम्भूतैः सृष्ट्वेदं समुपाविशत्॥ २०॥**

---

अत एव कार्यकारणरूपेण सृष्टा व्याक्तादयो धारणशीलत्वाद् धातुनामानः तत्वविशेषाः पुरुषेक्षया पुरुषस्य हरेः कटाक्षगोचरत्वेन संहताः संश्लिष्टाः प्रकृतेर्बलाद् विकुर्वाणाः लब्धवीर्याः कार्यकारणशक्त्यन्विताः अण्डं ब्रह्माण्डं सृजन्तीत्यन्वयः। यद्वा जडप्रकृतिरस्य जगतः सर्गादौ सत्वादिगुणैर्जगद् धत्ते। पुरुषो विष्णुरव्यक्तं प्रकृतिमीक्षते तन्नियता धातवोऽण्डं सृजन्तीति कार्यकारणभावादन्योन्यानुप्रवेशो युक्त इति वक्तुं सृष्टिकथनम्। ''सृज्यस्रष्टृस्वरूपत्वादन्योन्यानुप्रवेशिनः। तिष्ठन्ति तात्विका देवा विशेषप्रीतिकारणात्'' इति वचनात्। अतस्तत्वानामल्पसंख्यावत्त्वं युक्तम्॥ १८॥

तत्र सत्वादीन् गत्यादींश्च विना हरिणा सहितानि षड्विंशतितत्वानि। महदहंकारौ ब्रह्मरुद्रावङ्गीकृत्य स्कन्दं विना परमात्मना सह पञ्चविंशतिः, व्यक्तं विना चतुर्विंशतिरित्येतानि न्यूनसंख्याकानि तत्वानि सिद्धवत्कृत्य सप्तैक इत्यादि न्यूनसंख्यानि कथयति **सप्तैवेति**। यत्र यस्मिन् पक्षे सप्तैव धातवस्तदैवं गणनं कर्तव्यम्। शब्दाद्यर्थाः खादयश्चैकीकारं गताः पञ्च षष्ठो ज्ञाननामा ब्रह्मा सप्तम उभयाधारः अभिमन्यमानाभिमानिनामाधारः आत्मा परमात्मा इति सप्तत्वम्। ततः-शब्देन ज्ञानात्मनावनुकृष्येते। दशेन्द्रियाण्येकीकृत्यैकं तत्वं, असवः पञ्च प्राणाः, देह इति देहाभिमानी दिवाकरः, ज्ञानात्मानाविति नवतत्वानि। ''ज्ञानशब्दोदितो ब्रह्मा तदाधारो हरिः स्मृतः'' इति, ''सर्वदेहाभिमानी तु देहिनां तु दिवाकरः'' इति च, इन्द्रियात्मेन्द्र एवैकः प्राणनामा प्रजापतिः'' इति च (वचनम्) देहप्राणौ पञ्चेन्द्रियाणि ज्ञानात्माभ्यां नवेति वा। यद्वा वागादीनां मनोऽधीनत्वेन मनसैकत्वं पञ्च श्रोत्रादीन्द्रियाणि देहप्राणौ परमात्मना सहेति नव॥ १९॥

षडित्यत्रैवं संख्यानम्। महदादिकारणानां कार्यानुप्रवेशेन पञ्च आकाशादिभूतानि परमपुरुषः

**चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ।**
**जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥**

**संख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ।**
**पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥ २२ ॥**

**तद्वत् षोडशसंख्यानि आत्मना मन उच्यते ।**
**भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥ २३ ॥**

**इति नानाप्रसंख्यानं तत्वानामृषिभिः कृतम् ।**
**सर्वं न्याय्यं युक्तिमत्त्वाद् विदुषां किमशोभनम् ॥ २४ ॥**

---

षष्ठ इति षट् । नवसप्तत्रयोदशत्वे केषाञ्चित् कार्याणां कारणानुप्रवेश इति ज्ञेयम् । आत्मनः सम्भूतैस्तैराकाशादिपञ्चभूतैर्युक्तः आत्मा इदं सृष्ट्वा समुपाविशत् ॥ २० ॥

**चत्वार्येवेति** । तानि कानीत्यत्राह **तत्रापीति** । तत्रापि पञ्चस्वपि आत्मनो जातानि तेज आपोऽन्नमिति त्रीणि आत्मैक इति चत्वारि । अन्नं पृथिवी । अवयविन इदं जन्म तैः तेजआदिभिर्जातं व्यक्तं खलु । अवयवी देहः ॥ २१ ॥

सप्तदशसंख्याने त्वेवं गणनम् । पञ्चभूतानि पञ्चमात्राः पञ्च श्रोत्रादीन्द्रियाणि इति पञ्चदश, एकेन मनसा सह आत्मा परमात्मा सप्तदश इति सप्तदशकम् । भूतमात्रेत्यनेनैकादशतत्वसंख्यानमपि ज्ञेयम् । पञ्चभूतानि पञ्चमात्राश्च, एकः परमात्मेति । ''भूतानि मात्राश्च परस्तत्वैकादशकं स्मृतम्'' इति वचनात् ॥ २२ ॥

षोडशसंख्यानि तत्वानि तद्वत् भूतमात्रेन्द्रियाणि पञ्चपञ्चेत्युक्तवत् । तर्हि पूर्वस्मात् को विशेष इत्यत उक्तम् **आत्मनेति** । आत्मनः सन्निधिस्थत्वान्मनसस्तयोरेकत्वेन । ''आत्मनः सन्निधिस्थ-त्वान्मनसस्तु तदुक्तितः । उक्तो भवेत् परात्मा तु तत्वं षोडशकं यदा'' इत्युक्तेः । एवशब्दो वीप्साद्योतकः । भूतानि पञ्च इन्द्रियाणि पञ्च मन आत्मा ब्रह्मा परमात्मा चेति त्रयोदशतत्वानि ''भूतेन्द्रियाणि च मनो ब्रह्मा विष्णुस्तथैव च । एवं त्रयोदशैवाहुस्तत्वानि मुनयो वराः'' इति, ''आत्मेति परमात्मा च विरिञ्चश्चापि कथ्यते । वायुर्मनश्च देहश्च स्वयमित्यपि कुत्रचित्'' इति (वचनात्) ॥ २३ ॥

उपसंहरति **इतीति** ॥ २४ ॥

**उद्धव उवाच -**

**प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।**
**अन्योन्यापाश्रयात् कृष्ण दृश्यते न भिदा तयोः ॥ २५ ॥**

**प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि ।**
**एतन्मते पुण्डरीकाक्ष महान्तं संशयं हृदि ।**
**छेत्तुमर्हसि पद्मेश वचोभिस्तत्वनैपुणैः ॥ २६ ॥**

**त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तनुशक्तितः ।**
**त्वमेव ह्यात्ममायाया गतिं वेत्थ नचापरः ॥ २७ ॥**

**श्रीभगवानुवाच -**

**प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ।**
**एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २८ ॥**

---

उद्धव एवं तत्वसंख्याविषयानुपपत्तिशङ्कापरिहारश्रवणेन तद्विषये निःशङ्कोपीदानीं प्रकारान्तरेण शङ्कते **प्रकृतिरिति** । अत्र पुरुषो विष्णुः प्रकृतिर्जडसञ्ज्ञा तावुभौ यद्यप्यात्मविलक्षणौ स्वरूपत एव भिन्नौ । ''अन्तरं च भिदा चेति वैलक्षण्यं प्रकीर्तितम्'' इत्यतो वैलक्षण्यं भेदः । तथाप्यनयोरन्योन्यापाश्रयाद् भिदा न दृश्यते । तत् कुत इति चोद्याभिप्रायः ॥ २५ ॥

अन्योन्यापाश्रयत्वं वर्णयति **प्रकृताविति** । हिशब्दो हेतौ । हरेः प्रकृतेराधारत्वेन तत उत्तमत्वं प्रकृतेस्तदधीनत्वेन तदवरत्वमन्तरेणानयोरन्योन्याधारत्वमेव दृश्यते हि यस्मात् तस्मान्मन्दमतेर्मे संशयं च्छेत्तुमर्हसीत्यन्वयः । नैपुणैः संशयपरिहारसमर्थैः । पद्मेशेत्यनेन हरेः प्रकृत्युत्तमत्वं किं वक्तव्यमिति जानन्नप्युद्धवो लोकविषयमन्दमतित्वमात्मन्युपचरतीति ज्ञातव्यम् ॥ २६ ॥

एतदेव प्रामाणिकमिति भावेनाह **त्वत्त इति** । तनुशक्तितोऽल्पबुद्धित्वात्, तामसादिशरीरबलाद्वा ज्ञानस्य प्रमोषेपि त्वत्तः । शक्तिः कासूर्बलं लक्ष्मीरिति, कासूर्बुद्धौ कुवाच्ये स्त्रीत्यभिधानाच्च शक्तिशब्देन बुद्धिरुच्यते । आत्ममायायाः स्वसामर्थ्यस्य त्वदधीनप्रकृतेर्वा गतिं स्थितिम् । ''आधारः प्रकृतेर्विष्णुर्नाधारस्तु हरेः क्वचित् । तथाप्यव्यक्तगो यद्वद् दृश्यते मन्दचेतसाम्'' इति पाद्मोक्तवचनान्मुख्याधारत्वं हरेरितरत्र मन्दमतिविवक्षयेति हिशब्दद्वयेन सूचयति ॥ २७ ॥

**ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धिं च गुणैर्विधत्ते।**
**वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ २९ ॥**

**दृग् रूपमर्कश्च परत्र रन्ध्रे परस्परं सिध्यति न स्वतोऽसौ।**
**आत्मा यदेषामुपराम आद्यःस्वयाऽनुभूत्याऽखिलसिध्यसिध्दिः ॥ ३० ॥**

**एवं त्वगादि श्रवणादि चक्षुर्जिह्वादिना सादि च[1] चित्तयुक्तम् ॥३१॥**

---

आत्मविलक्षणाविति यत् त्वयोक्तं तत् तथैवेति भावेन परिहरति **प्रकृतिरिति**। चशब्दो वैलक्षण्यानुकर्षार्थोऽवधारणार्थश्च। प्रकृतिपुरुषावन्योन्यविलक्षणावेवेत्यर्थः। वैलक्षण्याविवेकः किंकृत इति तत्राह **एष इति**। एष विकल्पः तमःकारणक इति प्रतिज्ञायते। तथाहि। गुणव्यतिकरात्मक एष सर्गो वैकारिको विकारनिमित्तः। स च गुणव्यतिकरस्त्रिविधः। सत्वरजस्तमसामेकैकप्राधान्येन त्रैविध्यम्। तत्र तमःप्रधानानामेव सत्वानां विरुद्धकल्पनं यस्मात् तस्मात् तम एव कारणम् ॥ २८ ॥

न केवलं तम एव प्रकृतिरीश्वरेच्छा च कारणमित्याह **ममेति**। अङ्ग उद्धव। मम माया ममेच्छा गुणमयी ज्ञानादिगुणमयी, सत्वादिगुणमयी मम माया मदधीना प्रकृतिश्च, गुणैः गुणभूतैर्महदहंकारादिभिः सत्वादिगुणैर्वा अनेकधा विकल्पबुद्धिं विधत्ते करोति। महत्तत्वविकाराज्जातत्वाद् वैकारिकोऽहंकारस्त्रिविधः। "महत्तत्वाद् विकुर्वाणादहंतत्वमजायत" इत्यादिना प्रसिद्धम्। "वैकारिको महांश्चैव तथाऽहंकार एव च। तथैव सात्विकश्चांशो वैकारिक इति त्रिधा" इति च। सोऽयं त्रिविधोपि त्रिविधः अध्यात्मादिभेदेन ॥ २९ ॥

एतत् त्रैविध्यं शृङ्गग्राहिकयैव दर्शयति **दृग् रूपमिति**। रन्ध्रे गोलके दृक् चक्षुरिन्द्रियम्, तदध्यात्मम्,उपलक्षणमेतत्। अध्यात्ममिन्द्रियाणि तैजसाहङ्कारस्वरूपाणि। तैरेव विपरीतज्ञानं जायते।"अहंकारे विद्यमाने भ्रमो भवति नान्यदा" इति वचनात्। परत्र देहाद् बहिर्यद् रूपं तदधिभूतं तामसम्। परत्र दिवि योऽर्कस्तदधिदैवतं वैकारिकम्।अनेन किं प्रयोजनमत्राह **परस्परमिति**। अध्यात्मादिगतचक्षुरादि इतरेतरापेक्षया सिध्यति ज्ञानाख्यप्रयोजनं भवति। असौ सिध्दिः स्वतो न एकैकस्मान्न स्यात्।चक्षुराद्यन्यतमाभावे ज्ञानं नोदेतीत्यर्थः। नैतावता परस्परसिध्दिः पूर्यत इत्याह **आत्मेति**। यदा आत्मा प्रयत्नो जडाहङ्कारो वा अस्ति तदा त्विदं वैकारिकं ज्ञानम्।

---

१.जिह्वादि नासादि चेति च च्छेदः स्यात्। तदा चक्षुर्वत् जिह्वादि नासादि च एवं भ्रमकारणमिति गमनिका।

**योऽसौ गुणक्षोभकृतो विकारः**
**प्रधानमूलो जगतः प्रसूतिः।**
**अहं त्रिवृन्मोह विकल्पहेतु-**
**र्वैकारिकः तामस ऐन्दियश्च ॥३२॥**

**आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः।**
**व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥३३॥**

---

प्रकृतिप्राकृतव्यतिरिक्तं जीवपरमात्मस्वरूपं कदा नु विशदं दृश्यत इत्यत्राह **एषामिति**। आत्मेत्यनुवर्तते। यदैषां प्रकृतिप्राकृतानामुपरामः अत्यन्तोच्छेदनलक्षणा मुक्तिस्तदा स्वयाऽनुभूत्या स्वरूपज्ञानेन आत्मा जीवःआद्य आत्मा परमात्मा च, ज्ञायत इति शेषः। कीदृशो हरिः। अखिलस्य सिध्यसिद्धी ज्ञानाज्ञाने यस्मात् स तथा। सर्वस्य ज्ञानाज्ञानहेतुरित्यर्थः।''सम्यग्ज्ञानं हरेः शक्त्या तन्मुक्तस्य विशेषतः। देवतानुग्रहो नित्यो मुक्तस्यापि ह्यपेक्ष्यते। नित्यं तत्प्रतिबिम्बत्वाज्जीवानामेव कृत्स्नशः। बाह्यज्ञानं च मुक्तस्य न जडाहंकृतेः क्वचित्। किन्तु स्वरूपशक्त्यैव देवेभ्यश्चाभिजायते'' इति वचनरत् ॥ * ॥ उक्तन्यायमतिदिशति **एवमिति**। चक्षुर्जिह्वादिना सह त्वगादि श्रवणादि चैवमध्यात्मादिभेदेन त्रिविधं सादि चानित्यं च, अन्योन्यापेक्षत्वात्। कीदृशं त्वगादि। चित्तयुक्तम् ।अनेन चित्तं मनोपि त्रिविधमिति ज्ञायते। चक्षुरिति पुनर्वचनमवधारणार्थम् ॥३०-३१॥

तामसाहंकारोऽपि विकल्पहेतुरिति सूचितं पुरस्तात्। तदिदानीं स्पष्टयति **योसाविति**। योसौ मोहविकल्पहेतुः अज्ञानान्यथाज्ञानहेतुः विकारः सत्वादिगुणक्षोभो महत्तत्वं तेन कृतः। स अहं अहंकारःत्रिवृत् त्रिरूपत्वेन वर्तते। त्रिप्रकारमाह **वैकारिक इति**। वैकारिकस्तामस ऐन्द्रिय इन्द्रियोत्पत्तिहेतुस्तैजसश्च। प्रयोजनमाह **जगत इति**। जगतः प्रसूतिः सृष्टिर्यस्मात् स तथा, जगत्सृष्टिहेतुरित्यर्थः। अनेन प्रकृतेःकारणत्वं गतमत्राह **प्रधानेति**। प्रधानं प्रकृतिर्मूलं महत्तत्वद्वारा कारणं यस्य स तथा ॥ ३२ ॥

महादिकार्यानुगतस्य हरेरपि गुणक्षोभकृतो विकारः स्यादिति तत्राह **आत्मेति**। आत्मा परमात्मा गुणक्षोभकृतविकारवान् न परिज्ञानमयत्वात् पूर्णज्ञानस्वरूपत्वात्। विकाराभिमानित्वमन्तरेण ज्ञानस्वरूपत्वेन आत्मा जीवोपि न गुणक्षोभकृतविकार इति।विकल्पस्वरूपमाह **विवाद इति**।

**उध्दव उवाच-**

**त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो।**
**उच्चावचान् यथा देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥**

**तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः।**
**न ह्येतत् प्रायशो लोके विद्वांसोऽश्नन्ति वञ्चिताः ॥ ३५ ॥**

**श्री भगवानुवाच-**

**मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम्।**
**लोकाल्लोकं प्रयात्यन्यमात्मा तदनुवर्तते ॥ ३६ ॥**

---

जीवेश्वराभेदजगन्मिथ्यात्वादिकमसदस्ति जीवेश्वरभेदप्रपञ्चादिकं सन्नास्तीति भिदया वस्तु-याथार्थ्यादिविपर्ययेण अर्थनिष्ठः पदार्थनिष्ठो विवादो विकल्पो भवति। केषामित्यत उक्तं **व्यर्थ इति**। स विकल्पो व्यर्थोऽप्यविद्यमानविषयोपि तथा निष्प्रयोजनोपि स्वलोकात् स्वाश्रयान्मत्तः परावृत्तधियामपगतबुध्दीनां नोपरमेत पुनःपुनर्वर्धत इत्यर्थः। ''असदस्ति च सन्नास्तीत्येवं भेदाद् विवादनम्। सदैव हरिपादाब्जविमुखानां प्रवर्तते'' इति मानं हिशब्दगृहीतम् ॥ ३३ ॥

त्वद्विमुखानां स्वकृतकर्ममूढानामेषां पुनर्भवोऽस्तीति सिध्दम्। तत्र नित्यानां जीवानां जन्ममृती कीदृश्यौ कर्मेतरकारणं च किमिति पृच्छत्युध्दवः **त्वत्त इति**। त्वत्तः परावृत्तधियः स्वतो नित्या जीवा अहं जातोऽहं मृत इत्यभिमानेन स्वकृतैः कर्मभिर्यथा उच्चावचान् देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥

तद् ग्रहणादिकं तथा ममाख्याहि। बुध्दिबलविधुरैर्दुर्ज्ञेयं चेदपि बुध्दिमद्भ्यः श्रोतुं शक्यत्वात्। किमिति ममाख्येयमिति निर्बन्धः इति तत्राह **नहीति**।नाश्नन्ति नावगच्छन्ति। अशुगतिपूजनयोरिति धातुः, गतिर्ज्ञानम्। वञ्चिता मोहिताः, त्वयेति शेषः ॥ ३५ ॥

नित्यानां जीवानां देहग्रहणादिकारणं कर्म, इतरन्मनोपीत्याशयवान् परिहरति **मन इति**। मरणकाले कर्ममयं कर्मसंस्कारोपचितं लिङ्गात्मकं सूक्ष्मैः पञ्चभिरिन्द्रियैर्युतं मनो लोकाद् देहादन्यं लोकं देहं प्रयाति। तदा आत्मा जीवः तन्मनोऽनुवर्तते। कर्म ईश्वरः, तन्मयं तत्प्रेरितमिति वा। अनादितः प्रकृतिमयेन तेन बद्धत्वात् तदनुवर्तनं युक्तम्। ॥ ३६॥

**ध्यायन्मनो हि विषयान् दृष्टान् वाऽनुश्रुतानथ।**
**उद्यत् सीदत् कर्मतन्त्रं स्मृतिस्तदनु शाम्यति॥ ३७॥**

**विषयाभिनिवेशेन नात्मानं यत् स्मरेन्मनः।**
**जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः॥ ३८॥**

**जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद।**
**विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः॥ ३९॥**

**स्वप्नं मनोरथं चार्थं प्राक्तनं न स्मरत्यसौ।**
**तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति॥ ४०॥**

---

मनःप्रधानः पुरुषोऽनुवर्तत इत्यनेन मनसः प्रयोजकत्वं प्रतीयते, तत् कथमत्राह **ध्यायदिति**। मनो दृष्टान् अथ वा श्रुतान् विषयान् ध्यायत् स्यादिति हि यस्मात्, तस्मात् पुरुषप्रवृत्तौ मनः प्रयोजकमिति शेषः। इतोऽपि मनः प्रयोजकमित्याह **अथेति**। अथ यदा कर्मतन्त्रं विषयसंस्कारसमुद्रमग्नं मनः सीदद् विपन्नमात्मनो देहादुद्यद् उद्गतं भवति तदा तदनु मनोऽनु जीवस्य स्मृतिरर्थस्मरणं शाम्यति नश्यति, देहान्तराभिमानपर्यन्तमिति शेषः ॥ ३७॥

मरणमेव स्पष्टयति **विषयेति**। कस्यचित् कर्महेतोरुत्तरदेहं प्रवेक्ष्यन् विषयाभिनिवेशेन उत्तरदेहनिवेशेन जन्तोर्मन आत्मानं पूर्वदेहं न स्मरेत् स्मरणसमर्थं न स्यादिति यत् सा अत्यन्तविस्मृतिः मृत्युरित्यन्वयः। वा इत्यनेन जातस्य हि ध्रुवो मृत्युरिति स्मृतिप्रसिद्धिं द्योतयति॥३८॥

इदानीं जन्म स्पष्टयति **जन्मेति**। पुंसो देहादिष्वहं ममेदमित्याद्यात्मतया आत्मीयतया सर्वभावेन सर्वचेष्टया समस्ताभिप्रायेण विषयस्वीकृतिं देहाभिमानं जन्म प्राहुरित्यन्वयः। देहादि स्वयं स्वीकीयश्च न भवति परमात्माधीनत्वादिति। तुशब्देन विशेषितार्थावुदाहरति **यथेति**। जाग्रदिदमिति अयं स्वप्नो यथा अविद्यमानः, यथा च मनोरथविषयोऽप्यविद्यमानो नत्वनिर्वचनीयः, (एवं) परस्यापि जीवस्य (आत्मात्मीयत्वाभिमानेन) जन्ममृती युक्ते इति भावः॥३९॥

अत्यन्तविस्मृतिं सोदाहरणं स्पष्टयति **स्वप्नमिति**। यथा स्वप्नोदेरुत्थितः स्वप्नं स्वप्नदृष्टं मनोरथं च प्राक्तनमर्थं तद्विषयं चासौ स्वप्नादिदृङ् न स्मरति तथा तत्र देहान्तराभिमाने सति पूर्वं पुरातनं आत्मानं देहं न स्मरति। इवशब्दः केषांचिन्महात्मनां स्मरणं सम्भवतीत्यर्थे। अस्मरणे कारणमाह

**ईदृशायास विज्ञाय त्रैविध्यं भाति वस्तुषु।**
**बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद् यथा॥ ४१ ॥**

---

**अपूर्वमिति** । चशब्द एवार्थे। अपूर्वं पश्चात्तनं नूतनं देहमेवानुपश्यति यत् तत इति । यद्वा विषयाभिनिवेशमेव स्पष्टयति **स्वप्नमिति** । प्राक्तनं स्वप्नं मनोरथं च यथा न स्मरति असौ तथा प्राक्तनजन्मानुभूतमर्थं विषयं च नं स्मरति । किं तत्र निमित्तमत्राह **तत्रेति** । तत्र देहान्तरप्राप्तौ पूर्वमनादिमेवात्मानम् अपूर्वं सादिमिवानुपश्यति इति यस्मात् तस्माद् विषयाभिनिवेश एव कारणमित्यर्थः ॥४०॥

अत्र जीवस्यानादिनित्यत्वं देहस्य सादित्वेनानित्यत्वं तत्राभिमानानभिमानलक्षणे जन्ममृती इत्युक्तम् । तत्र जीवस्यानादिनित्यत्वे युक्तमुक्तम् । तदेव कथमत्राह **ईदृशायास इति** । वस्तुनि जीवतत्त्वे विज्ञाय विचारेण ज्ञाते सति जीवस्यानादिनित्यत्वं ज्ञायते । तथा हि । ईदृशः इदानीन्तनकालवर्त्येव, आयास्यतीत्याय एष्यत्कालवर्ती चायमेव, सः अतीतकालसम्बन्ध इति त्रैविध्यं जीवस्य त्रिकालवर्तित्वं भाति । तदेवानादिनित्यत्वं देहस्य तदभावादतो युक्तमुक्तम् । ईदृशायास इत्यत्र यास इत्यत्र दीर्घलोपो वक्तव्यः[१], क्षैप्रे दीर्घलोप इति (महाव्याकरण सूत्रात्) । यज्ज्ञानमन्तरेण पुरुषार्थो न स्यात् तत्र क्षिप्रं प्रवर्तनीयमिति ज्ञापनाय प्रयुक्तो दीर्घो लुप्यते इति सूत्रात्[२] । अत्र ते इति प्रयोगाच्च । अनित्यशरीरसम्बन्धेन जीवस्याप्यनित्यत्वमापद्यत इति तत्राह **बहिरिति** । बहिः नारिकेलकपालवद् बहिष्ठो देहो जीवाद् भिन्नो नारिकेलवदन्तः स्वान्तर्वर्तिनो जीवस्य भिदाया अनित्यत्वादिविशेषस्य आपादको न भवति । भेदो विशेषो दलनमित्य-भिधानात्[३] । जीवस्यानादिनित्यत्वे परमात्मना अभेदः प्राप्त इत्यतो वाह **बहिरिति** । बहिरन्तर्वर्तिनो हरेः भिदाया हेतवो दुःखादयो यस्य स बहिरन्तर्भिदाहेतुः । अस्तु हरेर्भेदो जीवस्य देहाद् भेदः कथमित्यतो वाह **बहिरिति** । अयमेव बहिरन्तस्थत्वधर्मः आत्मानात्मनोर्वैलक्षण्ये

---

१. ईदृशायास इति श्लोके वर्तते । ईदृशायस इति रूपं निर्वचनेन साधितम् । संहितायाः पदपाठकरणवेलायां क्षैप्रयकारोपरि विद्यमानस्य आकाररूपदीर्घस्य लोपो वक्तव्यः । ह्रस्व एव वक्तव्य इत्यर्थः । तत्र तात्पर्यदर्शितः प्रयोगः संहितायाम् अत्रा ते इति, पदमाठे तु अत्र ते इति ।

२. इदं वाक्यमसङ्गं प्रक्षिप्तं स्यात् ।

३. भेदो विशेषे दलने इति पाठान्तरम् ।

**नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।**
**कालेनालक्ष्यवेगेन सूक्षत्वात् तन्न दृश्यते ॥ ४२ ॥**

**यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ।**
**तथैव सर्वभूतानां वयोऽवस्था च तत्कृता ॥ ४३ ॥**

**सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम् ।**
**सोऽयं पुमानिति नृणां मृषागीर्भिर्मृषायुषाम् ॥ ४४ ॥**

---

भिदाहेतुर्विशेषहेतुरित्यर्थः । देहस्यानात्मत्वं सोदाहरणमाह **जन इति** । यथा असज्जनोऽसज्जनकृत् प्रायोऽसज्जनोऽसज्जनमेव पुत्रं जनयतीति पितृज्ञानात् पुत्रदौरात्म्यं ज्ञायते एवमनित्यो देहोऽनित्यं देहं जनयतीति । अतो देहस्यानित्यत्वात् जीवस्य त्रैकालिकवृत्तित्वेन नित्यत्वाद् देहस्यानात्मत्वमत एव जीवाद् भिन्नत्वं च सिद्धम् । असाधुजन एव जीवपरयोरभेदं वक्तीति सोदाहरणमाह **जन इति** । यथा असाधुजन एवासाधुजनं करोति न साधुः, एवमासुरो जनो सन्तं भेदमसन्तं करोति । अतोऽसाधुजनपरम्परादौरात्म्यं साधुजनवाक्याज्ज्ञायत इत्यर्थः ॥ ४१ ॥

देहस्यानित्यत्वप्राकरमाह **नित्यदेति** । नित्यदा प्रतिक्षणं भूतानि जीवाधिष्ठतदेहा अंशतो भवन्त्युपचितानि भवन्ति, न भवन्ति च अपचितानि भवन्ति च । (तर्हि) किमिति न दृश्यत इति तत्राह **कालेनेति** । उपचयापचययोः सूक्षत्वात् लिङ्गवेद्यात्वाच्चक्षुषा तन्न दृश्यते ॥ ४२ ॥

तदेव सोदाहरणं वक्ति **यथेति** । यथा अर्चिरादीनां सेयं ज्वालेत्यादिप्रतीतिः कालकृता तथा सर्वभूतानां सर्वप्राणिदेहानां वयोऽवस्था बाल्यकौमाराद्यवस्था तेन कालेन कृता ॥ ४३ ॥

नन्वस्तु कालकृतत्वम् । अत्र विवेकः कथमित्यत उक्तमेव विवृणोति **सोयमिति** । यथा प्रतिक्षणमग्निज्वालादीनामागमविगमभावात् सोयं दीप इति प्रत्यभिज्ञा न मृषा, इति नञोऽध्याहारः, स एवायं दीप इत्यादिप्रत्यभिज्ञा मृषा तथा मृषागीर्भिर्मृषायुषां पुंसां केषाञ्चिद्विशेषाणामागमात् केषाञ्चिदपगमात् स एवायं पुमानिति देहविषयो व्यवहारो मृषा विवेकिनां स चायं देह इत्यादिको न मृषा । ''स चायमिति तु ज्ञानं न मृषाऽयं स एव तु । इति ज्ञानं मृषैव स्याद् भेदाभेदौ यतस्तनोः'' इत्यादेर्विशेषविवेको युज्यते ॥ ४४ ॥

**आद्यः स्वकर्मबीजेन जायते सोऽव्ययः पुमान्।**
**म्रियते चामरो भ्रान्त्या यथाऽग्निर्दारुसंयुतः ॥ ४५ ॥**

**निषेकगर्भजन्मानि बाल्यकौमारयौवनम्।**
**वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥**

**एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः।**
**गुणसङ्गादुपादत्ते क्वचित् काश्चिज्जहाति च ॥ ४७ ॥**

**आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ।**
**भवाप्ययौ हि भूतानामभिज्ञाद्वयलक्षणौ ॥ ४८ ॥**

---

ननु देहस्यैव विकारश्चेदहं जातोऽहं मृत इति प्रतीतिः कथमत्राह **आद्य इति**। आद्य उत्पत्तिरहितः, अमरो मरणरहितः, आद्यन्तशून्य इत्यर्थः, अव्ययः शरीरसंयोगवियोगयोरपि वृद्धिक्षयादिरहितः स जीवः स्वकृतकर्मबीजेन जायते म्रियते चेति व्यवहारो भ्रान्त्या विवेकज्ञानराहित्येन यथा दारुसंयुक्तोऽग्निरुत्पत्तिविनाशवानित्युच्यते। तस्मान्निस्य जीवस्य जननमरणप्रतीतिरविवेककृतेत्यर्थः। ''स चायमिति तु ज्ञानं न मृषाऽयं स एव तु। इति ज्ञानं मृषैव स्याद् भेदाभेदौ यतस्तनोः। अभेद एव जीवस्य नित्यं प्रत्येकशः पृथक्। देहदीपनदीवारिफलादीनां पृथक् स्वतः। भेदाभेदौ परिज्ञेयौ कार्यकारणयोरपि। गुणस्य गुणिनश्चैव जातिव्यक्त्योस्तथैव च। तथाऽवयव्यवयवयोः क्रियायास्तद्वतस्तथा। एवं जडेषु नियमश्चिद्रूपेष्वभिदैव तु। ये धर्मा नियमेनैव धर्मिणो न वियोगिनः। जडस्था अप्यभिन्नास्ते भिन्नाभिन्ना वियोगिनः'' इति वचनाद् यावद्द्रव्यभाविनामभेदोऽयावद्द्रव्यभाविनां भेदाभेदाविति निर्णय इति ॥ ४५ ॥

जन्मादिकं जीवस्य नैवेत्युक्त्या देहस्य सिद्धं दृढयति **निषेकेति** ॥ ४६ ॥

चिद्रूपस्य जीवस्य जडशरीरसम्बन्धः कथं घटत इति तत्राह **एता इति**। अन्यस्य हरेरधीना मनोरथमयीरेतास्तनूः सत्वादिगुणसङ्गादुपादत्ते अभिमनुते अभिमानं जहाति च। हरेरिच्छा गुणसङ्गश्च घटक इत्यर्थः ॥ ४७ ॥

अभिमानस्वीकारो जन्म तदत्यन्तविस्मृतिर्मरणमित्युक्तम्। तद् द्वयं निष्प्रमाणकत्वेन मायामयं

**तरोर्बीजविकाराभ्यां यो विद्वान् ज़न्मसंयमौ ।
तरोर्विलक्षणो दृष्ट एवं द्रष्टा तनोः पृथक् ॥ ४९ ॥**

---

किं न स्यादत्राह **आत्मन इति**। आत्मनो देहस्य भवाप्ययौ जन्मनाशौ पितृपुत्राभ्यां लिङ्गाभ्यामनुमेयौ । तथा हि । स्वदेहात् पुत्रदेहो जातः, यत् तस्मात् जन्म सिद्धम् । तथा पितृशरीरं च विनष्टं पुत्रेण दृष्टं यत् तस्मात् तदपि प्रत्यक्षं सिद्धमेवं देहस्य जननमरणे सिद्धे इति भावः । ननु तर्हि दहेस्य विद्यमाने जातो मृत इति चेतनविषयत्वेन कथं व्यपदिश्येत इति तत्राह **भवाप्ययाविति** । वस्तूनां नित्यानां जीवानां जातोऽहं मृतोऽहमिति व्यपदिश्यमानौ भवाप्ययौ अभिज्ञाद्वयलक्षणौ, अभिज्ञाद्वयं जातो मृत इत्यभिमानद्वयमेव लक्षणं ययोस्तौ तथा, हि यस्मात् तस्माद् व्यपदेश इति भावः ॥ ४८ ॥

अभिमानमात्रमिति समर्थनेन किं प्रयोजनमित्याशंक्याभिमानत्यागेन संयमलक्षणोऽर्थ इति भावेनाह **तरोरिति** । यस्तरोर्जन्मसंयमौ बीजविकाराभ्यां बीजाद् विकाराच्च विद्वान् जानाति, यथा तेन विदुषा तर्वन्तःस्थित[१] आत्मा तन्नियामकः परमात्मा तरोर्विलक्षणो दृष्टः एवं देहस्य जन्मसंयमौ द्रष्टा जीवः तन्नियामकः सर्वज्ञः परमात्मा च तनोः पृथग् भिन्न इत्यर्थः । अनेन तरोर्बीजविकारदृष्टान्तेन विद्वान् देहाभिमानं त्यक्त्वा संयमं याति सर्वस्माद् हरेर्भेदं च जानातीत्युक्तम्। अत्र किं प्रमाणमित्यतो वाह **तरोरिति** । विद्वद्दर्शनं मानमित्यर्थः । यो बीजविकाराभ्यां तरोर्जन्मसंयमौ विद्वान् तरोरवस्थां गतः तेन तरोर्विलक्षणो यथा दृष्ट एवं देहस्य जन्मादेर्द्रष्टा जीवस्तु शरीराद् भिन्न इति स्वानुभवसिद्धमुक्तमिति भावः[२] । ''बीजाद्यवस्थासंयुक्ताद् वृक्षाद् द्रष्टा यथा पृथक् । एवं विकारिणो विष्णुर्जीवश्च पृथगेव तु'' इति वचनात् ॥ ४९ ॥

---

१. तर्ववस्थां गत इति पाठान्तरम् ।

२. देहात्मनोः स्पष्टतरविवेकाय निदर्शनान्तरमाह तरोरिति । तरुः बीजेन जन्म प्राप्नोति विकारेण अवयवापचयेन, छेदादिना प्राप्तेनेति भावः, संयमं नाशं (प्राप्नोति) इत्येवं विद्वान् यः स चेतनः स्वयं तरोर्विलक्षण इति स्वेन दृष्टः, एवं दर्शनेन तनोः स्वदेहस्य पुत्रादिदृष्टान्तेन जन्मसंयमौ विद्वान् पूर्वोक्तरीत्या स्वनित्यत्वज्ञानी चेतनः देहान्तःकरणादिरूपात् पृथक् अहं भिन्न इति स्वयं स्पष्टं जानीयादित्यर्थः । एवं तनोः सकाशाद् द्रष्टा च तनौ स्थित्वा सर्वसाक्षी परमात्मा च तरुद्रष्टृवत् पृथगेव ज्ञातव्य इत्यर्थः । तनुभेदस्य स्पष्टतरज्ञानं देहाभिमानपरित्यागविशेषाद् भवति । एवं देहाभिमानपरित्यागविशेषस्य देहभेदज्ञानविशेषस्य चान्योन्यं कार्यकारणभाव इति भावः'' इति सुधीन्द्रतीर्थाः । इदमेव व्याख्यानमीषद्व्यत्यासेन यादवेन्द्रतीर्थीयमित्युच्यते ।

**प्रकृतेरेवमात्मानमविविच्याबुधः पुमान्।**
**तत्वेन स्पर्शसम्मूढः संसारं प्रतिपद्यते ॥ ५० ॥**

**सत्वसङ्गाद् ऋषीन् देवान् रजसाऽऽसुरमानुषान्।**
**तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥**

**नृत्यतो गायतः पश्यन् यथैवानुकरोति तान्।**
**एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥ ५२ ॥**

**यथाऽम्भसा प्रचलता तरवोऽपि चला इव।**
**चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५३ ॥**

---

विकारिणो देहाज्जीवपरमात्मनोर्भेदेन ज्ञानं मुक्तिसाधनं तदभेदज्ञानं संसारकारणमित्याह **प्रकृतेरिति**। प्रकृतेः देहादेः आत्मानं जीवं परमात्मानं च तत्वेनाविविच्य सम्यग्भिन्नमज्ञात्वा अत एवाबुधः पुमान् संसारं प्रतिपद्यते। अज्ञाने निमित्तमाह **स्पर्शेति**। स्पर्शा विषयाः, तत्रासक्तत्वान्मूढः ॥ ५० ॥

संसारतारतम्यमपि सत्वादिगुणनिमित्तमित्याह **सत्वसङ्गादिति**। सत्वसङ्गात् सात्विकसङ्ग-लब्धपुण्यकर्मणा ऋष्यादीन् प्राप्नोति। रजसा राजसकर्मणा आसुरमानुषान् आसुरादिकं प्राप्नोति। तामसकर्मणा ब्रह्मराक्षसादिभूततिर्यग्योनित्वमाप्नोति ॥ ५१ ॥

स्वतः सात्विकानां सुरादीनां दुःखित्वमितरेषां सुखित्वमित्यादिविपरीतानुभवः कथमत्राह **नृत्यत इति**। यथा लोके नर्तनादि कुर्वतः पश्यन् स्वयं च तान् पुरुषाननुकरोति नृत्यादि करोति एवमनीहोपि दुःखाद्यनुभवायोग्योपि बुद्धिगुणान् दुःखादीन् पश्यन् अनुभवन् अहं दुःखीत्यादि ममत्वेन अनुकार्यते[1], हरिणेति शेषः। ''दुःखशोकादयः सर्वे ज्ञेया बुद्धिगुणा इति। सुखज्ञाने तु जीवस्य शक्तिः स्नेहस्तथैव च। विपर्ययेणासुराणां जीवबुद्धिगुणा मताः। आत्मनोपि गुणा बुद्धिकृता बुद्धिगुणा इति। उच्यन्ते सुखदुःखाद्याः परमात्मकृता इति'' इति वचनात् ॥ ५२ ॥

---

१. बुद्धिगुणानन्तःकरणगुरान् दुःखादीनान्तःकरणसम्बन्धादात्मन्यारोपयतीति भावः।

**यथा मनोरथधियो विषयानुभवो मृषा।**
**स्वप्नदृष्टश्च दाशार्ह तथा संसार आत्मनः॥ ५४॥**

**अर्थे ह्यविद्यमानेपि संसृतिर्न निवर्तते।**
**ध्यायतो विषयान् पुंसः स्वप्नेऽप्यर्थागमो यथा॥ ५५॥**

**तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः।**
**आत्माग्रहणनिष्पन्नं पश्यन् वैकल्पिकं भ्रमम्॥ ५६॥**

**क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धः शापितोपि वा।**
**ताडितः सन्निरुद्धो वा वृत्त्या वा परिहापितः॥ ५७॥**

---

स्वतः सुखादिरूपाणां चेतनानां दुःखादिरूपत्वप्रत्ययो भ्रान्त इत्येतद् बहुदृष्टान्तैः समर्थयते **यथेत्यादिना**। यथा प्रचलताऽम्भसा तीरस्थास्तरवोपि चलाश्चलनधर्मवन्त इव दृश्यन्ते। यथा च भ्राम्यमाणेन चक्षुषा भूर्भ्राम्यतीव दृश्यते यथा च मनोरथधियो मनोरथविषयाः मृषा वृथा यथा च स्वप्नदृष्टो विषयानुभवोपि मृषा हे दाशार्ह उद्धव (तथा) आत्मनो जीवस्य संसारोपि वृथा अल्पप्रयोजनः। ''अल्पप्रयोजनं यत्तन्मृषेत्येव तदुच्यते'' इति वचनात्॥ ५३-५४॥

अस्वरूपत्वे किमिति न निवर्तत इति तत्राह **अर्थ इति**। अर्थे दुःखित्वादिलक्षणे विषये अविद्यमानेपि संसृतिः संसृष्टदुःखित्वादिप्रत्ययो न निवर्तते किन्तु वर्तत एव। अनिवृत्तौ निमित्तमाह **ध्यायत इति**। निरन्तरं शब्दादिविषयध्यानमनिवृत्तौ कारणमित्यर्थः। तत् कुत्र दृष्टमत्राह **स्वप्न इति**। ध्यायत इत्यनुवर्तते। जाग्रद्दृष्टतुरगाद्यर्थध्यानात् स्वप्नेऽप्यर्थागमो तुरगाद्यर्थागमो न निवर्तते उपादानादिव्यवहारानुभवात्। अत्र यथाम्भसेत्यादिदृष्टान्तानां प्रपञ्चमिथ्यात्वे न तात्पर्यम्। किन्तु सुखरूपाणां जीवानां देहसम्बन्धात् अहं दुःखीत्यादिप्रत्ययस्य। यथा स्वतः शुक्लोपि शङ्खो जपाकुसुमसन्निधानाल्लोहित इति शङ्खविषये लौहित्यप्रत्ययस्य मिथ्यात्वं तथाऽत्रापीति सन्तोष्टव्यम्॥ ५५॥

फलितमाह **तस्मादिति**। आत्मनोर्जीवपरमात्मनोः स्वरूपाग्रहणेन निष्पन्नं वैकल्पिकं विरुद्धकल्पनाजनितं भ्रमं पश्यन्॥ ५६॥

विष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ।। ५८ ।।

उद्धव उवाच -

यथैवमनुबुध्येयं वद नो वदतां वर ।
सुदुःसहमहं मन्ये आत्मन्यसदतिक्रमम् ।। ५९ ।।

विदुषामपि विश्वात्मन् प्रकृतिर्हि बलीयसी ।
ऋते त्वद्धर्मनिरतान् शान्तांस्ते चरणालयान् ।। ६० ।।

।। इति द्वाविंशोऽध्यायः ।।

।। अथ त्रयोविंशाध्यायः ।।

श्री शुक उवाच -

स एवमाशंसित उद्धवेन भागवतमुख्येन दशार्हवर्यः ।
सभाजयन् भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ।। १।।

---

दुःसहविषयोपद्रवेपि तत्परिहारप्रयत्नो न कार्यः किन्तु विषयेभ्यः प्रत्याहृतमनसा स्वात्मानं संसारादुद्धर्तुं प्रयतेतेति शिक्षयति **क्षिप्त इत्यादिना** ।। ५७-५८ ।।

विषयाः सोढव्या इति यद् हरिणोक्तं तत्रोद्धवश्चोदयति **यथेति** । यथावत् स्पष्टीकुरु । ते तव चरणालयान् चरणैकशरणान् ऋते इतरेषां विदुषामपि असतामात्मन्यतिक्रमं सुदुःसहं मन्ये । तत्र हेतुगर्भविशेषणमाह **प्रकृतिरिति** । प्रकृतिर्बलीयसी हि । अहं ममेति देहाभिमानस्वभावो बलिष्ठोऽपरिहार्यः हि यस्मात्, तस्मादिति शेषः ।। ५९-६० ।।

**।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य द्वाविंशोऽध्यायः ।।**

भक्तिमन्तरेण सर्वसन्न्यासो दुःखहेतुरितरः सुखहेतुरित्येतदस्मिन्नध्याये समर्थ्यते । तत्रोद्धवेन पृष्टः कृष्णः उद्धवं प्रति किमाहेति राज्ञो मानसीं शङ्कां परिहरति **स एवमिति** । आशंसितः स्तुतः पृष्टः । श्रवणीयानि वीर्याणि सृष्ट्यादिविषयसामर्थ्यानि , श्रवणेन सर्वाभीष्टप्रदानि वीर्याणीति भावः, यस्य स कृष्णस्तमाबभाषे ।।१।।

श्रीभगवानुवाच -

[१]बाह्यान्तर्भजनो ह्यत्र साधुर्वै दुर्जनेरितैः।
दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः॥२॥

न तथा तप्यते विद्धः पुमान् बाणैर्हि मर्मगैः ।
यथा तुदन्ति मर्मस्था असतां परुषेषवः ॥ ३ ॥

कथयन्ति महापुण्यमितिहासमिहोद्धव ।
तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥

केनचिद् भिक्षुणा गीतं परिभूतेन दुर्जनैः।
स्मरता धृतियुक्तेन विपाकं निजकर्मणः ॥ ५ ॥

अवन्तीषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ।
वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥

ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणाप्यनर्चिताः ।
शून्यावसथ आत्मापि काले कामैरनर्चितः ॥ ७ ॥

---

किमाहेति तत्राह **बाह्येति** । अत्र जीवराशौ बाह्यान्तर्भजनः बाह्यान्तःशत्रुशोषकरः, साधुर्वै साधुश्चेत्यभितश्च सज्जनो दुर्जनेरितैः दुर्जनोच्चारितैः दुरुक्तैर्भिन्नमात्मानं मनः समाधातुमीश्वरः समर्थः । यद्वा यो दुरुक्तैर्भिन्नमात्मानं समाधातुमीश्वरः स साधुः सज्जनो वै । कुतः । बाह्यान्तर्भजनो हीति ॥ २ ॥

अत्र श्रीकृष्णः सुखबोधायेतिहासं वक्ति **कथयन्तीति** । इह त्वत्पृष्टेऽर्थे ॥ ३-४ ॥ विपाकं फलनिष्पत्तिम् ॥ ५ ॥

वार्तावृत्तिः कुसीदादिजीवनोपायवान् । कदर्यः दारिद्र्याभावेनोपेतः । कामी परवित्तस्पृहावान् ॥ ६ ॥ लुब्धत्वे हेतुमाह **ज्ञातय इति** । अत्र कैमुत्यमाह **शून्येति** । निजधनजातमन्यत्र निधाय स्वयं धनशून्यगृहे तिष्ठन् । आत्मा स्वयं । कामैः काम्यैरशनादिभिः ॥ ७ ॥

---

१. बाह्यान्तर्भर्जन इति पाठः स्यात् ?

**दुःशीलस्य कदर्यस्य द्रुह्यतः पुत्रबान्धवान् ।**
**दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियम् ॥ ८ ॥**

**तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ।**
**धर्मकामविहीनस्य चुक्रुधुः पंचभागिनः ॥ ९ ॥**

**तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद ।**
**अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥ १० ॥**

**ज्ञातयो जगृहुः किंचित् किंचिद् दस्यव उद्धव ।**
**दैवतः कालतः किंचिद् ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥**

**स एवं द्रविणे नष्टे धर्मकामविवर्जितः ।**
**उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥**

**तस्यैवं ध्यायतो दीर्घमगादायुस्तपस्विनः ।**
**खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३॥**

**स चाहेदमहो कष्टं वृथाऽऽत्मा मे सुतापितः ।**
**न धर्माय न कामाय यस्यार्थायास ईदृशः ॥ १४ ॥**

**प्रायेणार्थः कदर्याणां न सुखाय कदाचन ।**
**इह चात्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥**

---

पुत्रादिभिरपि कृतप्रियो न भवति किमुतान्यैरिति भावेनाह **दुःशीलस्येति** ॥ ८ ॥

न केवलं कुपिताःपुत्रादयः प्रियं न चेरुः (किन्तु) पंचयज्ञभागभुजो देवा अपीति वक्ति **तस्येति** । यक्षवित्तस्य यक्षवित्तवदनुपभोगवित्तस्य ॥ ९ ॥

ततः किमभूदत्राह **तदवध्यानेति** । तदवध्यानेन तेषां देवानामवज्ञाजातकोपेन विस्रस्तः क्रमेण विनष्टः पुण्यस्कन्धः पुण्यसमूहो यस्य स तथा तस्य । पुण्यस्कन्धः पुण्यलक्षणो भुजः शिरो वा, विस्रस्तं शिथिलबन्धनं वा । सुकृतनाशफलमाह **अर्थ इति** ॥ १० ॥

नाशप्रकारमाह **ज्ञातय इति** ।नृपार्थिवात् नृराजात् ॥ ११ ॥ योग्यस्य धननाशो वैराग्य-

**यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ।**
**लोभः स्वल्पोपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥**

**अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ।**
**नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥**

**स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः ।**
**भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥**

**एते पञ्चदशानार्था ह्यर्थमूला मता नृणाम् ।**
**तस्मादनर्थमर्थाख्यं श्रेयोर्थी दूरतस्त्यजेत् ॥ १९ ॥**

**भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ।**
**एकयाऽर्थेच्छया सद्यः सर्वे चाप्यरयः कृताः ॥ २० ॥**

**अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः ।**
**त्यजन्त्यसून् वृथा घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥**

**लब्ध्वा जन्मान्तरैः प्रार्थ्यं मानुष्यं तद् द्विजाग्र्यताम् ।**
**तदनादृत्य ये सर्वं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥**

---

हेतुरित्याशयेनाह **स इति** ॥ १२ ॥ तपस्विनः सन्तापवतः ॥ १३ ॥ निर्वेदप्रकारमाह **स चेति** । आत्मा देहो यस्य मे ॥१४-१६ ॥

आत्मोपतापायेत्युक्तं विवृणोति **अर्थस्येति** । साधने आयासः । सिद्धे साधिते उत्कर्षे रक्षणे च त्रासचिन्ते । व्ययेन चिन्ता । नाशे त्रासः । उपभोगे च भ्रमो बुद्धिभ्रंशः, पिशाचावेशेनेति शेषः ॥ १७ ॥ किञ्चेदं वक्ष्यमाणं वित्तत्यागे कारणं भवतीति भावेनाह **स्तेयमिति** । स्मयोऽहंङ्कारः । मदो दर्पः । भेदो द्वैधीभावः । राजादिभ्यो व्यसनानि विविधनिरसनानि ॥ १८ ॥

ततः किं कर्तव्यमत्राह **तस्मादिति** ॥ १९ ॥ अर्थः कथं द्वैधीभावं करोतीति तत्राह **भिद्यन्त इति** । भिद्यन्ते दीर्यन्ते । प्राणिमात्रमपि प्रतिपक्षीभवतीत्याह **एकयेति** ॥ २० ॥ सन्तु शत्रवस्ते किं कुर्वन्तीति तत्राह **अर्थेनेति** । हिरप्यर्थोऽवधारणार्थो वा ॥ २१ ॥

स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान्।
द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥

देवर्षिपितृभूतानि ज्ञातीनन्यांश्च भागिनः।
असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥

व्यर्थस्यार्थेहया वित्तं प्रमत्तस्य वयो बलम्।
कुशलाय न सिध्यन्ति जरठः किन्नु साधयेत्॥ २५ ॥

तस्मात् संक्लिश्यतेऽविद्वान् व्यर्थयाऽर्थेहयाऽसकृत्।
कस्यचिन्मायया नूनं लाकोऽयं सुविमोहितः ॥ २६ ॥

किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत।
मृत्युना ग्रस्यमानस्य कर्मभिर्वेति जन्मदैः ॥ २७ ॥

---

जन्मान्तरैः देवादिजन्मविशेषैरपि प्रार्थ्यं मानुष्यं लब्ध्वा तत्र द्विजाग्र्यतां लब्ध्वा तत् द्विजाग्र्यत्वमनादृत्य ये अर्थार्जनादिकर्मणा सर्वं शुभं घ्नन्ति ते अशुभां गतिं गच्छन्ति ॥ २२ ॥ इदमेव विशिनष्टि **स्वर्गेति**। कस्माद् देवा मानुष्यं प्रार्थयन्त इत्यतो वाह स्वर्गेति। धामनि धाम्नि गृहे। लोकं शरीरम्॥ २३ ॥

कथमनर्थधामत्वं वित्तस्येत्याशंक्य योग्येभ्योऽप्रदानेनाधःपातहेतुत्वादित्याह **देवेति**। भागिनः अंशभागयोग्यानुद्दिश्य। आत्मानं पतति पातयति ॥ २४ ॥

वित्तवयोबलैः कुशलसाधनस्य शक्यत्वादधःपातः कथमत्राह **व्यर्थयेति**। व्यर्थयार्थेहया ऐहिकामुष्मिकार्थे प्रमत्तस्य यस्य वित्तादीनि कुशलाय न सिध्यन्ति साधनानि न भवन्ति स जरठः जरसं गतः किं नु साधयेत्। न किमपि ॥ २५ ॥

निगमयति **तस्मादिति**। अविद्वान्। संक्लेशे कारणमनुमिनोति **कस्यचिदिति**। चिच्छब्द एवार्थे। अथ कस्य परमानन्दरूपस्य हरेर्माययैव सामर्थ्यनैव विषयसुखे विमोहित इति तर्कयामि। कस्यचित् लोकविलक्षणस्येति वा ॥ २६ ॥ एवं तर्कयतस्तस्य परमात्मप्रसादायत्तं वैराग्यस्थैर्यं वक्ति किं **धनैरिति**। मृत्युना कालेन ॥ २७ ॥

नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ।
येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥ २८ ॥

सोहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः ।
अप्रमत्तोऽखिलार्थेषु यदि स्यां सिद्ध आत्मनि ॥ २९ ॥

तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः ।
मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥

श्रीभगवानुवाच -

इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ।
उन्मुच्य हृदयग्रन्थिं शान्तो भिक्षुरभून्मुनिः ॥ ३१ ॥

स चचार महीमेतां संयतात्मेन्द्रियानलः ।
भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ॥ ३२ ॥

तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ।
दृष्ट्वा पर्यभवन् भद्र बह्वीभिः परिभूतिभिः ॥ ३३ ॥

केचित् त्रिवेणुं जगृहुरेके पात्रं कमण्डलम् ।
पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ ३४ ॥

प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ।
अन्नं च भैक्षसम्पन्नं भुञ्जानस्य सरित्तटे ॥ ३५ ॥

---

अत्र हेतुमाह **येनेति**। एतां दशां विरक्तिलक्षणां नीत इति येन तेन हेतुना, येन हरिणा प्रसन्नेनेति वा। कीदृशो निर्वेद इति तत्राह **निर्वेद इति**। आत्मनः संसारनदीतरणप्लवः तरीरूप इति ॥ २८ ॥

निर्वेदस्य किं लक्षणमित्यतः सन्न्यास इति तन्निश्चयं वक्ति **सोहमिति**। शोषेण किं साध्यमत्राह **यदीति**। यदि येन शोषणेन सन्न्यासलक्षणेन निर्वेदसाध्येन तपसा आत्मनि परमात्मविषये सिद्धः ज्ञानी स्यां तादृशमङ्गशोषणं करिष्यामीत्यर्थः ॥ २९ ॥

नेदं दम्भवचनमित्याह **तत्रेति**। अल्पेन किं साध्यमिति न मन्तव्यमित्याह **मुहूर्तेनेति** ॥ ३० ॥

मूत्रयन्ति च पापिष्ठा निष्ठीवन्त्यस्य मूर्धनि।
यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत्॥ ३६॥

तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः।
बध्नन्ति रज्ज्वा तं केचिद् बध्यतां बध्यतामिति॥ ३७॥

क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः।
क्षीणवृत्त इमां वृत्तिमगृहीत् स्वजनोज्झितः॥ ३८॥

अहो एष महासारो धृतिमान् गिरिराडिव।
मौनेन साधयत्यर्थं बकवद् दृढनिश्चयः॥ ३९॥

इत्येके विहसन्त्येनमेके दौर्वादयन्ति च।
तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम्॥ ४०॥

एवं स भौतिकं दुःखं दैविकं दैहिकं च यत्।
भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत॥ ४१॥

परिभूत इमां गाथामगायत नराधमैः।
पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीम्॥ ४२॥

**भिक्षुरुवाच -**

नायं जनो मे सखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः।
मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद् यत्॥ ४३॥

---

विरज्यानेन किमकारीत्यत्राह **इतीति**। हृदयग्रन्थिं मनोबन्धम्॥ ३१॥ अलक्षितः अज्ञातः॥ ३२॥ त्रिवेणुं दण्डम्। चीराणि जीर्णवस्त्राणि॥ ३३-३४॥ दर्शितानि प्रदाय पुनराददुः॥ ३५॥ वाचयन्ति वादयन्ति॥ ३६॥

दौर्वदयन्ति दुर्वचनं कारयन्ति॥ ३७-४०॥ किमकरोदेवं परिभूत इति तत्राह **परिभूत इति**। सात्त्विकीं स्वाभाविकीम्॥ ४१-४२॥

कीदृशीं गाथामगायतेति तत्राह **नायमिति**। अयं जनः परितो वर्तमानः। तर्हि किं देवादय इति

**मनो गुणान् वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ।**
**शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णा गतयो भवन्ति ।।४४।।**

**अनीह आत्मा मनसः समीहितं हिरण्मयो मत्सख उद्विचष्टे ।**
**मनः स्वलिङ्गं परिगृह्य कामान् जुषन् निबद्धो गुणसंगतोऽसौ ।। ४५ ।।**

---

तत्राह न **देवतेति** । देवता देवाः । आत्मा देहः । ग्रहा आदित्यादयः । तर्हि किं कारणमत्राह **मन इति** । यत् संसारचक्रं परिवर्तयेत् तन्मनः परं कारणमामनन्तीत्यन्वयः ।। ४३ ।।

मनसः कारणत्वं विवृणोति **मन इति** ।प्राकृतं लिङ्गशरीरूपं प्रलये सूक्ष्मरूपेण स्थितं मनः सृष्टिकाले आत्मनि गुणान् सृजते वै । सात्विकादिभेदेन त्रिविधं बाह्यावयवोपचितं भवतीत्यर्थः । अत एव बलीयः कार्यकारणसमर्थम् ततः तस्माच्च मनसः सात्विकादिभदेन त्रिविधानि विलक्षणानि कर्माणि भवन्ति। विलक्षणानीत्यक्तं विवृणोति **शुक्लानीति**। तेभ्यः कर्मभ्यः सवर्णाः शुक्लादिवर्णयोग्या गतयो भवन्ति। अनेन सर्वस्य सुखादीनां परं कारणं मन इत्यवगतम् ।। ४४ ।।

ननु मनसः परमकारणत्वं विवक्षितं चेत् परमात्मनः कारणत्वमपहस्तितं स्यादिति तत्राह **अनीह इति**। आत्मा परमात्मा मनसः समीहितं संसारावृत्तिहेतुभूतं कर्म उद्विचष्टे उत्कृष्टसाक्षित्वेन पश्यति। कीदृशः। अनीहः अक्लिष्टकारी मनोवत् क्लिष्टकारी न भवतीति। अनेन हरेः प्रशस्तकर्तृत्वं ज्ञायते। साक्षित्वेन देहान्तर्वर्तमानस्य दुःखादिकं स्यादित्यत उक्तं **हिरण्यम इति** । पूर्णस्वरूपानन्दः । स्वस्य दुःखाभावे हेतुमाह **मत्सख इति**। पूर्णानन्दो हरिर्मत्सखेति यस्मात् तस्मात्। परेषां दुःखकारणं मन इति भावः[१] । अचेतनत्वेन स्वतः प्रवृत्त्यनुपपन्नस्य मनसः कारणत्वं कथमत्राह **मन इति** । असौ निबद्धो देहाभिमानी जीवः स्वलिङ्गं लिङ्गशरीररूपं मनः परिगृह्य गुणसङ्गतः विषयस्नेहतः कामान् विषयान् जुषन्नास्त इति । विषयानुक्तचेतनानुगृहीतस्य अचेतनस्यापि मनसः कारणत्वं युक्तमिति भावः । न ह्यमनाः पुमांस्तिष्ठतीति श्रुतेः । मनसः संसारकारणत्वमुक्तम्, तत्र किं प्रमाणमित्यतो वाह **अनीह इति**। परमात्मनो दर्शनं प्रेरणं च प्रमाणम् ।। ४५ ।।

---

१. अस्पष्टमिदं वाक्यम्। परेषां दुःखकारणं न ममेति भाव इति पाठः स्यात्।

**दानं स्वधर्मो नियमो यमश्च श्रुतानि कर्माणि च सद्व्रतानि ।**
**सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥ ४६ ॥**

**समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम् ।**
**असंयतं यस्य मनो विनश्येद् दानादिभिश्चेदपरं किमेभिः ॥ ४७ ॥**

**मनोवशेऽन्ये हि भवन्ति देवा मनश्च नान्यस्य वशं समेति ।**
**भीमो हि देवः सहसः सहीयान् नात्याविशत् तत् स हि देवदेवः ॥ ४८ ॥**

**तं दुर्जयं शुत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् ।**
**कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्रैरुदासीनरिपुं विमूढाः ॥ ४९ ॥**

---

एवंविधसंसारनिवृत्तौ क उपाय इत्यतस्तस्य मनसो निग्रह एवेत्याह **दानमिति** । मनोनिग्रह-लक्षणान्ताः मनोवशीकरणस्वरूपनिर्णयाः । कुत इत्यत्राह **पर इति** ॥ ४६ ॥

मनःसमाधानस्य परमयोगत्वमुपपादयति **समाहितमिति** । यस्य मनः समाहितं परमात्मध्यानयोगयुक्तं तस्य दानादिभिः किं कृत्यं वद । यस्य मनो दानादिभिरसंयतं नश्येदेभिर्दानादिभिरपरं साध्यं किम् । न किमपि ॥ ४७ ॥

ननु तर्हि मनःसंयमनं कर्तव्यं तत्राशक्यं किमित्याशंक्यास्वतन्त्रत्वान्न शक्यमिति[१] भावेनाह **मन इति** । ब्रह्मश्रीविष्णुभ्योऽन्ये देवा मनोवशे भवन्ति । तत्र गुणभूतस्य मनसः पुरुषबन्धकत्वप्रकारः कथमित्यतो वाह **मन इति** । हिशब्देन ''ऋते द्वे ब्रह्मणी कस्य मनो याति वशे क्वचित् । श्रियं सरस्वतीं चापि याति वा तत्प्रसादतः'' इति वाक्यं प्रमाणयति । विष्ण्वादींश्चतुरो विनाऽन्यस्य वशं न याति । कुतोऽत्राह **भीम इति** । सहसः सहनशक्तिमतः सहीयान् अतिशयितसहनशक्तिमान् । भीमो रुद्रस्तन्मन इति विद्वन्मतम् । ततः किमत्राह **नेति** । विष्ण्वादीन् विनाऽन्यः कश्चित् तन्मनो नात्याविशत् । नातिक्रान्तवान् । तत्र हेतुः स हि **देवदेव इति** । स भीमो देवस्य सात्विकमनसो देवः अभिमानी यस्मात् तस्मात् ॥ ४८ ॥

रुद्रेणाभिमन्यमानं वैकारिकमपि मनो द्विविधं सात्विकं तामसमिति । प्रथमं विष्ण्वादिदेवताप्रसादेन जय्यं द्वितीयं विष्णुप्रसादं विना दुर्जयम् । विष्णुवध्यकालनेमिनाऽभिमतत्वात् । अतो मित्रैर्मर्त्यैः

---

१. स्वतन्त्रत्वान्न शक्यमिति पाठान्तरम् ।जीवस्यास्वतन्तत्रत्वान्न शक्यमिति रुद्रस्य जीवापेक्षया स्वतन्त्रत्वान्न शक्यमित्यभुयथापि कथंचिद् योजनीयम् ।

**देहं मनोमात्रमिदं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ।**
**एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ।। ५० ।।**

**जनोऽस्य हेतुः सुखदुःखयोश्चेत् किमात्मनश्चात्र हि भौमयोस्तत् ।**
**जिह्वां क्वचित् सन्दशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ।। ५१ ।।**

---

सह निग्रहोऽसतां भवतीत्याशयेनाह **तमिति**। अयमक्षरार्थः । अत्र जीवराशौ केचिद् विमूढास्तामसाः पूर्वापरादिदिगनभिज्ञाः तत् तयोर्मनसोस्तामसमनोलक्षणं शत्रुं सुखविरोधिनं नविजित्य मित्रैर्मर्त्यैरसद्विग्रहं कुर्वन्ति । कीदृशं शत्रुम् । दुर्जयम्, दुष्टेन पापिना कालनेमिना जितत्वाद् वशीकृतत्वात् जेतुमशक्यत्वात् । अत एवासह्यवेगवायुवन्मुष्टिग्रहणायोग्यम् । अरुन्तुदं क्षतनिहितलवणवद् दुःख-करम् । अनेन शत्रुशब्दोपि विवृतः । विष्णुप्रसादेन जय्य इत्याह **उदासीनेति** । विष्णु-भक्तावुदासीनानां रिपुं न तु भक्त्या तदुपास्तौ यतमानानामित्यर्थः । प्रस्तुतं सात्विकं मनो विहाय तामसमनःपरामर्शः कथं युज्यत इतीयमाशङ्का ''एकस्थानाधिपत्ये तु भिन्नानामपि युज्यते । अभेदेन परामर्शः सादृश्ये चापि वस्तुनोः '' इत्यनेन परिहर्तव्या ।यद्वा तन्मनः तं मनोभिमानिनं कालनेमिनं नविजित्य मित्रैरसद्विग्रहं कुर्वन्ति । कीदृशं तं शत्रुम् । अनेन शत्रुमजित्वा मित्रकलहो बालकलहवत् परिहासहेतुरित्युक्तं भवति ।। ४९ ।।

दुष्टाभिमानबलोपचितशक्तितामसमनोनिर्मितदेहाभिमानमात्रेणैवोत्पन्नमिथ्याज्ञानेन[१] जीवस्य नित्यनिरयप्राप्तिहेतुत्वात् स एव जेतव्य इति भावेनाह **देहमिति** । इदमित्यव्ययम् । मनोमात्रं मनसा निर्माणमुपगतं देहं गृहीत्वा ममेदमहमिति स्वातन्त्र्यभ्रमेण, एष देहोऽहमित्यनात्मन आत्मभ्रमेण, अन्योऽहं देहोऽयमित्यपि भ्रमेण, अहमन्य इत्यात्मनोऽनात्मभ्रमेण मिथ्याज्ञानेनान्धधियः अस्तंगतयथार्थज्ञाना मनुष्याः दुरन्तपारे तमसि पतित्वा भ्रमन्ति पुनःपुनः दुःखसमुद्र एव मग्ना वर्तन्त इत्यतो बुद्धिमता तज्जय एव प्रयतिव्यमिति भावः । ''देहमात्रं स्वमात्मानं यः परं च प्रपश्यति । अन्धे तमसि मग्नस्य नोत्थानं तस्य कुत्रचित्'' इति वचनान्मिथ्याज्ञानिनामन्धन्तमो नियतमिति ज्ञायते ।। ५० ।।

एवं मनसः सुखदुःखकारणत्वमुक्तम् । तत्र तर्हि तस्य प्रतीयमानं सुखदुःखकारणत्वमभिमान-निमित्तमेवेति जानता स्वकृतं भुञ्जानेन पुरुषेण सोढव्यं तत्र कोपो न कार्य इत्याह **जन इत्यादि-ग्रन्थेन** । अस्य जीवस्य सुखदुःखयोर्हेतुः जनः परदेहश्चेत् यदि तर्हि अत्र देहे वर्तमानस्य

---

१. मिथ्याज्ञानस्येति यावत् । मिथ्याज्ञानस्य नित्यनिरयप्राप्तिहेतुत्वात् स एव तामसमनोभिमान्येव जेतव्य इति ।

**दुःखस्य हेतुर्यदि देवताऽस्तु किमात्मनस्तत्र विकारयोस्तत्।**
**यदङ्गमङ्गेन विहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥**

**आत्मा यदि स्यात् सुखदुःखहेतुः किमन्यतस्तत्र निजः स्वभावः।**
**न ह्यात्मनोऽन्यद् यदि तन्मृषा स्याद् क्रुध्येत कस्मै न सुखं न दुःखम् ॥५३ ॥**

---

देहव्यतिरिक्तस्यात्मनो निर्मुक्तकपालनारिकेलवत् स्थितस्य किं स्यात्। न किमपि दुःखं स्यात्। तर्हि कस्य तदत्राह **हीति**। तद् दुःखं विवेकेन विचारिते सति भौमयोः पृथिवीकार्ययोस्ताड्यताडकयोरेव हि यस्मात् तस्मात् तदात्मनोऽभिमानकृतं दुःखमिति जानन् एषां मध्ये कतमाय कुप्येदित्यन्वयः। तत्रोदाहरणं **जिह्वामिति**। स्वदद्भिः स्वदन्तैः। तस्यां जिह्वायां वेदनायां सत्यां। अनेन देहस्याचेतनत्वेनाभिमानजन्यं दुःखमित्युक्तम् भवति। '' जनशब्दः स्वतो जीवे क्वचिद् देहे च वर्तते '' इति वचनाज्जनशब्दोऽत्र देहवाची ॥ ५१ ॥

देहस्याचेतनत्वेन दुःखहेतुप्रवृत्त्ययोगादभिमानस्य च पराधीनत्वेनायुक्तमुक्तम् किन्तु देवतायाः सर्वस्मात् प्रधान्येन तद्धेतुत्वमुचितमित्यत्राह **दुःखस्येति**। यदि दुःखस्य हेतुर्देवतेत्युच्यते तद्वचनमस्तु। विचारिते (सति) न घटते। तथा हि। विकारयोः विकाराभिमानिदेवयोः सकाशादुत्पद्यमानं तद् दुःखमभिमाननिमित्तमेव। तत्र निरभिमानस्यात्मनः तेन किं स्यात्। अतः स्वामिदेवान् प्रति कोपो न कार्य इति भावः। तत्रोदाहरणं **यदङ्गमिति**। यदा स्वदेहे विकाराभिमानीन्द्रादिदेवताभिमन्यमानहस्ताद्यङ्गेन चक्षुराद्यङ्गं क्वचिद् विहन्यते तदा तत् सोढव्यमेव। अन्यथा पुरुषः कस्मै क्रुध्येत। हस्तादेरकारणत्वादयोग्यक्रोधादेर्मन एव कारणमत्रेति। ''अविकाराश्च ते देवा विकारा इति शब्दिताः। अभिमानाद् विकारस्य स्वयं शक्ता अपि ध्रुवम् '' इति वाक्याद् विकारशब्दवाच्यत्वं युक्तं देवानाम् ॥ ५२॥

मनसोऽपि सुखादिहेतुत्वमभिमानमन्तरेण विचारासहमित्याह **आत्मेति**। यदि आत्मा मनो दुःखादिकारणं स्यदिति मतं तत्र पृच्छामः। दुःखादिकारणं भवन्मनः स्वतो वा परतो वेति। नाद्य इत्याह **किमन्यत इति**। अन्यतो दुःखस्वभावत्वेन विलक्षणान्मनसस्तत्र सुखस्वभावे आत्मनि चेतने किं भवति न किमपि। उभयोः सुखादिस्वभावः सिद्ध इत्याह **निज इति**। चेतनस्य सुखस्वभावो मनसो दुःखस्वभावो निजो नित्यः सदातन इत्यर्थः। निजमात्मीयनित्ययोरिति यादवः। द्वितीयं प्रत्याह **न हीति**। आत्मनोऽन्यद् दुःखकारणं न हि। अहं दुःखीति दुःखं दृश्यते यदि तत्रापि तन्मृषा स्यात् शुक्तिरजतवत्। अन्यस्यान्यात्मत्वं न दृष्टचरमित्याह **न सुखमिति**। सुखं सुखरूपं

**ग्रहा निमित्तं सुखदुःखयोश्चेत् किमात्मनोऽजस्य जनस्य ते वै।**
**ग्रहैर्ग्रहस्यैव भवन्ति पीडाः क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥**

---

दुःखं दुःखरूपं न भवति, दुःखरूपं सुखरूपं न भवतीति। अतोऽभिमानं विनाऽन्यन्निरूपण-मप्रामाणिकमिति विद्वान् कस्मै क्रुध्येतेत्यन्वयः। ''जीवस्य सुखरूपस्य न दुःखं क्वचिदिष्यते। अतो मनोभिमानेन दुःखी भवति नान्यथा'' इति वाक्यमत्र मानम्। यद्वा यदि मनः सुखादिहेतुस्तर्हि तत् स्यादित्युक्तं हि। मनोभिमाननिमित्तं तद् दुःखं विना तत्र सुखस्वभावे आत्मन्यन्यतो मनसो दुःखं स्यात् किम्। न स्यादेव। कुतोऽत्राह **निज इति**। मनोधर्मो दुःखमात्मनो निजस्वभावो न हि। कुतः। तदात्मनोऽन्यद्धि। प्रतीयमानस्य का गातिरत्राह **यदीति**। जपाकुसुमसान्निध्याच्छङ्खस्य लौहित्यमिव मृषा स्यात्। अतोऽन्यस्यान्यत्वं नेत्याह **न सुखमिति**। ''जीवस्य सुखरूपस्य न दुःखं क्वचिदिष्यते'' इत्यादेरभिमाननिमित्तं दुःखं मन एव दर्शयतीत्यङ्गीकार्यम् ॥ ५३ ॥

देहस्य दुःखादिहेतुत्वे बाधकमाह **ग्रहा इति**। गृह्यमाणत्वाद् ग्रहा देहा आत्मनो दुःखादेर्निमित्तं चेदविवेकदशायामस्तु। अजस्य स्वतो जन्मादिरहितस्य न ममेति विवेकिनो जीवस्य ते देहा दुःखादेर्निमित्तं स्युः किम्। नैव स्युः। अतो ग्रहैर्देहैः पीडा देहनिमित्तपीडाः ग्रहस्य विषयग्रहणरूपस्य मनस एव भवन्ति। मनोभिमाने सत्येव ते स्युरित्यर्थः। ततो देहादन्यः पुरुषः पुरु ब्रह्म सरतीति ब्रह्मज्ञानी कस्मै क्रुध्येतेत्यन्वयः[1] ॥ ५४ ॥

---

१. अत्रादित्यादिग्रहाणां दुःखादिहेतुत्वं निरस्यत इति सरलमिति भाति। देहस्य दुःखादिहेतुत्वस्य ''जनोऽस्य हेतुः'' इति पूर्वश्लोकेनैव निरस्तत्वात्। परं सर्वेष्वपि कोशेषु देहस्य दुःखादिहेतुत्वे बाधकमाहेत्येवातारिका दृश्यते। लिपिकृतां प्रमादः स्यात्।
षष्ठ्येकवचनान्तस्य ग्रहपदस्य कर्मव्युत्पत्त्या देहपरत्वं करणव्युत्पत्त्या मनःपरत्वं च, बहुवचनान्तस्य तु ग्रहपदस्यादित्यादिनवग्रहपरत्वमिति वंशपल्ली श्रीनिवासतीर्थानां पन्थाः। तथा हि तद्व्याख्यानम्। ''ग्रहणामुक्तं दुःखहेतुत्वाभावमुपपादयति ग्रहा इति। आदित्यादिनवग्रहाः सुखदुःखयोर्निर्मित्तमिति चेत् तथाप्यजस्योत्पत्तिशून्यस्यात्मनो मत्स्वरूपस्य किं कुर्युः ? कुतः। यतो नवग्रहा जनस्य स्वस्वदशायां जनिमत एव पुंसः स्वकार्याणि कुर्युरिति वै ज्योतिश्शास्त्रप्रसिद्धम्। जनोऽस्य हेतुरित्युक्तमेव विशदयति ग्रहैरिति। ग्रहैः पीडाः ग्रहस्य गृह्यत इति व्युत्पत्त्या देहस्यैव जनिमतो भवन्ति। अतस्ततोऽन्यः पीडायुक्तदेहाद् भिन्नः पुरुषः कस्मै क्रुध्येत। देहभिन्नपुरुषस्यापि पीडा ग्रहस्य गृह्यतेऽनेनेति करणव्युत्पत्त्या ग्रहणरूपस्य मनसः सत एव मनोभिमाने सत्येव भवन्ति। अहं तु निर्मुक्ताभिमान इति न मम ग्रहनिमित्तपीडेति भावः'' इति।
ताम्रपर्णी आनन्दतीर्थाचार्यास्तु ग्रहास्त्वितिश्लोके नवग्रहाणां दुःखादिहेतुत्वं न निरस्यते तथासति ''दुःखस्य हेतुर्यदि देवताऽस्तु'' इत्यनेन पूर्वश्लोकेन पौनरुक्त्यात्, किन्तु परदेहादेर्दुःखादिहेतुत्वं निरस्यते, ''जनोऽस्य हेतुः'' इत्यत्र तु स्वदेहस्य दुःखादिहेतुत्वं निरस्तमिति न पौनरुक्त्यमित्याहुः।

**कर्मास्तु हेतुः सुखदुःखयोर्वै किमात्मनस्तद् हि जडेऽजडत्वे ।**
**देहे स्ववित् पुरुषोयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम् ॥ ५५ ॥**

**कालोऽस्तु हेतुः सुखदुःखयोश्चेत् किमात्मनस्तत्र तदात्मनोऽसौ ।**
**नाग्नेर्हि तापो न हिमस्य तत् स्यात् क्रुध्येत कस्मै न परस्य बोद्धुः ॥ ५६ ॥**

**न केनचित् क्वापि कथञ्चनास्य द्वन्दोपरागः परतः परस्य ।**
**यथाऽत्मनः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥**

---

कर्म तावत् सुखदुःखहेतुरस्तु । तथाप्यात्मनो जीवस्याजडत्वे सत्यतोऽनेनानिष्टं स्यात् किमिति शेषः । तर्हि कस्येदमत्राह **तद् हीति** । तद् दुःखादिकं जडे जडात्मके मनसि हि यस्मात् । ततः किमत्राह **देह इति** । देहे वर्तमानोऽयं स्वं स्वतन्त्रं परमात्मानं स्वस्य स्वरूपं च वेत्तीति स्ववित् सुपर्णः सुखात्मकः पुरुषः कस्मै क्रुध्येत । कर्मणे कुप्यतीत्यत्राह **नहीति** । जडात्मक-मनआद्यभिमाननिमित्तदुःखादिकं कर्ममूलं न हि यस्मात् (तस्मात्) कर्मणेपि न कुप्येत । यद्वा कर्ममूलमनआदेरभिमाननिमित्तं दुःखादि स्वतस्तस्य नास्तीति ॥ ५५ ॥

यदि दुःखादेर्हेतुः कालोऽस्तीति मतं तर्हि नित्यसुखरूपस्य विवेकिनः आत्मनः किमनिष्टम् तद्बलादात्मनो दुःखादिलक्षणमनिष्टं प्राप्तमत्राह **तत्रेति** । तत्र तथासति असौ दुःखादिः तदात्मनः कालाधीनदेहस्येति प्राप्तम् । आत्मनो नित्यत्वेन कालानधीत्वाद् देहस्य तद्दर्शनाच्च । तच्च न युक्तं देहस्य जडत्वात् । तत् सोदाहरणमाह **नाग्नेरिति** । लुप्तोपममेतत् । यथाऽग्नेस्तापनिमित्तं दुःखं यथा च हिमस्य तद् हिमनिमित्तं दुःखं न जडत्वात्, एवं देहस्यापि कालादिसंबन्धे विद्यमानेपि न दुःखं युक्तम् । ननु तर्हि तदन्तर्वर्तिनो हरेस्तद् दुःखं स्यादत्राह न परस्येति । परस्य प्रकृतिविलक्षणस्य बोद्धुः सर्वज्ञस्य हरेस्तद्दुःखं न युज्यते । तस्माज्जीवस्य मनोऽभिमानमात्रं दुःखकारणमतः कस्मै क्रुध्येतेति । ''सदा कालादिसम्बन्धाद् दुःखं देहस्य युज्यते । तथापि नैव दुःखी स जडत्वान्नियमेन तु । आत्मनः सुखरूपत्वान्न दुःखं युज्यते क्वचित् । तस्मान्मनोभ्रमेणैव दुःखी जीवो न चान्यथा । सर्वेषां मनसो नेता मनोरूपस्त्रिलोचनः । तद्वशाः सर्वदेवाश्च तेनैव सुखदुःखिनः । नियन्ता तस्य च प्राणस्ततोपि बलवत्तरः । तन्नियन्ता हरिः साक्षात् परमानन्दलक्षणः'' इति वाक्यमुक्तार्थे प्रमाणम् ॥ ५६ ॥

न परस्येत्येतद् विवृणोति **न केनचिदिति** । यथा संसृतिरूपिणः संसारकारणस्वभाववतः आत्मनो

एतां समास्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ।
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥

श्रीभगवानुवाच -
निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ।
निराकृतोऽसाद्भिरपि स्वधर्मादकम्पितोऽसौ मुनिराह गाथम् ॥ ५९ ॥

सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः ।
मित्रोदासीनरिपवः संसारः स्वमनस्ततः ॥ ६० ॥

तस्मात् सर्वात्मना तात निगृहाण मनो धिया ।
मय्यावेशितया युक्त एतावान् योगसङ्ग्रहः ॥ ६१ ॥

य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ।
धारयन् श्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥

॥ इति त्रयोविंशोऽध्यायः ॥

---

मनसः यथा द्वन्दोपरागः द्वन्दाख्यराहुग्रहणं तथा अस्य परतः परस्य हरेः द्वन्दोपरागो न स्यात् । इदमेव श्रद्धेयमिति भावेनाह **एवमिति** । एवं प्रबुद्धः एवविधज्ञानी एवंविधैरज्ञानिभूतैः खलैः कृतादुपद्रवान्न बिभेति ॥ ५७ ॥

एवं विरक्तिर्भगवदङ्घ्रिभक्तिद्वारा संसारनिर्मोकहेतुरित्याह **एतामिति** । मुकुन्दाङ्घ्रिनिषेवयैव एतां परात्मनिष्ठां मनःसंयमलक्षणव्यवस्थां समास्थाय स्थिरीकृत्य, परात्मज्ञानलक्षणां वा प्राप्य । अत्र प्रमाणमाह **अध्यासितामिति** । सम्यगनुष्ठिताम् । तमः अज्ञाननिमित्तं संसारम् ॥ ५८ ॥

श्रद्धेयेयं गाथेति भावेनाह **निर्विद्येति** ॥ ५९ ॥ गाथायास्तात्पर्यार्थमाह **सुखेति** । आत्मनि मनसि रूढो विविधभ्रम एव सुखदुःखप्रदः, अन्यो नैव ततो मित्रोदासीनरिपुलक्षणश्च संसारः स्वमनः स्वमनोहेतुकः ॥ ६० ॥ मनोनिग्रहयोगमाह **तस्मादिति** । एतावान् मनःसंयमलक्षणः ॥ ६१ ॥ फलमाह **य इति** ब्रह्मनिष्ठां ब्रह्मोत्कर्षज्ञानपूर्वकमनोनिग्रहलक्षणाम् ॥ ६२ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य त्रयोविंशोऽध्यायः ॥**

॥ अथ चतुर्विंशोऽध्यायः ॥

**श्रीभगवानुवाच -**

**अथ ते सम्प्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ।**
**यद् विज्ञाय पुमान् सद्यो जह्याद् वैकल्पिकं मलम् ॥ १ ॥**

**आसीज्ज्ञानमथो ह्यर्थश्चैकमेवाविकल्पितम् ।**
**यदा विवेकनिपुणा आदौ कृतयुगे जनाः ॥ २ ॥**

**तन्मया फलरूपेण केवलेन विकल्पितम् ।**
**वाङ्मनोगोचरं सत्यं द्विधा समभवद् बृहत् ॥ ३ ॥**

---

सृष्ट्यादियाथार्थ्यज्ञानं मिथ्याज्ञाननिवर्तकमिति कथयत्यस्मिन्नध्याये। तत्र व्यर्थोपि नैवोपरमेतेत्युक्त विकल्पनिवर्तकोपायः क इत्युद्धवस्य हार्दशङ्कां परिहर्तुकाम आह **अथेति** । सांख्यं यथार्थज्ञानम् । पूर्वैः पुरातनैः । विकल्पनिवर्तकत्वेन निश्चितम् ॥ १ ॥

ननु विकल्पे सति तद्धानाय सांख्यवचनप्रतिज्ञानं संगच्छते, स एव न संभवति । तथाहि । किमुत्पुत्तिप्रभृति सांख्यं विकल्पितमुतान्तराले । नाद्यः । स्वभावस्य निवृत्त्यनुपपत्तेरिति तत्राह **आसीदिति**। अथो आरम्भे सृष्टिसमये ज्ञानमर्थश्चैकमेव यथैवार्थो विषयस्तथैव ज्ञानं विषयमनतिक्रम्य वर्तमानमासीत् । किमनेनोक्तं भवतीत्यत्राह **अकल्पितमिति** । संशयविपर्ययाविषयत्वमुक्तं भवति । कस्मिन् काल इदमुत्पन्नमत्राह **कृतयुग इति** । तत्रापि कदेत्यत उक्तम् **आदाविति** । संशयाद्यन्यथाभावः कस्मान्नाभूदिति तत्राह **यदेति**। कृतयुगमारभ्य त्रेतायुगपर्यन्तं जना विवेकनिपुणा इति यदा यस्मात्, तस्मादिति शेषः । पुरुषबुद्धिदौर्बल्यनिमित्तं ज्ञानस्यान्यथात्वं सात्त्विकत्वेन तदानीन्तनानां तदभावादेकप्रकारमेव ज्ञानमिति भावः । अथाथोऽनन्तराप्यर्थे विकल्पारम्भमङ्गल इति यादवः । ''यथैवार्थस्तथा ज्ञानं ज्ञानार्थैक्यमुदाहृतम् । तथा कृतयुगे प्रायस्तदन्येषु तु कुत्रचित्'' इति वाक्येन विज्ञानवादिमतमत्रोच्यत इति निरस्तम् ॥ २ ॥

द्वितीये किं कारणमत्राह **तन्मयेति**। तत् सत्यं ज्ञानार्थैक्येन मिथो विरोधराहित्येनाबाधितं ज्ञानं पश्चात् त्रेतायां द्विधा इदमदो वेति संशयमापन्नं समभवत् सञ्जातम् । तद् द्वापरादौ इदमेव नान्यदिति विपरीतप्रत्ययेन सम् अभिन्नमभवदित्यन्वयः । ''समभेदे समीचिने सुष्ठुपूजासुखेषु च'' इति ।

**तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।**
**ज्ञानं त्वन्यतमो भागः पुरुषः सोऽभिधीयते ।। ४ ।।**

---

कालस्वभावयोः सदातनत्वेन सदा विकल्पसम्भवात्, चेतनस्यापि देवदत्ताद्यन्यतमस्याल्पबुद्धित्वेनानन्तवेदादिशब्दराश्यर्थस्यावगाढुमशक्यत्वेन कारणत्वानुपपत्तेस्तत्तद्योग्यफलदानसमर्थेन वैषम्यादिदोषविधुरेण सर्वज्ञेन कारणेन भाव्यमिति भावेनाह **मयेति** । फलं रूपयति हितं कारयतीति फलरूपः । तेन तामसादिजीवानां स्वस्वयोग्यतमआदिफलदात्रेत्यर्थः । केवलेन मया तथास्त्विति विकल्पितं तामसादिबुद्धिमनुसृत्य नानेव कल्पितम् । अनन्तशब्दराशिगोचरस्य बृहत्तरस्य दुर्ज्ञेयत्वेनाश्रद्धेयत्वं नेति भावेनोक्तम् **वागिति** । शब्दो वाग्गोचरः, अर्थोमनो गोचरस्ताभ्यामुत्पाद्यमानत्वेन च कल्पितमिति शेषः । यद्वा तच्छब्दार्थात्मकमुयं बृहत्तरमिति यस्मात् तस्माद् वाङ्मनसयोरगोचरत्वाच्च द्विधाऽभूदिति ।। ३ ।।

सम्यग् विषयविषयीकरणमन्तरेण ज्ञानार्थैक्यमत्र नोच्यत इति भावेन ज्ञानर्थाभिमानिदेवतास्वरूपं तावदाह **तयोरिति** । तयोर्ज्ञानार्थयोरेकतरो योऽर्थो विषयलक्षणः स प्रकृतिः गायत्रीनाम्न्या प्रकृत्याऽभिमन्यमान इत्यर्थः। सापि न स्वतन्त्रेत्याह **सेति** । प्रकृतिरुभयोः लक्ष्मीविष्णुसंज्ञयोरावयोः आत्मा देहः प्रयत्नश्च यस्याः सा तथा । मया श्रिया च सृष्टाऽनुग्राह्या चेत्यर्थः । अन्यतमो भागो ज्ञानं यत् सोपि पुरुषः पुरुषनाम्ना ब्रह्मणाऽभिमन्यमानमित्यर्थः । सोप्युभयात्मक इत्यनुसन्धेयम् । मया श्रिया च सृष्टोऽनुग्राह्यश्चेति । इत्यभिधीयते ।''ज्ञानाभिमानी पुरुषः स ब्रह्मा समुदाहृतः । अर्थाभिमानी प्रकृति गायत्री सा प्रकीर्तिता । तयोर्नियामको विष्णुः श्रीश्चानुग्राहिका स्मृता । वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत । त्रिगुणात्मा समुद्दिष्टः प्रायः सत्वात्मकस्तथा । गायत्री चैव सावित्री तथैव च सरस्वती । एवं त्रिरूपा प्रकृतिरेका सत्वादिभेदतः । तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमागतम् ।स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः । तस्यापि सूत्रं भगवान् धारणाद् विष्णुरव्ययः । सूत्रपुत्रस्त्वहंकारः स रुद्रः समुदाहृतः । सूत्रात्मना महांश्चैव सहजातश्चतुर्मुखः।तस्यापि पुत्रोऽहंकारः स चानन्त उदाहृतः । अनन्तादपि रुद्रोऽभूद् ब्रह्मणश्चेति स त्रिधा ।वैकारिको ब्रह्मजस्तु तैजसो वायुजः स्मृतः । तामसोऽनन्तजश्चैव स एको गुणभेदतः'' इति स्मृतिसूचकेन हिशब्देन किमत्र प्रमाणमिति शङ्कां परिहरति ।। ४ ।।

**तमो रजः सत्वमिति प्रकृतेरभवन् गुणाः ।**
**मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन वा ॥ ५ ॥**

**तेभ्यः समभवत् सूत्रं मत्सूत्रेण च संयुतम् ।**
**ततो विकुर्वतो जातो योऽहंकारो विमोहकः ॥ ६ ॥**

**वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।**
**तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥**

---

प्रतिज्ञातसांख्यप्रवचनं विना ज्ञानार्थैक्यादिकथनं केन सङ्गतमित्यतस्तत्स्वरूपं वक्ति **तमो रज इत्यारभ्य एष सांख्य इत्यन्तेन**। "वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत। त्रिगुणात्मा समुदिष्टः प्रायः सत्वात्मकस्तथा" इत्यादि व्याख्यातमपि मन्दमत्युपकाराय किञ्चिद् व्याक्रियते। तथा हि। सृष्ट्यादौ मत्तो गुणत्रयाभिमानिन्यां लक्ष्म्यां पुरुषप्रकृती ब्रह्मगायत्र्याख्ये जाते। वाशब्दश्चार्थे। तदनु मया मक्ष्म्या च पुरुषानुमतेन पुरुषनाम्नो ब्रह्मणः स्वभर्तुः प्रेरणया च प्रक्षोभ्यमाणायास्तस्याः प्रकृतेः तमो रजः सत्वमिति गुणाभिमानीनि त्रीणि रूपाणि गायत्रीसावित्रीसरस्वतीसंज्ञान्यभवन् ॥ ५ ॥

ततः किमभूदत्राह **तेभ्य इति**। अयं भावः। तेषु रूपेषु पुरुषनाम्ना ब्रह्मणा गर्भाधाने कृते सति तेभ्यः पृथक्पृथग्जातं पश्चादेकत्वमापन्नं सूत्रमभवत्। कीदृशम्। मत्सूत्रेण च संयुतं मम सर्वाधारेण रूपेण संयुतं सर्वजगदाधारवायुतत्वमुत्पन्नमित्यर्थः। वायुना वै गौतम सूत्रेणेत्यादिना वायोः सर्वाधारत्वं प्रसिद्धम्। अत्र सूत्रशब्देन महत्तत्वाभिमानिनो वायोः सर्वाधारत्वं प्रसिद्धम्। अत्र सूत्रशब्देन महत्तत्वाभिमानिनो ब्रह्मणो द्वितीयं रूपं चतुर्मुखाख्यं वायुना सहोत्पन्नमिति ज्ञातव्यम्। सूत्रात्मना महांश्चापीति प्रमाणानुगुण्यात्। ततो विकुर्वत इत्यस्यायमर्थः। तस्माद् विकुर्वतः सृष्टिकामात् सूत्रनाम्नो ब्रह्मणः स जज्ञे यो विमोहकोऽहंकारोऽनन्तः। अयमेव सूत्रनाम्नो वायोरपि जज्ञे। विकुर्वतः सूत्रनाम्नो ब्रह्मणो यो विमोहको वैकारिको रुद्रः सोऽपि जज्ञे। पुनश्च विकुर्वतः सूत्रनाम्नो वायोर्विमो-हकस्तैजसरुद्रः स जज्ञे। यो ब्रह्मजोऽनन्तः तस्मादपि विकुर्वतः यो विमोहकोऽहंकारस्तामसः स जज्ञ इति। वैकारिको ब्रह्मजस्तैजसो वायुजस्तामसोऽनन्तज इति रुद्रस्त्रिधा जातः ॥ ६ ॥

एतदेव स्पष्टयति **वैकारिक इति**। त्रैविध्यस्य प्रयोजनमाह **तन्मात्रेति**। तन्मात्रशब्देन पञ्चभूतानि लक्षितानि। श्रोत्रादीन्द्रियाणि। मनःशब्देनेन्द्रियाभिमानिनो देवाश्च। एषां कारणं तामसाद्यहंकारत्रयं

अर्थस्तन्मात्रको जज्ञे तामसादिन्द्रियाणि च ।
तैजसाद् देवता आसन्नेकादश च वैकृतात् ।। ८ ।।

मया संचोदिता भावाः सर्वे संहत्य कारिणः ।
अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ।। ९ ।।

तस्मिन्नहं समभवमण्डे सलिलसंस्थिते ।
मम नाभ्यामभूत् पद्मं विश्वाख्यं तत्र चात्मभूः ।। १० ।।

सोऽसृजत् तपसा युक्तो रजसा मदनुग्रहात् ।
लोकान् सपालान् विश्वात्मा भूर्भवः स्वरिति त्रिधा ।। ११ ।।

देवानामोक आसीत् स्वर्भूतानां च भुवः पदम् ।
मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात् परम् ।। १२ ।।

अधोऽसुराणां नागानां भूमेरोकोऽसृजत् प्रभुः ।
त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ।। १३ ।।

---

त्रिवृत् त्रिविधो रुद्रः । कीदृशः । चिदचिन्मयः वशीकृतचेतनाचेतनप्रपञ्चः । ''चिदचिद् यद्वशे सर्वं स रुद्रश्चिदचिन्मयः'' इति मानम् ।। ७ ।।

उक्तमेव विवृणोति **अर्थ** इति। तामसादहंकारात् तन्मात्रकोऽर्थः पञ्चभूतलक्षणः, तैजसाहंकारादिन्द्रियाणि, वैकृताद् वैकारिकान्मनसा सह तदभिमानिन्य एकादशदेवता आसन् ।। ८ ।।

एवं सृष्टैश्चतुर्विंशतिसंख्यैर्महदादितत्त्वैः किं कृत्यमत्राह **मयेति** ।। ९ ।। आयतनत्वं दर्शयति **तस्मिन्निति** । चिदानन्दशरीरस्तु प्रविष्टोऽण्डे हरिः स्वयम् । तन्नाभेर्भूतदेहोऽभूत् पद्मादपि चतुर्मुखः । चतुर्मुखस्तु सर्वाण्डे व्याप्तदेहो माहातपाः । हरिस्तु सर्वव्याप्तोपि भूतदेहो न तु क्वचित् । नैवास्य प्राकृतो देहः प्रादुर्भावेष्वपि क्वचित्'' । इत्यनेन हरेर्भूतदेहो नास्तीति ज्ञायते । समभवं समीचीनतया व्याप्तोऽभवम्, न तूत्पन्नो भवामीत्यर्थः ।। १० ।।

तपसा ज्ञानेन ।। ११ ।। ओको निवासस्थानम् । त्रितयात् परं महरादिकम् ।। १२ ।। कर्मभेदेन त्रिलोक्याः स्थानभेदमाह **त्रिलोक्यामिति** ।। १३ ।।

**योगस्य तपसश्चैव ज्ञानस्य गतयोऽमलाः।**
**महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥**

**मया कालात्मना धात्रा कर्मयुक्तमिदं जगत्।**
**गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥**

**अणुर्बृहत् कृशः स्थूलो यो यो भावः प्रसिध्यति।**
**सर्वं ह्युभयसंयुक्तं प्रकृत्या पुरुषेण च ॥ १६ ॥**

**यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य तत्।**
**विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥**

---

महर्लोकादिप्राप्तौ किं साधनमत्राह **योगस्येति**। मद्गतिः मत्प्राप्तिः। ''नैव विष्णावभक्तस्य महर्लोकादिका गतिः। भक्त्युद्रेकात् क्रमादूर्ध्वं यावद् विष्णोः प्रवेशनम्। एवं ज्ञानं विना नापि महर्लोकादिका गतिः। ज्ञानोद्रेकात् क्रमादूर्ध्वं यावद् विष्णोः प्रवेशनम्। नित्यशो भगवद्रूपस्यापरोक्ष्येण दर्शनम्। मुहूर्तमपि ज्ञानं स्यान्महाज्ञानं ततोऽधिकम्। ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाद् हरेर्गतिः। सदैवाखण्डितध्यानं तप इत्युच्यते बुधैः। अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया। अपरोक्षदृशा नित्यमेकमात्रायुजा युतम्। योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम्। तच्चतुर्भागया नित्यमपरोक्षदृशा युतम्। पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम्। पादयोगान्महर्लोको जनलोकस्तु योगतः। तपसस्तु तपोलोकः प्राप्यते नान्यथा क्वचित्'' इति स्मार्तवाक्येन महर्लोकादिप्राप्तावपि साधनविशेषाश्चावगन्तव्याः ॥ १४ ॥

भक्तियोगरहितस्य का स्थितिरत्राह **मयेति**। कालात्मना ज्ञानाद्यात्मना धात्रा कारणेन मया प्रेरितकर्मयुक्तमिदं जगद् एतस्मिन् गुणप्रवाहे उन्मज्जति सृष्टं भवति निमज्जति संहृतं भवति ॥ १५ ॥

तमेव प्रेरणप्रकारं विवृणोति **अणुरिति**। अतीतानागतवर्तमानत्वेन यो यो भावः प्रसिध्यति उत्पन्नो वर्तते तत् सर्वमुभयसंयुक्तं मया चित्प्रकृत्या च सरस्वत्या पुरुषेण हिरण्यगर्भेण संयुक्तमस्माभिः प्रविश्य प्रेरितं च। यस्मात् तस्मादद्यापि सर्वं द्वन्द्वीभूय स्थितं दृश्यते ॥ १६ ॥

ननु कार्याणां निमित्तकारणेन भेदः कुलाले दृष्ट इति न तत्र शङ्का, किन्तूपादानकारणेन कथमिति तत्राह **यस्त्विति**। तुः स्याद् भेदेऽवधारण इति वचनात् तुशब्दो विशेषं वक्ति। यस्य महदादिकार्यस्य

**यदुपादाय पूर्वस्तु भावो विकुरुते परम्।**
**आदिरन्तो यतो यस्मिंस्तत् सत्यमभिधीयते ॥ १८ ॥**

**प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः स्मृतः।**
**सतोऽभिव्यञ्जकः कालो ब्रह्म तत् त्रितयं त्वहम् ॥ १९ ॥**

---

यः सत्वादिकारणविशेषः आदिः उपादानकारणं घटस्य मृदिव, अन्तश्च लयस्थानं च यस्मात् तस्मात् तस्य कार्यस्य मध्ये च स वै नान्य इत्यत उपादानकारणेनाभेदः कार्यस्येति निश्चीयते। मृद् घट इति भावानुरक्तप्रत्ययवेद्यत्वात्। व्यवहारार्थः हानोपादानादिव्यवहारविषयो विकारः विविधप्रकार इति एकस्मिन तन्तौ नष्टे नष्टः पट इत्यौपचारिकः, असामानाधिकरण्ये[1] विनष्टतन्तुनैव पटस्य भेदो नान्यैरतो भेदाभेद इति विजानीहि। कथम्। अत्रोदाहरणमाह **यथेति**। यथा लोहमृदाद्युपात्त-घटादिपदार्थाः विनाशिस्वरूपेण भेदवन्तोप्यादावन्ते मध्ये च कारणेनाभिन्ना अनुभूयन्त इति। ''प्रकृतेस्तु विकाराणां कोट्यंशाभेद इष्यते। तथैवैकांशतो भेदः सोऽपि नाभेदवर्जितः। भेदाभेदमतः प्राहुरभेदं वा तयोर्बुधाः इति प्रमाणसिद्धो विशेषः तुना गृह्यते। यद्वा व्यवहारार्थो व्यवहारनिवर्तको विकारो विनाशलक्षणः। तस्य अवयवस्य तेन भेद इति तन्मध्य इति वा[2] ॥ १७ ॥

ब्रह्मणो विकारः प्रपञ्च इति केचित्। तन्मतं प्रत्याह **यदुपादायेति**। यद्वा मुख्यनिमित्तं ब्रह्म इतरकारणेभ्यो व्यावर्तयति **यदिति**। तु शब्दो ब्रह्मणो मुख्यत्वमभिप्रैति। पूर्वो भाव उपादानलक्षणः पदार्थः प्रकृत्यादिः यद् ब्रह्मोपादाय निमित्तकारणतया आदाय यस्य ब्रह्मणः सामर्थ्यमाश्रित्य अपरं कार्यरूपं भावमुद्दिश्य विकुरुते विकारयति च यतो ब्रह्मणो अस्य आदिरन्तश्च यस्मिन् ब्रह्मणि मध्ये चावस्थितिः तद् ब्रह्म सत्यं परमार्थलक्षणं स्वतन्त्रं विकारादिदोषविधुरं च इत्यर्थः। ''पारमार्थिकसत्यत्वं स्वातन्त्र्यमभिधीयते। तद् विष्णोरेव नान्यस्य तदन्येषां सदाऽस्तिता'' इति वचनात् ॥ १८ ॥

इतोऽपि विकारमन्तरेण मुख्यं कारणं ब्रह्मैव प्रकृत्यादीनां सत्तायास्तदधीनत्वादित्याह **प्रकृतिरिति**। सत्वादिगुणरूपा प्रकृतिरस्य जगत उपादानमात्रं परः पुरुषः हिरण्यगर्भ आधारः।

---

१. वियुक्ततन्तोः पटस्य चासामानाधिकरण्ये सति तयोर्भेदः स्पष्ट इति भेदाभेदावेवैष्टव्याविति भावः। क्वचित् समानाधिकरण्ये इति पाठः, तदात्वे अर्थस्तु न स्पष्टः।

२. अस्पष्टमिदं वाक्यम्। सिद्धान्तानुसारेण नेयम्।

**सर्गः प्रवर्तते तावत् पौर्वापर्येण नित्यशः ।**
**महान् गुणविसर्गोऽर्थः स्थित्यन्तो यावदीक्षणम् ॥ २० ॥**

**विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ।**
**पञ्चत्वायाविशेषाय कल्पते भुवनैः सह ॥ २१ ॥**

**अन्ने प्रलीयते मर्त्य अन्नं धानासु लीयते ।**
**धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥**

---

कालोपि रूपान्तरेण हिरण्यगर्भ एव सतो जगतोऽभिव्यञ्जकः निमित्तकारणम् । उपादान-माधारोऽभिव्यञ्जक इति कारणत्रयं ब्रह्म सर्वशक्तिपूर्णोऽहमेव । तेषां तच्छक्तिप्रदोऽहमित्यर्थः । हिशब्देन ''कालाभिमानी ब्रह्मा तु काल इत्यभिशब्दितः । सर्वजीवाभिमानी स परः पुरुष उच्यते । प्रकृतिर्नाम तत्पत्नी प्रकृतेरभिमानिनी । सा प्रसूते जगत् सर्वं सूत्रमारभ्य सर्वशः'' इति (मानं) सूचयति । तुशब्दः प्रकृत्यादिभ्यो ब्रह्मणो महान् विशेषोऽस्तीति सूचयति । तदुक्तम् - ''आधारो व्यञ्जकश्चैव प्रसवीता च केशवः । कालप्रकृतिपुंसां च तन्मूलप्रकृतेरपि । आधारो व्यञ्जकश्चैव सर्वस्यापि नियामकः'' इति ॥ १९ ॥

इतोपि जगतः सृष्ट्यादेर्मुख्यं कारणं ब्रह्मैवेति भावेन सृष्ट्यादेः कालावधिमाह **सर्ग इति** । अयमर्थः । यावत् स्थितिरस्ति तावत् सर्ग उत्पत्तिरपि पौर्वापर्येण प्रवर्तते । यावदीक्षणं यदा लयः स्यादिति हरेः स्मरणं तदा स्थित्यन्तः स्थितेरन्तः प्रलयो भविष्यतीति । गुणानां सकाशात् विसर्ग उत्पत्तिर्यस्य स महान् महत्तत्वमपि स्थित्यन्तः स्थितिसमयमात्रवर्ती प्रलये नास्तीति भावः । अत उत्पत्त्यादिकं भगवत्कर्तृकमित्यर्थः ॥ २० ॥

अधुना क्रमप्राप्तं प्रलयं निरूपयति **विराडिति** । विराडण्डकोशः भुवनैः सह पञ्चत्वाय कल्पते । पञ्चत्वानन्तरमपि अविशेषाय सत्वादिगुणानुद्रेकाय, नाशायेत्यर्थः । ''विशेषेण गुणोद्रेकाद् विशेषः पृथिवी स्मृता'' इति वचनात् अण्डकोशनाशानन्तरं पृथिवीनाशोपि सूच्यतेऽनेन । लोकानां चतुर्दशसंख्योपेतानां कल्पः कल्पना विकल्पः अवान्तरकल्पो विविधकल्पना च यस्मिन् स तथा स (विराट्) मया आसाद्यमानः विनाशाय प्रेर्यमाणः ॥ २१ ॥

**अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ।**
**लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ।। २३ ।।**

**रूपं वायौ स च स्पर्शो लीयते सोपि चाम्बरे ।**
**अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ।। २४ ।।**

**योनिर्वैकारिके सौम्य लीयते महतीश्वरे ।**
**शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ।। २५ ।।**

**स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ।**
**तेऽव्यक्ते सम्प्रलीयन्ते तत् काले लीयतेऽव्यये ।। २६ ।।**

**कालो मायामये जीवे जीव आत्मनि मय्यजे ।**
**आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ।। २७ ।।**

---

अविशेषायेति प्रस्तुतं पृथिव्यादिलयं विविच्याह **अन्न इति** । अत्राभिमानिनामभिमन्यमानानां चैकोक्त्या निरूप्यमाणो लयोऽभिमानिनोऽभिमन्यमानस्य स्वकारणेऽभिमानिनि अभिमन्यमाने च विवक्षित इति । ''देव्यामोषधिमानिन्यां लीयतेऽन्नाभिमानिनी'' इत्युक्तेः अन्नमन्नाभिमानिनी धानास्वौषधीषु औषध्यभिमानिन्याम् । गन्धे स्वसूक्ष्मरूपे ।। २२-२३ ।।

इन्द्रियाणि स्वयोनिषु तैजसाहंकारे, इन्द्रियाभिमानिनश्च स्वयोनौ वैकारिकेऽहंकारे ।। २४ ।। योनिर्वैकारिकस्तैजसश्चाहंकारः विकारजत्वाद् वैकारिके महति चतुर्मुखे लीयते । ईश्वरे ईशनशक्तिमति । ''विकारजत्वात् तु महान् वैकारिक उदाहृतः । ईशनादीश्वरश्चैव ब्रह्मा बृंहणतः स्मृतः'' इति स्मृतेः । भूतादिं तामसाहंकारम् । स भूतादिरनन्तद्वारेण महति महत्तत्वाभिमानिनि ।। २५ ।।

स महान् स्वेषु गुणेषु कारणेषु गुणाभिमानिनीषु गायत्रीसावित्रीसरस्वतीषु । ते गुणाः ताः सत्वादिगुणवाच्यास्तिस्रः अव्यक्ते प्रकृत्याख्यस्वमूलरूपे । तदव्यक्तमव्यक्ताभिमानिनी गायत्री पुरुषाभिधे विरिञ्चे पत्यौ लीयते । स पुरुषः कालनाम्नि स्वस्मिन् ।। २६ ।।

कालाख्यो विरिञ्चो मायामये जीवे मूलप्रकृत्यमिमानिन्यां महालक्ष्म्यां, जीवनाम्नी श्रीः अजे आत्मनि मयि विशेषरतिलक्षणं लयमाप्नोति । आत्मस्वरूपं वक्ति **आत्मेति** । आत्मा पूर्णगुणः

**एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।**
**मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ।। २८ ।।**

**एष सांख्यविधिः प्रोक्तः संशयग्रन्थिहेतिकः ।**
**प्रतिलोतानुलोमाभ्यां परावरदृशा मया ।। २९ ।।**

**।। इति चतुर्विंशोऽध्यायः ।।**

---

केवलः प्रकृतिसम्बन्धविधुरः असमाधिकश्च, आत्मस्थः अनन्याधारः अत एव लयादिहीनः विकल्पापायलक्षणः सम्यग्ज्ञानरूपः, मिथ्याज्ञानापगमो लक्षणं यस्य स तथेति वा ।। २७ ।।

कथितसृष्ट्यादिस्मरणफलमाह एवमिति । वैकल्पिको भ्रमः विरुद्धकल्पनालक्षणमन्यथाज्ञानम् । मनस उत्पन्नं हृदि बुद्धौ ।। २८ ।।

उक्तार्थमुपसंहरति **एष इति**। प्रतिलोमेन विपरीतक्रमेण संहारकथनमनुलोमेन यथाक्रमेण सृष्टिकथनं संशयग्रन्थिहेतिकः संसारबन्धवनदहने अग्नेर्ज्वालायमानः । परावरदृशा सर्वज्ञेन । '' गायत्री चैव सावित्री तथैव च सरस्वती । एवं त्रिरूपा प्रकृतिर्ब्रह्मपत्नी प्रकीर्तिता । महत्तत्वात्मको ब्रह्मा तज्ज्ञत्वात् तत्र लीयते । गुणाधिकः पतिरपि तस्याः सत्वादिभेदतः । त्रिविधा मूलरूपायां प्रकृत्यां सा प्रलीयते । प्रकृतिर्मूलरूपा सा ब्रह्मपत्नी जगन्मया । पुरुषाभिधे विरिञ्चे तु स स्वस्मिन् कालसंज्ञके । कालाभिधो विरिञ्चस्तु महालक्ष्म्यां विलीयते । जीवमायेति यामाहुः साच सत्वादिभेदतः । त्रिविधैकत्वमापद्य विष्णावेव विलीयते । हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः । पुरुषेणातिसामीप्यं प्रकृतेर्लय उच्यते । ब्रह्मा च प्रकृतिश्चैव मुक्तिगौ विलये यतः । अतस्तौ भिन्नदेहौ तु ज्ञानमात्रौ समीपगौ '' इत्यादिप्रमाणसिद्धत्वात् सर्वज्ञेन परमाप्तेन मया प्रोक्तत्वाच्चेदं बुभूषुभिरवश्यं ग्राह्यमिति भावः ।। २९।।

**।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य चतुर्विंशोऽध्यायः ।।**

## ।। अथ पञ्चविंशोऽध्यायः ।।

श्रीभगवानुवाच -

गुणानामप्यमिश्राणां पुमान् येन यथा भवेत्।
तन्मे पुरुषवर्येदमुपधारय शंसतः ।। १ ।।

शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीः क्षमा निस्तुतिर्धृतिः ।। २ ।।

काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदाऽसुखम्।
मनोत्साहो यशः प्रीतिर्धार्ष्ट्यर्चवीर्यबलोद्यमाः ।। ३ ।।

क्रोधो लोभोऽनृतं हिंसा माया दम्भोऽक्षमा कलिः ।
शोकमोहौ विषादार्ती निद्राऽऽशा भीरनुद्यमः ।। ४ ।।

---

उक्तज्ञानाधिकारी सात्विक एवेत्यभिप्रेत्य सत्वादिगुणानां वृत्तीर्वक्त्यस्मिन्नध्याये । तत्र प्रथममिश्रा वृत्तीराह **गुणानामिति** । सत्वादिगुणानाममिश्राणां च मध्ये येन गुणेन पुमान् यथा भवेत् तथा तच्छंसतो मे सकाशादिदमुपधारय ।। १ ।।

इतराभ्याममिश्रा गुणवृत्तीराह **शम इति** । ईक्षा ज्ञानम् । स्मृतिः अखण्डशास्त्रार्थस्मरणम् । त्यागो निषिद्धस्य। अस्पृहा निषिद्धेच्छाराहित्यम्। निस्तुतिः आत्मप्रशंसावर्जनम्। धृतिः विपद्यपि चित्तानुद्वेगः । एते गुणा यस्य सन्ति स सात्विकः सांख्यज्ञानाधिकारीत्युक्तमनेन ।। २ ।।

रजोगुणवृत्तीराह **काम इति** । कामो विषयरागः । ईहा निषिद्धचेष्टा । तृष्णा अनलंबुद्धिः । स्तम्भः उक्तानङ्गीकारित्वम् । आशीः धनाकांक्षा । भिदा भेदकरणमन्यथाज्ञानं वा । असुखं दुःखम्। राजसस्य दुःखं भवति तामसस्य किं वक्तव्यमित्यभिप्रायेणोक्तम्। तदुक्तम् ''राजसेपि यदा दुःखं तामसे किमुतेति तत् । राजसे दुःखवचनं तामसेऽतिविवक्षया'' इति । एवंविधगुणो राजस इत्यर्थः ।। ३ ।।

तमोगुणवृत्तीराह **क्रोध इति** । माया कपटम् । अविद्यमानमहिमाप्रकटनं दम्भः । अस्थानेऽपि क्रोधोऽक्षमा । कलिः कलहः । मोहोऽज्ञानम् । आशा उत्कण्ठा । एवंविधस्तामसाधिकारीति ।। ४ ।।

**सत्वस्य रजसश्चैव तमसश्चानुपूर्वशः ।**
**वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥**

**सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः ।**
**व्यवहार सन्निपाते मनोमात्रेन्द्रियासुभिः ॥ ६ ॥**

**धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ।**
**गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥**

**प्रवृत्तिलक्षणां निष्ठां पुरुषो यर्हि गृहाश्रमे ।**
**स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥**

**पुरुषं सत्वसंयुक्तमनुमायाच्छमादिभिः ।**
**कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसाऽवृतम् ॥ ९ ॥**

**यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।**
**तं सत्वप्रकृतिं विद्यात् पुरुषं स्त्रियमेव च ॥ १० ॥**

---

उक्तवृत्तीर्विविनक्ति **सत्वस्येति** । सन्निपातं गुणानां मिश्रतां पुरुषनिष्ठतयाह **सन्निपात इति** । देहे कलत्रादौ योऽहंकारो ममकारश्च सत्वादिगुणानां मिश्रतालक्षणः । मात्राः शब्दादयः । सन्निपाते सति ॥ ५-६ ॥

मनोमात्रेन्द्रियासुभिर्व्यवहारोऽभिज्ञानादिलक्षणो भवतीत्युक्तं विवृणोति **धर्मे चेति** । यदाऽसौ पुरुषो धर्मादौ परिनिष्ठितो भवति तदा तस्यायं गुणानां सन्निकर्षः श्रद्धादिकरो भवति । यदा धर्मे निष्ठा तदा श्रद्धा यदाऽर्थे निष्ठा तदा धनकारी यदा कामे निष्ठा तदा रतिं करोतीत्यर्थः ॥ ७ ॥

यर्हि गृहाश्रमे पुमान् प्रवृत्तिलक्षणां निष्ठां भजमानः स्वधर्मे चानुतिष्ठेत तत्र सा गुणानां समितिः मिश्रीभाव इति द्रष्टव्यम् ॥ ८ ॥

व्यवहारस्य सन्निपातमूलत्वेऽयं सात्विक इत्यादि कथं घटत इति तत्राह **पुरुषमिति** । शमादिभिर्लिङ्गैः पुरुषं सत्वगुणयुक्तमनुमायात् । अनुमानेन जानातु । कामादिभिरप्येवम् ॥ ९ ॥

**यदा आशिष आशास्य मां यजेत स्वकर्मभिः ।**
**तं रजःप्रकृतिं विद्यात् हिंसामाशास्य तामसम् ॥ ११ ॥**

**सत्वं रजस्तम इति गुणा जीवस्य नैव मे ।**
**चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥ १२ ॥**

**यदेतरौ जयेत् सत्वं भास्वरं विशदं शिवम् ।**
**तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥**

**यदा जयेत् तमस्सत्वे रजः सङ्गभिदाचलम् ।**
**तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥ १४ ॥**

**यदा जयेद् रजस्सत्वे तमो मूढो ह्ययं जनः ।**
**युज्यते शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥ १५ ॥**

---

स्वभक्तेष्वेव सात्विकादिविवेचनप्रकारं दर्शयति **यदेत्यादि श्लोकद्वयेन** । आशिषः सम्पदः आशास्य मनस्याभिसन्धाय ॥ १०-११ ॥

एवंविधविभागस्य गुणहेतुत्वे तवापि तत् स्यात् किमिति तत्राह **सत्वमिति** । सत्वादयो गुणा उक्तवक्ष्यमाणविशेषापादका जीवस्यैव, मे नैव । तत्र हेतुगर्भविशेषणमाह **चित्तजा इति** । भूतानां पञ्चानां समुदायरूपबाह्यान्तःकरणे चित्ते जायन्ते व्यज्यन्त इति चित्तजाः । मम प्रकृत्यादिसम्बन्धराहित्यात् । जीवे तद् युक्तं तत्सम्बन्धसद्भावादित्याह **यैस्त्विति** । भूतानामुपादानानां सकाशादुत्पन्ने चित्तेऽभिव्यक्तैः सज्जमानो निबध्यत इति । तस्मान्मम गुणकृतानर्थं न शङ्क्येति भावः ॥ १२ ॥

संक्षिप्योक्तं सत्वादिगुणानां वृत्तिं प्रपञ्चयति **यदेति** । इतरौ रजस्तमसी । सत्वस्य स्वरूपमाह भास्वरमिति ॥ १३ ॥ रजः तमस्सत्वगुणौ जयेत् । रजःस्वभावमाह **सङ्गेति** । विषयसङ्गकारि भेदकारि चपलताकारि च ॥ १४ ॥ तमोगुणो रजस्सत्वगुणौ जयेत् । आशया अतितृष्णया । मूढ इत्यनेन तमःस्वभावो दर्शितः ॥ १५ ॥

यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ।
देहेऽभयं मनोऽसङ्गं तत् सत्वं विद्धि मत्पदम् ।। १६ ।।

विकुर्वन् क्रियया चाधीरनिवृत्तिश्च चेतसः ।
गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय ।। १७ ।।

सीदच्चितं विलीयेत चेतसो ग्रहणेऽक्षमम् ।
मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ।। १८ ।।

एधमाने गुणे सत्त्वे देवानां बलमेधते ।
असुराणां च रजसि तमस्युद्धव रक्षसाम् ।। १९ ।।

सत्वाज्जागरणं विद्याद् रजसा स्वप्रमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिष्वसङ्गतम् ।। २० ।।

उपर्युपरि गच्छन्ति सत्वेनाब्रह्मणो जनाः ।
तमसा अधोऽध आमुख्याद् रजसाऽन्तरचारिणः ।। २१ ।।

---

यदा चित्तं प्रसन्नमिन्द्रियाणां निर्वृतिर्ह्लादश्च देहे अभयं मनः असङ्गं च भवति तदा तत् मत्पदं मत्स्थानं सत्वं विद्धि ।। १६ ।।

क्रियया विकुर्वन् भवति चेतसो विषयादनिवृत्तिश्च भवति । गात्रास्वास्थ्यं शरीरावयवानां विजृम्भणम् । एतैर्लिङ्गैरिदं रज इति निशामय पश्य ।। १७ ।।

तमोगुणवर्तनप्रकारं स्पष्टयति **सीददिति** । यदा चित्तं स्मरणकारणमन्तःकरणं सीदत् नश्यत् अथवा विलीयेत । चेतसो ग्रहणे बहुस्मरणशक्तेश्चेतनाया ग्रहणे अक्षममसमर्थं मनो नष्टं भवति, तमः अज्ञानं ग्लानिः ग्लानता च भवति, तदा तमोगुणवर्तनमुपधारय ।। १८ ।।

बुभूषुणा सत्वमेव सेवनीयमिति भावेनाह **एधमान इति** ।। १९ ।। तुरीयमवस्थास्वरूपं त्रिषु गुणेषु सङ्गतं न भवति ।। २० ।। इतोपि सत्वमेव श्रेयःसाधनमित्याह **उपरीति** । आब्रह्मणो ब्रह्मलोक-पर्यन्तम् । आमुख्यादन्धन्तमःपर्यन्तम् । अन्तरचारिणः स्वर्गादौ चरन्ति ।। २१ ।।

**सत्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।**
**तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥ २२ ॥**

**मदर्पणं निष्फलं वा सात्विकं निजकर्म तत् ।**
**राजसं फलसंकल्पं हिंसाप्रायादि[१] तामसम् ॥ २३ ॥**

**कैवल्यं सात्विकं ज्ञानं कर्मनिष्ठं तु राजसम् ।**
**प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥**

**वनं तु सात्विको वासो ग्रामो राजस उच्यते ।**
**तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥**

**सात्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।**
**तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥**

---

सत्वेन सत्वगुणप्रवृद्धौ प्रलीना मृताः स्वर्गम् । रजसि प्रवृद्धे लयो येषां ते रजोलयाः । तमोलया इत्येतदनेन व्याख्यातम् । निर्गुणाः तमआदिगुणानभिभूता आत्यन्तिकभक्तिसाधनाः ॥ २२ ॥

वा शब्दश्चार्थे । मदर्पणत्वेन निष्फलत्वेन फलानुसन्धानराहित्येन यत् कर्म तत् निजकर्म वर्णाश्रमविहितं कर्म सात्विकम् ॥ २३ ॥

गुणनिमित्तकर्मभेदं निरूप्य ज्ञानभेदमाह **कैवल्यमिति** । कैवल्यं यथा शास्त्रे प्रतिपादितं तत्वं तद्विषयज्ञानं केवलमेव कैवल्यं ज्ञानं सात्विकम् । अग्निहोत्रादिकर्मनिष्ठम् । प्राकृतं बहिर्मुखजनप्रियविषयकम् । निर्गुणं मुक्तिसाधनम् । तदुक्तम् ''नैर्गुण्यसाधनं यत् तन्निर्गुणं परिकीर्तितम्'' इति । ''यथा शास्त्रोक्तविज्ञानं केवलं ज्ञानमुच्यते । स्वदृष्टशास्त्रानुकूल्याददृष्टानां च भक्तितः । गुणानां तु हरौ भावं विनिश्चित्य तदाश्रयात् । यथा शास्त्रानुसन्धानं ज्ञानं च हरिसंश्रयम्'' इति च ॥ २४ ॥

इदानीं गुणनिमित्तं क्षेत्रभेदमाह **वनमिति** । मन्निकेतं मदाश्रयं देवालयादि ॥ २५ ॥ इदानीं कर्तृभेदमाह **सात्विक इति** । असङ्गी कारकः कर्ता निष्कामत्वेन कर्मणां कर्तेत्यर्थः । स्मृतिविभ्रष्टः श्रुत्याद्यविहितकारित्वेन सत्कर्मणः स्रस्तः । निर्गुणो मोक्षगामी ॥ २६ ॥

---

१. हिंसाप्रायादि प्रचुरहिंसादि यत्कर्म तत् तामसमिति सुधीन्द्रतीर्थाः ।

**सात्त्विकाध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ।**
**तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥**

**पथ्यं युक्तमनायस्तमाहार्यं सात्त्विकं स्मृतम् ।**
**राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ २८ ॥**

**सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।**
**तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥**

**द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ।**
**श्रद्धाऽवस्था कृतिर्निष्ठा त्रैगुण्याः सर्व एव हि ॥ ३० ॥**

---

श्रद्धाभेदमाह **सात्त्विकीति** । आध्यात्मिकी यथाश्रुतशास्त्रविषया । ''श्रुतशास्त्रानुसारेण या श्रद्धा परमात्मनि । सा सात्त्विकी तदन्यस्याप्यनुसारेण निर्गुणा । अश्रुत्वापि प्रमाणं यो वासुदेवैक-संश्रयः । स निर्गुणो भागवतः समुद्दिष्टो मनीषिभिः'' इति स्मृतेः । श्रुतशास्त्रार्थश्रद्धावत् तदनुसारेणाश्रुतशास्त्रार्थेषु तदुक्तप्रकारेण मत्सेवायां मत्सेवार्थं या श्रद्धा सा निर्गुणा । तदन्यस्याप्यनुसारेण निर्गुणेत्युक्तेः ॥ २७ ॥

आहारभेदमाह **पथ्यमिति** । अनायस्तमक्लिष्टम् । इन्द्रियप्रेष्ठमिन्द्रियप्रीतिकरम् । आर्तिदं चाशुचि च ॥ २८ ॥

सुखभेदमाह **सात्त्विकमिति** । आत्मोत्थं परोक्षज्ञानं शास्त्रश्रवणसंजातं यत् तस्मादात्मनो मतेर्ज्ञानादुत्थं सुखं सात्त्विकम् । परोक्षज्ञानमात्मोत्थमित्यादेः । मदपाश्रयं मदपरोक्षज्ञानजन्यसुखं निर्गुणम् । ''अपरोक्षेण दर्शनम् । विष्ण्वाश्रम् सुखं नित्यं गमयेत् तत्प्रसादतः'' इति । भगवतः स्वरूपसुखमिदं नेत्यतो मदपाश्रयमित्युक्तम् । ''न तु विष्णोः स्वरूपं तु सुखं केनचिदाप्यते । तस्यैव विषयत्वात्तु तत्सुखं चेति भण्यते । परोक्षज्ञानगो यस्माद् विषयः स्वमनोगतः । अत आत्मेत्थमित्येव सुखमाहुर्विपश्चितः'' इति च ॥ २९ ॥

किं बहुना सर्वे पदार्थास्त्रिगुणसम्बन्धेन त्रिविधा इत्याह **द्रव्यमिति** । फलं स्वर्गादि । कालः प्रातरादिः । अवस्था जाग्रदादिलक्षणा । कृतिः क्रिया । निष्ठा व्रतम् ॥ ३० ॥

**सर्वे गुणमया भावा पुरुषाव्यक्तनिष्ठिताः ।**
**दृष्टं श्रुतमनुध्यायेद् बुध्या वा पुरुषर्षभ ॥ ३१ ॥**

**एताः संसृतयः पुंसां गुणकर्मनिबन्धनाः ।**
**येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ।**
**भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥ ३२ ॥**

**तस्माद् देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् ।**
**मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥ ३३ ॥**

**॥ इति पञ्चविंशोऽध्यायः ॥**

---

तदेव विवृणोति **सर्व इति** । पुरुषेण विष्णुना अव्यक्तेन श्रिया स्वयं निष्ठिता व्यवस्थापिताः । सत्वादिकृतसंसारजयोपायमाह **दृष्टमिति** । वाशब्दश्चार्थे । शास्त्रेण श्रुतं बुध्या च शास्त्रार्थरूपेण दृष्टं च परं ब्रह्मानुध्यायेन्निरन्तरं स्मरेत् ॥ ३१ ॥

अनेन ध्यानेन किं फलमत्राह **एता इति** । एवमुपासकेन येन जीवेन चित्तजाताः सत्वादिगुणा निर्जिताः तेन गुणकर्मनिबन्धनाः संसृतयश्च प्रागुक्ताः, निर्जिता भवन्तीति शेषः । ननु त्वत्प्राप्तिमन्तरेण संसृतिजयेन किम् । तत्राह **भक्तीति** ॥ ३२ ॥

मथितार्थमाह **तस्मादिति** । ज्ञानविज्ञानयोः संभवो यस्मात् स तथा तम् । व्यवधानेन शास्त्रद्वारा जातं ज्ञानं परोक्षज्ञानम्, अपरोक्षेण जातं निर्गुणमिति सङ्गिरन्ते । ''सत्वाद् गुणाज्ज्ञातमपि व्यवधानं विनैव तु । मुक्तिदं निर्गुणं प्रोक्तं व्यवधानेन सात्विकम्'' इत्युक्तेः । यतः संसारमोक्षो मद्भावस्तस्मान्मानुषं देहं लब्ध्वा सर्वोत्तमं मां विज्ञाय ब्रह्मणा सर्वगुणपूर्णेन मयैव पूर्णश्चरितार्थो ना पुरुषो बहिर्विषयेषु न चरेत् । आन्तर एव इन्द्रियैः प्रत्यगात्मविषयत्वेनैव चरेदित्यर्थः । संसारस्यान्तत्वादन्तोऽहं तस्मिन् मयि रतो भूत्वेति वा । अन्तरश्छिद्रः इन्द्रियव्याजी न चरेत् न स्यादिति वा । अन्तो व्यवसितं मृत्यौ स्वभावे परमात्मनीत्यन्तरो मां विना (?) न चरेदिति वा ॥ ३३ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य पञ्चविंशोऽध्यायः ॥**

॥ अथ षड्विंशोऽध्यायः ॥

**श्रीभगवानुवाच -**

**मल्लक्षणमिमं कायं लब्ध्वा मद्धर्ममास्थितः ।**
**आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥ १ ॥**

**गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।**
**गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ।**
**वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ॥ २ ॥**

**सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ।**
**तस्यानुगस्तमस्यन्धे पतत्यन्धानुगोऽन्धवत् ॥ ३ ॥**

---

अनन्तरातीताध्याये सर्वतः सङ्गमुत्सृज्य मन्निष्ठैव कार्येत्युक्तम् । तमेवार्थमितिहासपूर्वकं प्रपञ्चयत्यस्मिन्नध्याये । तत्रादावुक्तमपि ब्रह्मज्ञानफलं विश्वासजननाय पुनराह **मल्लक्षणमिति** । मां लक्षयति दर्शयतीति मल्लक्षणं मुद्रा यस्य स तथा तं मद्धर्मं भागवतसंज्ञम् । आत्मस्थं हृदिस्थं समुपैति, दर्शनेनेति शेषः । पश्यतीत्यर्थः ॥ १ ॥

दृष्टतत्वस्य तस्य यावद्देहपातं स्थितिप्रकारमाह **गुणमय्येति** । पुमान् स ज्ञानी अवस्तुभिरमङ्गलैः गुणैः शब्दादिभिः न युज्यते न संबध्यते, योग्यतातिरेकेणासेवनात् । तत्र कारणमाह **ज्ञानेति** । परतत्वाद्यशेषतत्वापरोक्षज्ञाननिष्ठया गुणमय्या सत्वादिगुणरूपया जीवयोन्या लिङ्गशरीराख्यमायया विमुक्तः । तदभिमानरहित इत्यर्थः । मायामात्रेषु प्रकृतिनिमित्तेषु अवस्तुतः अस्वातन्त्र्येण दृश्यमानेषु गुणेषु शरीरेषु वर्तमानोपि । "**वस्तु स्वतन्त्रमुद्दिष्टमस्वतन्त्रमवस्तु च**" इति वचनादवस्तुत इत्यनेन न मिथ्यात्वमुच्यते, तन्निवृत्तिसाधनविधानवैयर्थ्यापत्तेः ॥ २ ॥

ज्ञानिना योग्यतातिरेकेण विषयनिषेवा न कार्येत्युक्तं किमुत ज्ञानार्थिनेत्यत्र कैमुत्यमाह **सङ्गमिति** । शिश्नोदरे एव तर्पयन्तीति शिश्नोदरतृपः । तेषामसतां सङ्गं स्नेहलक्षणं न कुर्यात् । करणे बाधकमाह **तस्येति** । तस्यासत इति जातावेकवचनम् । अनेन विषयसङ्गो न कर्तव्य इति किं वक्तव्यमित्युक्तं भवति ॥ ३ ॥

**ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ।**
**उर्वशीविरहान्मुह्यन् निर्विण्णः शोकसंयुतः ॥ ४ ॥**

**त्यक्त्वाऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ।**
**विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥ ५ ॥**

**कामानतृप्तोऽनुजुषन् क्षुल्लकान् वर्षयामिनीः ।**
**न वेद गणनां यान्तीमुर्वश्याऽऽकृष्टचेतनः ॥ ६ ॥**

**ऐल उवाच -**

**अहो मे मोहविस्तारः कामकश्मलचेतसः ।**
**देव्या गृहीतकण्ठस्य नायुःखण्डा अनुस्मृताः ॥ ७ ॥**

**नाहं वेदाभिनिर्मुक्तः सूर्येणाभ्युदितो मृषा ।**
**मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥**

**अहो मे आत्मसम्मोह येनात्मा योषिता हृतः ।**
**क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥**

---

सङ्गात् कस्यानर्थः कस्य च सुखकरो निर्वेदश्चाभूदित्युद्धवस्य मानसीं शङ्कां परिहर्तुमैलोपाख्यानमाह **ऐल इति** । गाथां शिक्षाकरं वचनम् ॥ ४ ॥

जाये घोरे तिष्ठेत्यनेन ''हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु'' इतीदं सूचयति ॥ ५ ॥ वर्षयामिनीः वर्षरात्रीः उद्दिश्य यान्तीं गणनां न वेद । अज्ञाने हेतुमाह **उर्वशीति** ॥ ६ ॥

मोहविस्तारः अज्ञानविस्तारः । आयुःखण्डा अहोरात्रविभागाः ॥ ७ ॥ उक्तमेव विवृणोति **नाहमिति** । अहं वर्षपूगानां संख्यानयोग्यानि गतान्याहान्युत न वेद किमुतान्यानि । सूर्योदयादिना ज्ञातुं शक्यत्वात् कथमेतदत्राह **अभिनिर्मुक्त इति** । सूर्येणाभ्युदितोऽहरंशः सूर्येणाभिनिर्मुक्तो कालो रात्र्यंश इति मृषा विवेकज्ञानाभावात् । कुतोऽत्राह **मुषित इति** । तत्सङ्गेन ज्ञानस्य मुष्टत्वात् । अभिनिर्मुक्त इत्यादि राजविशेषणं वा ॥ ८ ॥ पुनरपि पश्चादनुतपन्नाह **अहो इति** । आत्मा मनो धृतिगुणो वा । क्रीडामृगश्च, कृत इति शेषः ॥ ९ ॥

क्रीडामृगत्वं लक्षयति **सपरिच्छदमिति** । हस्त्यश्वादिपरिकरोपेतम् ॥ १० ॥ अनुभावादिगुणैः

सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ।
यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद् रुदन् ॥ १० ॥

कुतस्तस्यानुभावः स्यात् तेज ईशित्वमेव वा ।
योऽन्वगच्छं स्त्रियं यान्तीं स्मरमबाणवितांडितः ॥ ११ ॥

किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥

स्वार्थस्याकोविदं धिङ् मां मूर्खं पण्डितमानिनम् ।
योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥

सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ।
न तृप्त आत्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥

पुंश्चल्याऽपहृतं चित्तं को न्वन्यो मोचितुं प्रभुः ।
आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥

बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ।
मनोगतो महामाहो नापयात्यजितात्मनः ॥ १६ ॥

---

स्त्रीसङ्गदोषलेपो न स्यादिति तत्राह **कुत इति**। अनुभावः तत्वनिश्चयः। तेजः सामर्थ्यम्। ईशित्वं योगशक्तिविशेषः। अनेन सङ्गदोषं मार्ष्टुं न समर्था एते गुणा इत्युक्तं भवति। स्मरबाणेत्यनेनानुगमने हेतुरुच्यते ॥ ११ ॥

विद्यादयोपि सङ्गदोषं मार्ष्टुं न प्रभवा इत्याह **किं विद्ययेति** ॥ १२ ॥ जातनिर्वेदो राजा स्वात्मानं धिक्करोति **स्वार्थस्येति**। स्वार्थविषये अकोविदं स्वप्रयोजनविषयज्ञानपाटवरहितमित्यर्थः ॥ १३ ॥ आत्मभूशब्दस्यानेकार्थतया अत्र क इति शङ्कानिवृत्तये **काम इति** ॥ १४ ॥ संसारकामवैरिणि शार्ङ्गिणि जाग्रति प्रभुर्नास्तीति वचनं कथं युज्यत इति तत्राह **आत्मारामेति** ॥ १५ ॥

बोधकाभावादेवमभूदिति नेत्याह **बोधितस्यापीति**। किमेता वाचेत्यादि सूक्तवाक्येन[१]। पुरुरवो मा मृथा मा पप्तो मा त्वा वृकासो अशिवास उक्षन्। न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदायान्येता'' इति ॥ १६ ॥

---

१. ऋग्वेदे दशमे मण्डले पञ्चनवतितममिदं सूक्तम्। (ऋ - १०-९५)।

**किं न्वेतया म एकान्ते रज्ज्वां वै सर्पचेतसः ।**
**द्रष्टुः स्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥**

**क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ।**
**क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥**

**पित्रोः किं स्विन्नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ।**
**किमात्मनः किं सुहृदामिति यो नावसीयते ॥ १९ ॥**

**तस्मिन् कलेवरे मेध्ये तुच्छनिष्ठे विषज्जते ।**
**अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥**

**त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ।**
**विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ २१ ॥**

---

एतयोर्वश्या रहसि रतया किं नु सुखं न किमपि प्रत्युत दुःखमेव । तत्र दृष्टान्तः **रज्ज्वां वै सर्पचेतस इति** । यथा रज्ज्वां सर्पबुद्धेर्भयलक्षणं दुःखं तथा । अन्यथाबुद्धेः किं कारणमत्राह **द्रष्टुरिति** । द्रष्टुरीश्वरस्य स्वरूपाविदुषः । किञ्च योऽहं यादृशेश्वराधीनसत्ताकोऽहं तस्य मम ईश्वरस्वरूपाज्ञानं मत्स्वरूपाज्ञाने कारणमित्यर्थः । रथाङ्गपाणेः स्वरूपाज्ञाने स्वस्वरूपाज्ञाने चाजितेन्द्रियत्वमेव कारणमित्याह **यदिति** ॥ १७ ॥

इतोपि सर्वस्याप्यज्ञानमेव कारणमित्याह **क्वायमिति** । सौमनस्यं सौन्दर्यम् । दौर्गन्ध्यादिदुर्गुणाधिकरणस्य देहस्य सौमनस्यादिगुणसमुदायो न घटत इति यस्मात् तस्मादनाद्यविद्यया भगत्स्वरूपाज्ञानेन अध्यासः अस्मिन् तद्बुद्धिरभूदित्यर्थः ॥ १८ ॥

अध्यासं प्रपञ्चयति **पित्रोरिति** । भार्याया अपि भोगार्हत्वाद् विशयकोटावन्तर्भावः । **यो देहः** पित्रादीनामस्येति नावसीयते न निश्चीयते ॥ १९ ॥

तस्मिन् तुच्छानां पञ्चानां भूतानां निष्ठा उत्कर्षो यस्मिन् । तुच्छा निष्ठा व्यवस्था च यस्मिन् स तथेति वा । तस्मिन्नमेध्ये कलेवरे सुभद्रमिति विषज्जते पुरुषः । अहो भ्रान्तिरिति ॥ २० ॥

इतोपि स्त्रीष्वर्थबुद्धिं कुर्वन् भ्रान्त इत्याह **त्वगिति** । संहतौ त्वगादिसन्निबिडदेहे रमतां रममाणानां कृमीणां कीटकानां चान्तारं व्यवच्छेदनं कियत् ॥ २१ ॥

**अथापि नो विषज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ।**
**विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यदा ॥ २२ ॥**

**अदृष्टादश्रुताद् भावान्न भाव उपजायते ।**
**असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ॥ २३ ॥**

**तस्माद् सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।**
**विदुषां चाप्यविश्रभ्यः षड्वर्गः किमु मादृशाम् ॥ २४ ॥**

**श्री भगवान् उवाच -**

**एवं प्रगायन् नृपदेवदेवः स उर्वशीलोकमथो विहाय ।**
**आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥**

**ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुध्दिमान् ।**
**सन्त एवास्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ २६ ॥**

---

स्त्रीष्वभिरमणमपि गर्हितं यस्मात् अथ तस्मात् अर्थवित् स्वप्रयोजनवित् स्त्रीषु स्त्रीलोलेषु च नो विषज्जेत । यद्यपि विशेषो नास्ति तथापीदं न कर्तव्यमिति वाह **अथापीति** । स्त्रीसङ्गादिवर्जने मनोवशीकरणमेव प्रथमं साधनं अन्यथा सर्वं कुञ्जरस्नानवन्निष्फलं स्यादिति भावेनाह **विषयेति** । अन्यदा विषयेन्द्रियसंयोगाभावे मनःक्षोभो नास्ति ॥ २२ ॥

तदुपपादयति **अदृष्टादिति** । भावो मनः अदृष्टादश्रुताद् भावाद् वस्तुनः न उपजायते विकारविशिष्टं भवति संयोगलक्षणसंबन्धाभावात् । अतो दृष्टश्रुतवस्तुन्येव सम्बन्धसमर्थं मनः । ततश्च प्रकृते किमनेनेति तत्राह **असम्प्रयुञ्जत इति** । यतो विषयेन्द्रियसंयोगात्तु क्षुब्धं भवतत्यतः प्राणान् इन्द्रियाणि विषयेष्वप्रयुञ्जतः विषयेभ्यः आकृष्य स्ववशे कुर्वतः पुंसः आकर्षणपाशाभावात् स्तिमितं निश्चलं मनः शाम्यति भगवदेकनिष्ठं भवतीत्यर्थः ॥ २३ ॥

उक्तं निगमयति **तस्मादिति** । कुत इति तत्राह **विदुषामिति** ॥ २४ ॥

जन्मप्रभृत्यभ्यस्तस्य दुःसङ्गस्य त्यागो दुःशक इति न मन्तव्यं, सत्सङ्गेन स्वत एव शिथिलीभूतस्य त्यागः सुलभ इति भावेनाह **तत इति** । तृणगूढावलम्बरहितकूपपतनवद् दुःसङ्गो दुःखकर इति यत्

**सन्तोऽनपेक्षा मच्चिताः प्रशान्ता समदर्शनाः ।**
**निर्ममा निरहंकारा निर्द्वन्द्वा निःपरिग्रहाः ॥ २७ ॥**

**तेषु नित्यं महाभाग महाभागेषु मत्कथाः ।**
**संभवन्ति हिता नॄणां जुषतां प्रपुनन्त्यघम् ॥ २८ ॥**

**ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ।**
**मत्पराः श्रद्धधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥**

**भक्तिं लब्धवतः साधो किमन्यदवशिष्यते ।**
**मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥**

**यथोपाश्रयमाणस्य भगवन्तं विभावसुम् ।**
**शीतं भयं तमो व्येति साधुं संसेवतस्तथा ॥ ३१ ॥**

**निमज्योन्मज्जतां घोरे भवाब्धौ ते परायणम् ।**
**सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥**

---

ततः । ते किमस्य कुर्वन्तीति तत्राह **सन्त इति** । सन्तः एतस्य मनोवाक्कायकर्मभिः सम्यक् शरणंगतस्य पुंसो मनोव्यासङ्गं मनसो दुष्टेषु सङ्गमुक्तिभिः छिन्दन्ति ॥ २५-२६ ॥

एवंविधमाहात्म्याश्चैते कथं ज्ञातव्या इति तल्लक्षणमाह **सन्त इति** ॥ २७ ॥ अनपेक्षतादिगुणानामन्यत्रापि दर्शनात् तेषामपि दुःसङ्गनिवर्तकत्वं स्यादित्याशंक्य तच्छक्त्युद्बोधकगुणसद्भावादन्यत्र तदभावादिति भावेनाह **तेष्विति** । ततः किमत्राह **ता इति** । ताः कथाख्या उक्तयो मनोव्यासङ्गं छिन्दन्तीत्यर्थः ॥ २८ ॥

त्वद्भक्तिर्हि सकलव्यसनच्छेत्री, तदनुदये ताभिः किमत्राह ता इति ॥ २९ ॥ भक्तेः साधनोत्तमत्वमाह भक्तिमिति ॥ ३० ॥ एतमर्थं सोदाहरणं समर्थयते यथेति । विभावसुमग्निं निषेवमाणस्य शीतादिकं यथा नश्यति तथा साधुं सत्पुरुषं सेवमानस्य मनोव्यासङ्गविनाशो भवतीत्यर्थः ॥ ३१ ॥

इतोपि सन्तः सेव्या इत्याह **निमज्येति** । तथा ते सन्तः पुंसां परायणमप्सु मज्जतो दृढा नौरिव ॥ ३२ ॥

अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ।
धर्मो वित्तं नृणां प्रेत्य सन्तोऽतो बिभ्यतोऽरणम् ॥ ३३ ॥

सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ।
देवता बान्धवाः सन्तः पिता माताऽहमेव च ॥ ३४ ॥

चेतसेलासुतोऽप्येवमुर्वश्या लोकनिःस्पृहः ।
मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥

॥ इति षड्विंशोऽध्यायः ॥

---

सत्स्वपि प्रधानः सन्नहमेवेति सोदाहरणमाह **अन्नमिति** । लुप्तोपमेयम् । क्षुधितानामन्नं यथा प्राणो प्रकृष्टचेष्टाप्रदं, यथा प्रेत्य मरणानन्तरं धर्मो वित्तं नृणां सुखाय स्याद्, यथा वा आर्तानां शरणं रक्षिताऽहमेव तथा अतः संसाराद् बिभ्यतो जनस्य अरणं शरणं सन्त इति ॥ ३३ ॥

तदुपपादयति **सन्त इति** । यथा समुत्थित उदितोऽर्कः बहिः चक्षुर्दिशति तथा सन्त आन्तरं चक्षुर्दिशन्ति । बहुवचनादादित्यादधिकप्रयोजकत्वं सूचयति । सत्प्रधानो हरिरित्यस्यावगतिः कथमभूदिति तत्राह **देवता इति** । अहमेवेत्यनेन सत्प्रधानत्वमवगतं हरेः । ''विष्णोश्च सत्प्रधानत्वान्न सतां विद्यते परम् । इत्याहुर्वेदविदुषः स हि सर्वेश्वरेश्वरः'' इति वाक्यं चशब्देन सूचयति ॥ ३४ ॥

स्वोक्तमर्थमितिहासेन सङ्गमयति **चेतसेति** । चेतसा, एवं निरूप्यैवेति शेषः ॥ ३५ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य षड्विंशोऽध्यायः ॥**

॥ अथ सप्तविंशोऽध्यायः ॥

उद्धव उवाच -

**क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ।**
**येन त्वां ये यथाऽर्चन्ति सात्वताः सात्वतर्षभ ॥१॥**

**एतद् वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ।**
**नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥ २ ॥**

**निःसृतं ते मुखाम्भोजाद् यदाह भगवानजः ।**
**पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥ ३ ॥**

**एतद् वै सर्ववर्णानामाश्रमाणां च सम्मतम् ।**
**श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥ ४ ॥**

**एतत् कमलपत्राक्ष कर्मबन्धविमोचनम् ।**
**भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥**

---

कर्मयोगानुष्ठानप्रकारं प्रपञ्चयत्यस्मिन्नध्याये । तत्रोद्धवो धिष्ण्येष्वित्यादिना संक्षिप्योक्तं क्रियायोगं विस्तरतो विविदिषुः पृच्छति **क्रियायोगमित्यादिना** । ''क्रिया तु निष्कृतौ शिक्षाचिकित्सापाप-कर्मसु । कारणारम्भपूजासु सम्प्रधारणचेष्टयोः'' इत्यतो विवक्षितमाह **भवदाराधनमिति** । ये सात्वताः सात्वततन्त्रोक्तविधानं विद्वांसः ते, येन केन, यथा कथं, अर्चन्ति ॥ १ ॥

इदमेव वक्तव्यमिति किम् , किमन्यन्न स्यादिति तत्राह **एतदिति** । मुनय एतद् भगवदाराधनं नृणां निःश्रेयसं पुरुषार्थसाधनं मुहुर्मुहुरनुक्षणं वदन्ति ।ग्राह्यत्वे तान् निर्दिशति **नारद इत्यादिना** । अङ्गिरसः सुतः आचार्यो बृहस्पतिः॥ २ ॥

इतोऽपीदमेव श्रोतव्यं नान्यदित्याह **निःसृतमिति** । ऋषिवचनानां विकल्पसंभवात् कथं निर्णय इत्यतो वाह **निःसृतमिति** । भवदाज्ञया असुरजनमोहनायान्यथा वदन् शिवोपीदं ग्राह्यत्वेनाहेत्याह **देव्या इति** । देव्या इत्यनेनाप्तिमूलत्वं सूचयति ॥ ३ ॥

उत्तमश्रोतॄणामर्थायोक्तमस्तु नापरेषामधिकार इति नाश्रद्धेयमिति भावेनाह **एतदिति** । सम्मतं समानम् ॥ ४ ॥ अनेन कर्मबन्धविध्वंसाभावान्नानुष्ठानार्हमिति नेत्याह कर्मेति ॥ ५ ॥

**श्रीभगवानुवाच -**

**न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव।**
**संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः॥ ६ ॥**

**वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः।**
**त्रयाणामीप्सितेनैव विधिना मां समाचरेत्॥ ७ ॥**

**यथा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः।**
**यथा यजेत मां भक्त्या श्रद्धया तं निबोध मे॥ ८ ॥**

**अर्चायां स्थण्डिलेऽग्नौ वा सूर्येऽप्सु हृदि वा द्विजे।**
**द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया॥ ९ ॥**

**पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये।**
**उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिभिः॥ १० ॥**

---

कर्मकाण्डस्यापरिमितत्वेन तज्ज्ञानस्य च दुःसाध्यत्वेन मन्दमतीनां तदुक्तानुष्ठानं दूरोत्सारितमित्यतोऽनादरणीयमिति न मतिं कुरु किन्तु यत् संक्षिप्योक्तं तत् त्वत्प्रश्नपरिहारत्वेन वक्ष्यामीत्याह **न हीति**। कर्मकाण्डस्य पञ्चरात्रागमस्य। चशब्दो न समुच्चये किन्तु केषांचिदेवानन्तपारत्वं न सर्वेषाम्, अस्मदादिबुद्धिविषयत्वादित्यस्मिन्नर्थे॥ ६ ॥

वैदिको वेदाधिकारिविषयोऽग्निष्टोमादिः। तान्त्रिकः तन्त्राधिकारिविषयः पुष्पाञ्जल्यादिः। मिश्रः स्त्रीशूद्रादिविषयो नामसङ्कीर्तनादिः[1]। मखो यागः पूजालक्षणः। तत्तदधिकारिणमाह **त्रयाणामिति**। इप्सीतेन योग्येन॥ ७ ॥

स्वनिगमेन स्वशाखया विहितं यथा तथा द्विजत्वमुपनयनं प्राप्य॥ ८ ॥

अर्चादीन्यधिष्ठानानि उत्तरोत्तरशस्तानि यथायोग्यं॥ ९ ॥ उभयैः वैदिकैस्तान्त्रिकैरपि मन्त्रैः॥ १०॥

---

१. तान्त्रिकः पञ्चरात्राद्यधिकारिविषयो देवपूजादिरिति सुधीन्द्रतीर्थाः।

**सन्ध्योपास्त्यादिकर्माणि वेदतन्त्रोदितानि मे।**
**पूजां तैः कल्पयेत् सम्यक् सङ्कल्पः कर्मपावनः ॥ ११ ॥**

**शैली दारुमयी लौही लेप्या लेख्या च सैकती।**
**मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ १२ ॥**

**चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम्।**
**उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥**

**अस्थिरायां विकल्पः स्यात् स्थाण्डिले तु भवेद् द्वयम्।**
**स्नपनं तु विलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥**

**द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायया।**
**भक्त्या चैव यथालब्धैर्हृदि भावेन चैव हि ॥ १५ ॥**

---

सन्ध्योपास्त्यादिकर्माणि यानि तैर्मम पूजां प्रकल्पयेत्। किमर्थमेवं सङ्कल्प इति तत्राह **सम्यगिति**। मत्पूजात्वेन सङ्कल्पः कर्मशुद्धिकर इत्यर्थः॥ ११ ॥

अर्चायामित्युक्तप्रतिमाभेदमाह **शैलीति**। शैली शिलामयी। लोहेन कांस्यताम्रादिना निर्मिता लौही। लेप्या औषधरससंलिप्तशिला। लेख्या पटादिलिखितचित्रलक्षणा। सैकती तत्तकालोचित-सिकतया कृता। मनोमयी ध्यानकाले चित्तप्रतिबिम्बिताकृतिः। मणिमयी सूर्यकान्तादिरचिता ॥ १२ ॥

जीवमन्दिरं देहः, इयमपि चलान्तर्भूतम्। स्थिरायां प्रतिमायामर्चने उद्वासावाहने न स्तः ॥ १३ ॥ अन्यत्र शिलादिष्वेव स्नपनम्। विलेप्यायां तुशब्दात् स्थाण्डिलादावपि परिमार्जनमेव स्नपनमित्युच्यते ॥ १४ ॥

प्रसिद्धैः तन्त्रेषु प्रशस्तत्वेन निरुपितैः। सामाग्र्यभावे यथालब्धैः। हृदि भक्त्या भावेन ध्यानेन। द्रव्यध्यांनसमुच्चये चशब्दः। एवशब्दो भक्तेः सार्वत्रिकत्वे। हिशब्दो ज्ञानाद्याधिक्ये ॥ १५ ॥

स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव।
स्थण्डिले तत्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ १६ ॥

सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः।
श्रद्धयोपहृतं श्रेष्ठं भक्तेन मम वार्यपि।
गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १७ ॥

शुचिः सम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः।
आसीनः प्रागुदग्वाऽर्चेदर्चायां त्वथ सम्मुखः ॥ १८ ॥

कृतन्यासो मदार्चां च पाणिनाऽभिमृजेद् बुधः।
कलशं प्रोक्षणीयं च यथावदुपसादयेद् ॥ १९ ॥

तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च।
प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च सादयेत् ॥ २० ॥

पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि देशिकः।
हृदा शीर्ष्णाऽथ शिखया गायत्र्या वाऽभिमन्त्रयेत् ॥ २१ ॥

पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम।
अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २२ ॥

---

तत्वस्य हरेः सच्चिदानन्दरूपस्य विन्यासः सन्निधानम्। तत्वानां प्राणश्रद्धादीनां निन्यासो वा ॥ १६ ॥ सूर्ये पुष्पादिभिरभ्यर्हणं प्रेष्ठमतिशयितप्रीतिजनकम्। सर्वस्माद् भक्तिपूर्वकमुपाहृतं प्रेष्ठमित्याह **श्रद्धयेति** ॥ १७ ॥

प्रागुदग् वा आसीनः। सम्मुखः अभिमुखः ॥ १८ ॥ कृतषडङ्गन्यासः। कलशमग्र्योदकपात्रम्। प्रोक्षणीयं पुष्पादिपात्रम् ॥ १९ ॥ देशिको मन्त्रज्ञः। हृदादिमन्त्रैः नमआदिलक्षणैः[१] ॥ २०-२१ ॥

ध्येयंस्वरूपमाह **पिण्ड इति**। प्राणायामाज्ज्वलितवाय्वग्निसंशुद्धे पिण्डे देहे हृत्पद्मस्थाम्, जीवः कला यस्याः सा जीवकला तां बिम्बस्वरूपमित्यर्थः, ''हृदिस्था या हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः।

---

१. हृदा क्रुद्धोल्काय नम इति मन्त्रेण, शीर्ष्णा महोल्काय नम इति मन्त्रेण, शिखया वीरोल्काय नम इति मन्त्रेणाभिमन्त्रयेदिति सुधीन्द्रतीर्थाः। गायत्र्या मन्त्रेण हृदादिस्थाने चाभिमन्त्रयेदिति श्रीनिवासतीर्थाः।

**तयाऽऽत्मभूतया पिण्डे व्याप्ते सम्पद्य तन्मयः ।**
**आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥ २३ ॥**

**पाद्योपस्पर्शनार्घ्यादीनुपचारान् प्रकल्पयेत् ।**
**धर्मादिभिश्च नवभिः कल्पयित्वासनं मम ॥ २४ ॥**

**पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ।**
**उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २५ ॥**

**सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।**
**मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २६ ॥**

**नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।**
**महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥ २७ ॥**

---

यद्वशे वर्तते जीवः सा तु जीवकला स्मृता'' इति वचनात्, ध्यायेत् । नादान्ते सिद्धभावितां नादः शब्दः अन्तोऽवसानं सर्वात्मना नादानुक्तत्वात् शब्दागोचरतया सिद्धैः सनकादिभिरुपासिताम् । ''शब्दैः सर्वात्मनाऽनुक्तेर्नादान्तस्था तु सा मता'' इत्युक्तेः ॥ २२ ॥

आत्मा व्याप्ता भूता नित्यं वर्तमाना या जीवकला तया शरीरव्यापिन्या भगवन्मूर्त्या व्याप्ते पिण्डे देहे सम्पद्य सम्यक् प्रतिपत्तिं कृत्वा तन्मयः एवं ध्यानेन भगवत्प्रधानो भूत्वा अर्चादिषु आवाह्य संस्थाप्य सन्निरुध्य न्यस्ताङ्गं मातृकादिमन्त्राक्षरैर्न्यस्ततत्तदवयवं मां पूजयेदित्यन्वयः । ''व्याप्तो भूतश्च नित्यं यदात्मा भूतो हरिस्ततः । जीवस्य तत्प्रधानत्वं तन्मयत्वमुदाहृतम्'' इति वचनात् । अत सातत्यगमन इति धातोर्मन्प्रत्यये आत्मेति रूपम् । ''व्याप्तोपि भगवान् विष्णुः देहे सर्वगतत्वतः । भक्तस्य[2] फलदो यस्माद् व्याप्तिकृत् तस्य तेन सः'' इत्यनेन मयि स्थित्वा स्वयमेवावाहयत्यर्चयति चाहं तदधीनतयाऽऽवाहनादिकं करोमीत्युक्तं भवति ॥ २३ ॥

धर्मादिभिर्विमलादिभिर्नवभिः शक्तिभिश्च समं पीठं कल्पयित्वा तत्र धर्मादिक्लृप्ते पीठेऽष्टदलं पद्मं ध्यात्वा तत्र प्रकृतिसन्निहिते पद्मे मां पूजयेत् । वेदतन्त्राभ्यां मह्यं महनीयं पूजनीयम् । उभयसिद्धये वेदतन्त्रोक्तफलसिद्धये ॥ २४-२५ ॥ अनु अनन्तरम् ॥ २६ ॥ अभिमुखान् मध्यावाहितप्रधानदेवताभिमुखान् । प्रोक्षणीयादिभिः अर्घ्यादिभिः ॥ २७-२८ ॥

---

२. तज्ज्ञस्येति हृषीकेशतीर्थपाठः ।

दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान्।
स्वे स्वे स्थाने त्वभिमुखान् पूजयेत् प्रोक्षणादिभिः ॥ २८ ॥

चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ।
सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥ २९ ॥

स्वस्य घर्मानुवाक्येन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन धामनीरजनादिभिः ॥ ३० ॥

वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।
अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितैः ॥ ३१ ॥

पाद्यमाचमनीयं च गन्धं सुमनसोज्वलम् ॥
धूपदीपोपहाराणि दद्यान्मे श्रद्धयाऽर्चकः ॥ ३२ ॥

गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ।
संयावं दधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३३ ॥

अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ।
अन्नादि नृत्यगीतादि सर्वाणि स्युस्तथाऽन्वहम् ॥ ३४ ॥

विधिना विहिते कुण्डे मेखलावर्तवेदिभिः ।
अग्निमाधाय परितः समूहेत् पाणिनोदितम् ॥ ३५ ॥

---

स्वस्य सूक्तेन विष्णुसूक्तेन। घर्मसूक्तेन घर्मा समन्तात् त्रिवृतं व्यापतुरिति सूक्तेन। महापुरुषविद्यया जितं ते पुण्डरीकाक्षेत्यादिकया। पौरुषेण सूक्तेनापि। धामसूक्तं समुद्रादूर्मिरिति। पावमानं सूक्तं नीराजनम्। ''नितरां रञ्जयेद् यस्मात् पावमानं तु मण्डलम्। विष्णोर्नीराजनं तस्माद् विद्वद्भिः समुदाहृतम्'' इति वचनात्। आदिशब्दोक्तै रुद्रो जज्ञे वीर्यायेत्यादिसूक्तैः स्तुतिं कुर्यात्॥ २९-३० ॥

संयावं गोधूमापायसं राजान्नं वा। वित्ते सति ॥ ३१-३३ ॥ मेखलावर्तवेदिभिः सह विहिते। उदितं ज्वलितम्॥ ३४-३५ ॥

परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ।
प्रोक्षणीयानि द्रव्याणि प्रोक्ष्याग्नावावहेत माम् ॥ ३६ ॥

तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ।
लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥ ३७ ॥

स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३८ ॥

ध्यायन्नभ्यर्च्य दारूणि हविषाऽभियुतानि च ।
प्रास्याज्यभागावाघार्य दत्वा चाज्यप्लुतं हविः ॥ ३९ ॥

जहुयान्मूलमन्त्रेण षोडषार्चाविधानतः ।
धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥ ४० ॥

अभ्यर्च्याग्निं नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ।
मूलमन्त्रं जपेद् ब्रह्म स्मरन् नारायणात्मकम् ॥ ४१ ॥

दत्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ।
मुखवासं सुरभिमत् ताम्बूलाद्यमथार्हयेत् ॥ ४२ ॥

उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम ।
मत्कथाः श्रावयन् शण्वन् मुहूर्तक्षणिको भवेत् ॥ ४३ ॥

स्तवैरुच्चावचैः श्रौतैः पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ४४ ॥

---

हविषा सर्पिषाऽभियुतानि मिश्रितानि दारूणि समिधः प्रास्य हुत्वा । अर्चाविधानतः पूजाविधानतः ॥ ३६-३९ ॥ धर्मादिमन्त्रैः धर्मादिभ्यो यथान्यायं, हविर्जुहुयादिति शेषः । पुनः स्विष्टकृतं कुर्यात् ॥ ४० ॥ अभ्यर्चायामिति पाठे अभिमुखे भूत्वा अर्चायां सन्निहितं भगवन्तं नमस्कृत्येत्यर्थः ॥ ४१ ॥

सुरभिमन्मुखवासताम्बूलादिकं च दत्वाऽनन्तरं चामाराद्युपचारैः अर्हयेत् संभावयेत् ॥ ४२ ॥ न केवलमुपगायन् गृणन् शृण्वंश्च किन्तु मम कर्माणि अन्यैः कीर्तयित्वा अभिनयन् सर्वेषां

शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम्।
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्॥ ४५॥

ततः शेषां मया दत्तां शिरस्याधाय सादरम्।
उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत् पुनः॥ ४६॥

अर्चादिषु यथा यत्र श्रद्धा मां तत्र चार्चयेत्।
सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः॥ ४७॥

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः।
अर्चानुभावतः सिद्धिं मत्तो विन्दन्त्यभिप्सिताम्॥ ४८॥

मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद् दृढम्।
पुष्पोद्यानानि रम्याणि पूजां तत्रोत्सवाश्रिताम्॥ ४९॥

पूजादीनां प्रवाहार्थे महापर्वसु चान्वहम्।
क्षेत्रापणपुरोग्रामान् दत्वा मत्सार्ष्टितामियात्॥ ५०॥

प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात्॥ ५१॥

---

प्रकाशयन्। अर्थान्तरं चाह **मत्कथा इति**। अनेनाभिनयशब्दार्थोऽपि विवृतः। किमुक्तं स्यात्तत्राह **मुहूर्तक्षणिक इति**। मत्कथार्थमेव मुहूर्तः क्षणश्चास्येत्यस्मिन्नर्थे ठप्रत्ययः। मत्कथातिवाहितसर्वकालो भवेदित्यर्थः॥ ४३॥ स्तवैः मुक्तकश्लोकनिबन्धनैः॥ ४४॥

परस्परं बद्धाभ्यां बाहुभ्यां सह शिरो मत्पादयोः॥ ४५॥ शेषां मालाक्षतादिदानम्। शेषोऽस्त्रीष्वन्यस्मिन्नुपयुक्तः। माल्याक्षतादिदाने स्त्रीति यादवः॥ ४६॥ यत्र येष्वर्चादिषु यथा श्रद्धा तथा मामर्चयेत्॥ ४७॥ अर्चानुभावतः प्रतिमासामर्थ्यात्॥ ४८॥ प्रवाहरूपेण प्रवर्तनार्थे॥ ४९-५०॥ प्रतिष्ठागृहकरणपूजानां फलतारतम्यमाह **प्रतिष्ठयेत्यादिना**। मत्साम्यतां निर्दुःखानन्दानुभवरूपताम्॥ ५१॥

**मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति।**
**स भक्तियोगं लभते एवं यः पूजयेत माम्॥ ५२॥**

**यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः।**
**वृत्तिं स जायते विड्भुग् वर्षाणामयुतायुतम्॥ ५३॥**

**कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च।**
**कर्मणां भागिनः प्रेत्य भूयोभूयसि तत् फलम्॥ ५४॥**

**॥ इति सप्तविंशोध्यायः ॥**

---

ज्ञानं विना प्रतिष्ठादिभिरेव साम्यता कथं स्यात्तत्राह **मामेवेति**। नैरपेक्ष्येण भक्तियोगेनैव मां विन्दति साम्यं लभते। ''निर्दुःखत्वं हरेः साम्यं न तादृशसुखात्मता। सर्वोत्तमस्तदानन्दः कथं कस्यचिदाप्यते[1]। आधिपत्यं त्रिलोकस्य योग्यानामिन्द्रता स्मृता। अयोग्यानां त्रिलोकेऽपि पूज्यत्वं समुदाहृतम्। तद् भवेत् परया भक्त्या विष्णोरालयकारिणः। ततोऽप्युद्रिक्तया भक्त्या विष्णुं पूजयतः सदा। अवाप्यते ब्रह्मलोकस्तदुद्रिक्तश्च मुच्यते '' इति मानाद् विशेषोऽवगन्तव्यः। नन्वेवं तर्हि प्रतिमादिपूजा व्यर्थेति तत्राह **एवमिति**। य एवं मां पूजयेत् स भक्तियोगं लभते , तेन मामाप्नोतीति शेषः। अनेन ज्ञानभक्तिद्वारेण भगवत्प्राप्तिरित्युक्तं भवति॥ ५२॥

देवस्वापहरणे महान् दोष इत्याह **य इति**॥ ५३॥ न केवलं प्रतिमादिपूजाकर्तुरुक्तं फलम् (किन्तु) साहाय्यकर्तॄणां यथायोग्यं फलं भवतीत्याह **कर्तुरिति**। सारथेः कार्यहेतोः[2] प्रेत्य कर्मणां फलभागिनो भवन्तीत्यर्थः। फलतारतम्यमाह **भूय इति**। भूयसि महति तत् फलं भूयो भवति॥ ५४॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य सप्तविंशोऽध्यायः॥**

---

१. कथं कस्य कदेष्यते इति हृषीकेशतीर्थपाठः।

२. सारथेः सदा प्रेरकस्य, हेतोः साहाय्यकारिण इति सुधीन्द्रतीर्थाः।

## ॥ अथ अष्टविंशोध्यायः ॥

**श्रीभगवानुवाच -**

**परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।**
**विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥ १ ॥**

**परस्वभावकर्माणि यः प्रशंसति निन्दति ।**
**स आशु भ्रंशते स्थानादसत्याभिनिवेशतः ॥ २ ॥**

---

हरेः परमस्वातन्त्र्यं तदधीनसत्ताकत्वेन जगतोऽत्यन्तमस्वातन्त्र्यमेतादृशतत्वज्ञानेन सत्यबन्धनिवर्तनं नाभेदज्ञानेनेत्यादिकमुपदिशत्यस्मिन्नध्याये। तत्रादौ दुर्जनस्वभावतत्कृतपापकर्मा-प्रशंसननिन्दाभ्यां सज्जनस्वभावतदनुष्ठितपुण्यकर्मस्तुत्यनिन्दाभ्यां चावश्यमवस्थेयं पुरुषेणेति शिक्षयति **परस्वभावेत्यादिना** । परोऽरिपरमात्मनोरित्यतः परः शत्रुः, जीवब्रह्मणोर्वैलक्षण्यसत्यताया असहमानत्वादिति शेषः। तस्य यः स्वभावः यानि च तदाचरितानि पापकर्माणि तानि सर्वाणि न प्रशंसेत् न प्रशंसयेच्च। निन्दयेत् निन्देच्च। किञ्च परः परमात्मा, परे श्रीनारायणे स्वभाव आत्मा मनो यस्य स तथा। यद्वा परो लोकबाह्यो ज्ञानी तस्य स्वभावः तेनाचीर्णानि पुण्यकर्माणि च इतरैर्न गर्हयेत् स्वयं न गर्हेच्च। प्रत्युत प्रशंसेत् प्रशंसयेच्च। एतादृशः पुरुषो दुर्लभ इति तत्राह **विश्वमिति**। प्रकृत्या चेतनया पुरुषेण हिरण्यगर्भेण सह स्थितं विश्वमेकेन परमात्मना आत्मकं व्याप्तमेकात्मकं पश्यन् स यथार्थज्ञानी भवितैव, अतो न दुर्लभः। अनेन तथा पश्यत एव यथार्थज्ञानं भवतीत्युक्तं भवति। "न प्रशंसेत निन्द्यांस्तु प्रशंस्यान्नैव निन्दयेत्। उभयं यः करोत्येतदसत्यात् स पतत्यधः। यः प्रशंस्यान्न प्रशंसेन्निन्द्यो येन न निन्द्यते। सोपि तद्वदधो याति यतोऽरिवदुदासकः" इति वाक्यात् परस्वभावकर्मणां प्रशंसा निन्दा च न कार्येति प्रतीतार्थः किं न स्यादितीयं शङ्का दूरोत्सारितेति ज्ञातव्यम् ॥ १ ॥

उक्तार्थानङ्गीकारे बाधकमाह **परस्वभावेति** । परोऽन्यो हरिविमुखत्वेन निन्द्यः तस्य स्वभावकर्माणि यः स्तौति, परो वरणीयः स्तुत्यः श्रीहरिपरायणः तस्य स्वभावकर्माणि यो निन्दति स पुरुषः असत्याभिनिवेशतो मिथ्याज्ञानाभिनिवेशतः स्वस्थानाद् भ्रंशते अन्धंतमो यातीत्य-न्वयः। यः प्रशंस्यानित्यादेरस्याप्युक्त एवार्थः ॥ २ ॥

**तैजसे निद्रयाऽऽपन्ने पिण्डस्थो नष्टचेतनः ।**
**मायां प्राप्नोति मृत्युं वा तद्धि नानार्थदं मनः ॥ ३ ॥**

**किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।**
**वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥**

---

असत्याभिनिवेशे निमित्तमाह **तैजस इति** । निद्राशब्देन निद्रा सुनिद्रेति द्विविधा निद्रोच्यते । तत्र निद्रा स्वापापरपर्याया सुनिद्रा मरणकालीना । तथा चैवमस्य श्लोकस्यार्थः । तैजसे तैजसाहंकारकार्ये श्रोत्रादीन्द्रियगणे मनसि च निद्रया दैनन्दिनस्वापेनापन्ने सुप्ते सति पिण्डस्थो जीवः नष्टचेतनः सुप्तो भवति । तदा स्वापे ईश्वरेच्छाप्रबोधितमनोगतसंस्कारजन्यत्वान्मायां स्वप्नं प्राप्नोति । सुनिद्रयाऽऽपन्ने मृत्युं मरणं प्राप्नोति । नानाविधसंस्काराविष्टं मनः स्वप्नदशायां नानार्थदं नानार्थप्रदं दृष्टं हि । जाग्रदवस्थायां किमु वर्णनीयमिति भावेनाह **तदिति** । तन्मन एव नानार्थदं नानाविधविषयप्रत्यायकं हि प्रसिद्धत्वात् । (अतः) मन एव मिथ्याज्ञाननिमित्तमिति भावः । ''तैजसाहङ्कृतेर्जात इन्द्रियग्रामके परात् । निद्रया वशमापन्ने जीवः स्यान्नष्टचेतनः । अतो विष्णोर्वशे सर्वं तेन व्याप्तमिदं स्मरेत्'' इति । ''निद्रा चैव सुनिद्रा च द्विधा निद्रा प्रकीर्तिता । तत्र निद्रा भवेन्नित्या सुनिद्रा मृत्युकालगा'' इति । मनोमात्रस्वरूपत्वात् स्वप्नो मायेति कथ्यते'' इत्येतैर्वाक्यैरुक्त एवार्थोऽङ्गीकार्य इति ॥ ३ ॥

अवस्तुनो नित्याप्रतिहतवस्त्वजानतो द्वैतस्याशुभस्य मिथ्याज्ञानिनः पुंसः आशीर्वादादिना किं भद्रं भवति । कालगुणात् स्वाद् गुणाद्वा भवति चेदपि तत् कियदेव अत्यल्पमेव । भद्रवदभद्रमपि विशेषापादकं न भवतीत्याह **किमभद्रमिति** । नित्यमशुभात्मनस्तस्य विशेषतोऽभद्रं किम् । न किमपि । भवति चेदपि तत् कियदेव । यत्नवतोपि मायावादिनः स्वयोग्यादाधिक्येन न भवतीति यस्मात् तस्मादशुभं जीवमुद्दिश्य सज्जनेन वाचा उदितमुक्तं मनसा शुभादिकं भवत्विति ध्यातं चिन्तितमपि अनृतमसत्यमेव । विशेषापादकं न भवतीत्यर्थः । अनेन वैष्णवेनावैष्णवमुद्दिश्य तत्प्रशंसादिवदाशीर्वादादिकं न कर्तव्यमित्युक्तं भवति । ''उच्यते ध्यायते वापि कुनरं प्रति यच्छुभम् । असत्यमेव भवति स्वभावोऽसत्वमेव यत्'' इचि वचनात् । द्वैतनिषेधोऽत्र क्रियत इत्यन्यथाव्याख्यानं चशब्दसूचितेन ''एकं तु शुभमुद्दिष्टमशुभं द्वैतमुच्यते । पुंसोऽशुभस्य किं भद्रं किमभद्रं विशेषतः । सर्वदाऽशुभरूपत्वाद् विशेषोऽत्यल्प एव हि'' इति वाक्येन निरस्तत्वादुपेक्षणीयमिति भावः ॥ ४ ॥

**छायाप्रत्युदकाभासा ह्यसन्तोऽप्यर्थकारिणः ।**
**एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥**

**आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।**
**त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ ६ ॥**

---

ननु स्वभावतोऽशुभजीवस्य सदाप्यशुभरूपत्वात् अन्यस्माच्छुभाशुभयोरत्यल्पत्वात् तद्विषयशुभवचनादेरप्यनृतत्वात् अशुभदेहादिकमपि नाशुभकारणमिति तत्राह **छायाप्रत्युदकाभासा इति** । हि शब्दो याथार्थ्ये ।यथा छायाप्रत्युदकाभासा जीवमपेक्ष्यासन्तोऽपि निश्शक्ता अपि अर्थकारिणः अर्थक्रियाकारिणो दृष्टाः एवं देहादयो भावा अमङ्गला अप्यामृत्युतः अन्धन्तमःप्रवेशपर्यन्तं भयमित्युपलक्षणं शुभाशुभफलं यच्छन्ति। अशुभजीवानामिति शेषः। ''नीहारः प्रत्युदं चैव धूम्रमित्यपि शब्द्यते'' इत्यतः प्रत्युदकं नीहारः । आभासाः सूर्यकादयः । नेदं रजतमितिवन्नेयं छायेति बाधकप्रत्ययानुदयादेतदृष्टान्तेन न देहादीनां मिथ्यात्वं विवक्षितं किन्तु निःशक्तत्वमेव। ''व्यपेक्ष्य जीवं देहादि निःशक्तत्वादवस्त्वपि। पुनः शुभाशभनॄणां यच्छेदेव शुभाशुभम्। छायानीहारकाभासा निःशक्ता अपि कार्यदाः। एवं शुभादिदेहादेर्भवेत् कार्यं शुभादिकम्'' । एतद्वचनात् भयमभयमिति वा पदच्छेदः ॥ ५ ॥

सत्यसङ्कल्पेन सत्यकर्मणा निरस्तकुहकेन परमेश्वरेण सृष्टत्वादिदं सर्वं सत्यं न मिथ्याभूतमिति भावेनाह **आत्मैवेति**। प्रकृत्याद्युपसर्जनं विना सर्जनादिकं कर्तुमीश्वर इत्यर्थे एवशब्दः। परमात्मैवेदं सर्वं सृजति त्राति हरति आत्मा स्वयमेव स्वात्मनैव सृज्यते त्रायते ह्रियते च। दीपाद् दीपान्तर-वत्। ईश्वर इत्यनेन कर्मकर्तृत्वविरोधं परिहरति। प्रभुरित्यनेन मानुषेष्वेतावन्तं कालं स्थास्यामीति चिन्तनमेवात्मनस्त्राणं नान्यत्, अखण्डस्वामित्वात् समर्थत्वाच्चेति सूचयति । ''दीपाद् दीपान्तरं यद्वत् सृष्टिरीशस्य कीर्त्यते । एतावत्कालमासिष्ये मानुषेष्विति चिन्तनम्। विष्णोस्त्राणं समुद्दिष्टं स्वस्यैव स्वेच्छयैव तु। दीपे दीपान्तरस्यैव ह्येकीभावश्च संहृतिः'' । इति वचनाद् अविद्ययाऽऽक्षिप्तमतिः स्वात्मानं सृजतीत्यादि दुर्मतमपास्तं बोद्धव्यम्। ह्रियत इत्यनेन दीपान्तरस्य दीप इवैकीभावः संहार इति दर्शयति। ''पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'' इति श्रुतेः ॥ ६ ॥

**तस्मान्न ह्यात्मनोऽमुष्मादन्यो भावो निरूपितः ।**
**निरूपितेयं त्रिविधा निर्मूला मतिरात्मनि ॥ ७ ॥**

**इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ८ ॥**

**एतद् विद्वान् मदुदितं ज्ञानविज्ञाननैपुणः ।**
**न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ९ ॥**

---

ननु हिरण्यगर्भादेः स्रष्टृत्वादिवादिनि वेदे जाग्रति कथं हरेरेव स्रष्टृत्वादिकमवधार्यत इति शङ्कां धिक्कुर्वन्निव परिहरन्नुपसंहरति **तस्मादिति** । यस्मान्निरवकाशप्रमाणबलाद् हरिरेव सृष्ट्यादिकर्ता तस्मादमुष्मादात्मनो हरेरन्यो भावः सृष्ट्यादिकर्ता न निरूपितः कुत्रापि वेद इत्यन्वयः । ननु पितेव पुत्रादेर्हरेरपि सृष्ट्यादिकर्ता अन्यः किं न स्यादित्यतो वाह **तस्मादिति** । यस्मादिति । यस्मात् स्वात्मनैव स्वयं सृज्यत इत्यादिकं प्रामाणिकं तस्मादात्मनः परमेश्वरस्य भावः सृष्ट्यादिकर्ता अमुष्माद् हरेरन्यो नास्ति । ''सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम् । तद् यः करोति पुरुषः स भाव इति कीर्तितः'' इति वचनाद् भावशब्दस्य सृष्ट्यादिकर्तृवाचकत्वं सिद्धम् । अनेनोक्तशङ्कायाः कः परिहार आयात इति तत्राह निरूपितेति । अन्येन सृष्टिस्थितिसंहारा इति त्रिविधा मतिः विद्वद्भिः नैव निरूपिता निर्मूला प्रमाणवर्जिता । ''अन्यस्मात् सृष्टिसंहारौ स्थितिश्च परमात्मनः । निरूपिता न विद्वद्भिः प्रमाणाभावतो हरेः'' इति । विद्वद्भिरिति विशेषणादासुरमत एव तथा प्रतिभानमिति ज्ञायते ॥ ७ ॥

परमात्मनः सत्वादिगुणरहितत्वादन्यतः सृष्ट्यादिकं न युक्तं सगुणस्य गुणबद्धत्वादन्यतो युज्यत इत्याशयेनाह **इदमिति** । मायया हरेरिच्छया कृतमिदं त्रिविधं सृष्टिस्थितिसंहारा इति त्रित्वसंख्याविशिष्टं आत्मनि जीवे गुणमयं सत्वादिगुणाधीनं विद्धि । न परमात्मनीति शेषः । ''गुणसम्बन्धयोग्यानामुत्पत्त्याद्या स्युरन्यतः । सर्वदा निर्गुणस्यास्य सर्गाद्याः स्युः कुतोऽन्यतः'' इत्यतो विशेषः कल्प्यत इति । अनेन सत्वादिगुणेषु कारणत्वेन सिद्धेषु (सत्सु) कथमन्यो भावो नास्तीति समञ्जसं स्यादितीयमाशङ्का परिहृता । विद्धीति पुरुषार्थोपयोगित्वादिदमेवावश्यं ज्ञेयमिति निर्धारयति । माययेत्यनेन गुणानामचेतनत्वेन स्वतः प्रवृत्त्यनुपपत्तेः कार्येषु प्रवर्तकत्वेन हरेर्मुख्यकारणत्वमवधृतम् ॥ ८ ॥

परस्वभावेत्यादिना शिक्षितज्ञानफलमाह **एतदिति** । मदुदितमेतद् विद्वान् ॥ ९ ॥

**प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ।**
**आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥ १० ॥**

**उद्धव उवाच -**

**नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ।**
**अनात्मस्वदृशोरीश कस्येयमुपलभ्यते ॥ ११ ॥**

**आत्माव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ।**
**अग्निवद् दारुवदपि देहः कस्येति संसृतिः ॥ १२ ॥**

**श्रीभगवानुवाच -**

**यावद् देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ।**
**संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १३ ॥**

---

सूर्यवदित्युक्तं दार्ष्टान्तिके कथमित्यतो विवृणोति **प्रत्यक्षेणेति** । प्रत्यक्षादिप्रमाणबलेनेदं गुणमयमाद्यन्तवत्त्वादसद् असमर्थमस्वतन्त्रमिति ज्ञात्वा । ''असमर्थमसत् प्रोक्तं समर्थं सत् प्रकीर्तितम्'' इति वचनात् असत्वं न शून्यत्वमत्राभिप्रेतम् । इह जगति निःसङ्गो निर्लेपः । निगमेन वेदेन । आत्मसंविदा साक्षिणा ॥ १० ॥

स्वप्रकाशत्वेन जडत्वेन देहपरमात्मनोः संसारासंभवं जानन्नप्युद्धवो विवेकार्थं लोकदयालुः पृच्छति **नैवेति** । निःसङ्ग इत्यनेन प्रस्तुतः सङ्गलक्षणः संसारः कस्य आत्मनो हरेरुत देहस्य । द्रष्टृ-दृश्ययोरुभयोरपि न संभवति । अनात्मस्वदृशोः अनात्मत्वाज्जडत्वाद् दृश्यस्य, स्वदृक्त्वात् स्वयंप्रकाशत्वाद् द्रष्टुः । अतः कस्येयं संसृतिरुपलभ्यते ॥ ११ ॥

देहस्थस्य हरेरित्यपि न युज्यत इत्याह **आत्मेति** । अग्निवदीश्वरः दारुवद् देहः । जीवपक्षस्तु परमात्मकोटावन्तर्भूतत्वान्न पृथगुक्तः । कस्येति पुनरुक्तिरवश्यपरिहारवक्तव्यार्था ॥ १२ ॥

जीवस्यैव संसृतिरिति भावेनाह **यावदिति** । आत्मनो जीवस्य यावद् देहेन्द्रियप्राणैः सन्निकर्षणं सम्बन्धः तावत् संसारः । कस्य जीवस्येत्यत उक्तम् **अविवेकिन इति** । नित्यानन्दादपार्थोऽपि । अविवेकिन इति विशेषणाद् विवेकिनो मोक्षहेतुत्वात् फलवानपि । ''फलवान् मोक्ष-हेतुत्वान्नित्यानन्दादपार्थकः । जीवात्मनस्तु संसारः स्वप्रवञ्चश्चलत्वतः'' इति वचनात् ॥ १३ ॥

**अर्थेऽप्यविद्यमानेपि संसृतिर्न निवर्तते।**
**ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा॥ १४॥**

**यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत्।**
**स एव प्रतिबुद्धस्य न वै मोहाय कल्पते॥ १५॥**

**शोकहर्षभयक्रोधलोभमोहस्पृहादयः।**
**अहंकारस्य दृश्यन्ते जन्ममृत्युश्च नात्मनः॥ १६॥**

---

संसृत्यभावस्यैव फलरूपत्वान्निरर्थ एव संसार इत्यवधारयति **अर्थेऽपीति**। अपिशब्दोऽल्पफलार्थः। ''उच्यते विफलत्वेन यदत्यल्पफलं भवेत्'' इति वचनात्। अर्थेऽविद्यमानेपि अस्मात् संसारात् प्रयोजनाभावेपि पुंसः संसृतिर्न निवर्तते। तत्रेदं निमित्तं ध्यायतो विषयानिति। कथमिव। अस्य स्वप्नदर्शिनो यथाऽनर्थागमः प्रयोजनविधुरव्याप्तिर्भवति[१]। अत्रापि निमित्तं **ध्यायत इति**। यथा स्वप्नार्थानामस्थिरत्वेपि निरन्तरविषयानुस्मरणसंस्कारसन्तत्याऽनर्थागमो न निवर्तते एवं संसारोपि॥ १४॥

अज्ञानिन एव संसारोऽनर्थकरो न ज्ञानिन इत्याह **यथाहीति**। अप्रतिबुद्धस्य स्वप्नावस्थामास्थितस्य यथा प्रस्वापो बह्वनर्थकृत् चोराद्यनर्थप्रापकः स एव स्वप्नार्थः प्रतिबुद्धस्य न मोहाय कल्पते एवं संसृतिरज्ञानिनामनर्थकृत्, सैव ज्ञानिनां मोहाय नैव। विषयलोलुपत्वेन दुर्जनस्याफलः, सज्जनस्य स्वरूपानन्दापेक्षया अफलोपि मज्ज्ञानेन स्वरूपानन्दसाधनत्वादल्पफल इति हेयः संसार इत्यवधारणार्थं पुनर्वचनमिति भावः॥ १५॥

जीवस्यापि संसार आभिमानिक एव न स्वाभाविकः, अन्यथा तन्निवृत्तिसाधनविधानानुपपत्तिरित्याशयेनाह **शोकेति**। शोकादयो जन्म मृत्युश्च अहंकारस्य साकाशाज्जीवस्य दृश्यन्ते न स्वतः। परमात्मनस्त्वनभिमानात् सुतरामसम्भव इत्यर्थः। अहंकारात्तु संसारो भवेज्जीवस्य न स्वतः। कुतश्चिदानन्दतनोः स्वरूपेच्छायुतस्य सः'' इत्यनेन परमात्मन एव निषेधो न जीवस्येत्येतन्निरस्तम्॥ १६॥

---

१. प्रयोजनविधुरस्यापि भवतीति पाठः स्याद्वा ?

**देहेन्द्रियप्राणमनोभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः ।**
**सूत्रं महानित्युरुधेह गीतः संसार आधावति कालतन्त्रः ।। १७ ।।**

**अमूलमेतद् बहुरूपरूपं मनोवचःप्राणशरीरकर्म ।**
**ज्ञानासिनोपासनया शितेन च्छित्त्वा मुनिर्गां विचरत्यतृष्णः ।। १८ ।।**

**ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ।**
**आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ।। १९ ।।**

---

कया युक्त्या जीवस्यैव संसार इति तत्राह **देहेति**। देहेन्द्रियप्राणमनसां सङ्गतो अभिमानो यस्य स तथा। सर्वेषामन्तः स्थित्वा सर्वमादत्त इत्यन्तरात्मा च। गुणैः कर्मभिरारब्धा मूर्तियस्य स तथा। सूत्रं महानित्यधिकारनामभिर्बहुधा पुराणेषु गीतश्च कालतन्त्रः कालाभिमानिदुर्गाधीनो जीवः पुरुषो हिरण्यगर्भोपि संसार आधावति किमुतान्ये जीवा इति कैमुत्यन्यायलक्षणया युक्त्या जीवस्यैव संसार इति निश्चीयते। ''संसारयुग् यद् ब्रह्मापि सर्वजीवेश्वरेश्वरः विष्ण्वधीनः सदा ज्ञानी किमुतान्येऽल्पचेतनाः'' इत्यनेन जीवोपाध्यवच्छिन्नस्य परमात्मनः संसार इति मतं निरस्तमिति ज्ञातव्यम्।। १७।।

नन्वेवंप्राप्तसंसारस्य समुच्छेदः कथंकारं स्यादत्राह **अमूलमिति**। मुनिः निरन्तरानुस्मरणासमर्थः पुरुष एतत्संसारकारणमज्ञानं मदुपासनया जातत्वान्निशितेन ज्ञानेन च्छित्त्वा पुनस्तत्र अतृष्णः निःसङ्गो भूत्वा गां विचरति, यावच्छरीरनिपातमिति शेषः, इत्यन्वयः। यदज्ञानेनोप्तन्नं तज्ज्ञानेन निवर्तत इति तत्कारणमाह **अमूलमिति**। विष्णुकारणककर्ममूलम्। बलवत्कारणजन्यस्य निवृत्तिः कथमिति चोद्यमप्यनेन परिहृतम्। ज्ञानस्यापि तत्कारणकत्वात्। अज्ञानस्य तत्कारणकत्वे कथितं युक्तं तदेव कथमित्यत उक्तं **बहुरूपेति**। मनआदिषु सन्निहितेन बहुरूपेण तेन रूप्यते तददृष्टानुगुणं निरूप्यते प्रेर्यत इति बहुरूपरूपम्। मनोवचःप्राणशरीराणि कर्म विषया यस्य स तथा। अहं गन्ता वक्ता इत्याद्याकारेण जायमानमित्यर्थः।। १८।।

ज्ञानासिश्च किमाकारो निशितः स्यादित्यतस्तद्विषयप्रकारमाह **ज्ञानमिति**। सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुतेरखण्डं ब्रह्मैव विजानीहीत्यन्वयः। कथम्। अस्य जगत आद्यन्तयोः केवलं स्वतन्त्रमेव वर्तते। यच्च कालः पूर्णगुणात्मत्वात् फलपाचकत्वात् (च)। यच्च हेतुर्निमित्तकारणम्। यच्च जगतो

**यथा हिरण्यं स्वकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य।**
**तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत्॥ २०॥**

---

मध्येऽपि तदेव तत्त्वेन वर्तते नान्यथा। यच्च विविक्तत्वाद् विवेकः। यच्च सर्वं निगमयति प्रापयति स्वाधीनमिति निगमः। यच्च सर्वैरालोच्यत्वात् तपः, तप आलोचन इति धातुः। प्रतिप्रति अक्षेष्विन्द्रियेषु स्थितत्वात् प्रत्यक्षम्। आचार्यसम्प्रदायसिद्धत्वादैतिह्यम्। अथ वेदादिप्रमाणसिद्धत्वादनुमीयत्वादनुमानम्। अनेनास्मिन्नर्थे प्रत्यक्षादिप्रमाणमुक्तं भवति॥ १९॥

जगत आदिमध्यावसानेषु ब्रह्मण एवाप्रतिहतं स्वातन्त्र्यं सोदाहरणं स्पष्टयति **यथेति**। यथा हिरण्यं रथाद्युपरि स्वकृतमतिचित्रितं पुरस्तात् चित्रतायाः पूर्वं[१], रथादेः पृथगिति शेषः। पश्चाच्च सर्वस्य हिरण्मयस्य द्रव्यस्य हिरण्यत्यागलक्षणनाशान्तरं च पृथगेव। मध्ये च स्वर्णखचितदशायां तदेव स्वर्णरथः स्वर्णशङ्खः इत्यादि नानाव्यपदेशैर्व्यवहारयोग्यम्। तदेव हिरण्यं दार्वादिभ्यः पृथगेव। तद्वत् तथा स्वतन्त्रोऽहमस्य जगतोऽप्यादावन्ते मध्ये सुरनरादिनानाव्यपदेशैस्तत्तदन्तर्यामितया मुख्यतया व्यवहार्यः पृथगेव स्थितः। ''रथोपस्थे परिकरात् पूर्वं दारुमयाद् रथात्। सुवर्णव्यवहाराय मुख्यं रथपरिष्कृतम्। मध्ये चान्ते रथोपस्थान्निष्कृष्य पृथगास्थितम्। यद्वदेवं हरिः साक्षाज्जगदेहात् पृथक् स्थितः। पूर्वं जगति संस्थश्च जगदन्ते पृथक् स्थितः। स एव मुख्यो जगतः स्वातन्त्र्यात् परमेश्वरः'' इति। तत्तन्नियामकस्यैव नाम सर्वं सुरादिकम्। तत्सम्बन्धादुदीर्यन्ते व्यवहृत्यै सुरादिषु'' इति च। ''एकलं केवलं चेति स्वतन्त्रमभिधीयते। स्वतन्त्रस्तु हरिः साक्षात् परिष्कृतहिरण्यवत्'' इति च। सुरनराद्युपाधीनां नानात्वेप्यहमेक एव। यथा हिरण्यमकृतं पिण्डीकृतं कुण्डलाद्याकारेण विविधं पुनरेकमेव तथाऽहमपि। ''यथा सुवर्णमकृतं क्रियते कुण्डलादिकम्। पुनरेकीभवत्यद्धा तद्वद् विष्णुरजोपि सन्। सुराद्यन्तः स्थितो भूत्वा पुनरेकीभवेद् विभुः'' इति वचनात्। किञ्च दार्वादि अल्पफलं सुवर्णमेव तस्मिन् (सुवर्णरथादौ) निमित्तकारणं महाफलं तथा जगदल्पफलमस्वतन्त्रं च, नाहं तथा किन्तु महाफलहेतुः स्वतन्त्रश्चेति। ''प्रत्येकं न तु दार्वादि स्वतन्त्रं विक्रियागतम्। महाफलं स्यात् स्वर्णं तु स्वतन्त्रं विक्रियोपगम्। तद्वत् स्वतन्त्रो भगवान् प्रवृत्तावन्यदन्यथा'' इति वक्यात्॥ २०॥

---

१. स्वकृतमलंकृतमलङ्कारात् पूर्वं रथादेः पृथगिति सुधीन्द्रतीर्थाः।

**विज्ञानमेतत् त्रिपदस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ ।**
**समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥ २१ ॥**

**न यत् पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ।**
**भूतं प्रसिद्धं च परेण यद्यत् तदेव सत् स्यादिति मे मनीषा ॥ २२ ॥**

**अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः ।**
**ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥२३॥**

---

इतोपि मोक्षादिदातृत्वेन निरुपचरितं स्वातन्त्र्यं हरेरेवेत्याह **विज्ञानमिति** । अङ्ग उद्धव । एतद् ब्रह्म विज्ञानं निर्दोषज्ञानस्वरूपम् । कुतः । त्रिपदस्थं त्रीनुत्तमाधममध्यमान् जीवान् त्रिषु पदेषु मोक्षादिषु स्थानेषु स्थापयतीति । मोक्षसंसारतमआख्यपदत्रयदातृ इत्यर्थः । चेतनानामपि ज्ञानदातृत्वेन मोक्षदातृत्वं किं न स्यादित्याशंक्य तत्सत्तादेर्यदिच्छाधीनत्वेन प्रतीतिः तदेव विज्ञानं, विज्ञानमानन्दं ब्रह्मेति श्रुतेरिति भावेनाह **गुणत्रयमिति** । येनेति तृतीया षष्ट्यर्थे । येन यस्य तुर्येण तुर्यस्य जाग्रदाद्यवस्थातीतस्य विशुद्धज्ञानमूर्तेः समन्वयेन इच्छायाः सत्वेनानुग्राहकलक्षणाभिमुख्येन, गुणत्रयादिकं सर्वमस्तीति शेषः । व्यतिरेकतः (इच्छायाः) असत्वे नास्ति तदेव केवलमित्युक्तम् । केवलपदं सर्वत्रानुवर्तनीयम् (पूर्वश्लोकतः) । तत् केवलमेव सत्यं सदाऽस्तित्वेन स्वतन्त्रमेव । सत्यपदं चानुवर्तनीयं विज्ञानं सत्यं त्रिपदस्थं सत्यमिति । गुणत्रयं सत्वादि कारणं महदहंकाराद्युपादानं, कार्यं देहादि, कर्तृ कालकर्मादिनिमित्तकारणम् । ''स्वातन्त्र्यमेव सत्यत्वं विष्णोरन्यस्य सत्यता । प्रवाहतः सदाऽस्तित्वं पुंप्रकृत्योः सदाऽस्तिता'' इति वचनात् । ईश्वरेच्छासदसद्भावाभ्यामस्तित्व-नास्तित्वे इति तस्य स्वातन्त्र्यमनुपहतमिति ॥ २१ ॥

ननु ब्रह्मवदितरस्य स्वातन्त्र्यसंभवे कथं तस्य स्वातन्त्र्यमनुपहतमिति तत्राह **न यदिति** । यत् (जगत्) उत्पत्तेः पुरस्तात् केवलं न, यत् नाशात् पश्चादुत केवलं न, यत् मध्ये च स्थितिकाले च केवलं न, यत् परेण भूतमुत्पन्नं यत् परेण प्रसिद्धं सत्तादिमत् तत् व्यपदेशमात्रं स्वतन्त्रमिति वाङ्-मात्रम् । अतस्तद् ब्रह्मैव सत् परमं सत्यं स्यादिति मे मनीषा । '' तत् स्वातन्त्र्येण नैवास्ति यदुत्पत्तिविनाशवत् । स्वातन्त्र्येणास्तिता तस्य यत् सत्ताज्ञानदं सदा '' इत्यनेन कालत्रयसत्वप्रतिषेधेन सदसद्विलक्षणं जगदिति निरस्तम् ॥ २२ ॥

नन्वसच्चेन्न प्रतीयेत सच्चेन्न बाध्येतेत्यन्यथानुपपत्तिप्रमाणसद्भावात् सदसद्वैलक्षण्यापलापो न युज्यत

**एवं स्फुटं ब्रह्म विविच्य हेतुभिः परापवादेन विवेकबुध्या।**
**छित्वाऽऽत्मसन्देहमुपारमेत स्वानन्दतुष्टोऽखिलकामुकेभ्यः।।२४।।**

**नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुजलं हुताशः।**
**मनोऽन्नमात्रं धिषणा च सत्वमहंकृतिः स्वं कृतिरर्थसाम्यम्।। २५ ।।**

---

इत्याशंक्य प्रपञ्चस्यासत्वोक्त्या स्वातन्त्र्यमेव निषिध्यते , न तु प्रतीत्यन्यथानुपपत्त्याऽनिर्वचनीयत्वं, परमार्थसत्वाभावेन नाशोपपत्तेश्च। सच्चेन्न बाध्येतेत्यस्याप्यन्यथोपपत्तिरिति भावेनाह **अविद्यमान इति**। सदसद्वैलक्षण्यमनुपपन्नं चेत् जगदसदेव स्यादिति शून्यवादिमतं वाऽनेन प्रत्याह **अविद्यमान इति**। ब्रह्मणो द्वितीयो वैकारिको विकारयोग्यो राजससर्गः रजोगुणसम्बन्धी सर्गो यस्य प्रपञ्चस्य स तथा एषः प्रपञ्चः अविद्यमानोऽपि असन्नप्यस्वतन्त्रोऽपि अवभासते स्वतन्त्रमिति, अज्ञानामिति शेषः। यतःस्वयंज्योतिर्ब्रह्म परमार्थसत् स्वतन्त्रं विभाति, विदुषामिति शेषः। इतोऽप्यविद्यमानत्व-मस्वतन्त्रत्वमेव नान्यदिति भावेनाह **अत इति**। ब्रह्म मूलप्रकृतिः, श्रोत्रादीन्द्रियाणि, अर्थाः शब्दादयः, आत्मा जीवः, विकारा इन्द्रियाभिमानिदेवाः, एवमादिभिश्चित्रं विचित्रं जगदतो ब्रह्मत एव विभातीत्यतो नानिर्वाच्यं न शून्यमित्यर्थः। तस्य भासा सर्वमिदं विभातीति श्रुतेः। ''अविद्यमानता नाम जगतः परतन्त्रता। यथाऽशक्तस्तु पुत्रादिरसन्नित्युच्यते जनैः'' इति, ''जगतो नास्तिता सैव या पराधीनता सदा। अभावस्तु कुतस्तस्य यद् विभातीह सर्वदा'' इति प्रमाणद्वयेन कल्पित एवायमर्थः न स्वकपोलकल्पितः।। २३ ।।

एवं तावज्ज्ञातव्यांशं ज्ञात्वा मुनिना परं कर्तव्यं किमित्यत्राह **एवमिति**। एवमुक्तप्रकारेण विवेकबुध्या सर्वस्माद् वैलक्षण्यज्ञानेनानुगृहीतहेतुभिः निर्दोषोपपत्तिभिः परापवादेन परस्यापवादेन नेदं नेदमिति निषेधमुखेन, एष आत्मा नेति नेतीति श्रुतेः, स्फुटं ब्रह्म विविच्य पृथक्कृत्य ज्ञात्वा आत्मसन्देहं मनसि स्थितं संशयं च्छित्त्वा आखिलकामुकेभ्यः, अनल्पतृष्णाजननशीलेभ्यो विषयेभ्य उपारमेत। शब्दादिविषयोपरमे सुखानुत्पत्तिरत्राह **स्वानन्दतुष्ट इति**। स्वानन्दानुभवेनालंबुद्धिं प्राप्तः। अनेन जीवपरमभेदज्ञानमेव मुक्तिसाधनं नाभेदज्ञानमतः श्रेयोऽर्थिभिरभेदमतं सर्वथा हेयमिति दर्शितम्।। २४ ।।

परापवादप्रकारं विवृणोति **नात्मेति**। अत्र नेति प्रत्येकं सम्बन्धितव्यम्। पार्थिवं वपुः शरीरम् आत्मा परमात्मा न भवति। इन्द्रियाणि न हि। देवा इन्द्रियाभिमानिनो न हि। वायुजलं हुताशः

**समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेत् तत्सुविविक्तधाम्नः ।**
**विक्षिप्यमाणैरुत किं नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥ २६ ॥**

**यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वा त्रिगुणैर्न सज्जते ।**
**तथाऽक्षरं सत्वरजस्तमोमलैरसङ्गतं संसृतिहेतुभिः परम् ॥ २७ ॥**

---

वायुजलहुताशनकृतशरीरः असुः मुख्यप्राणश्च न। ''वायुरेव स्वतः प्राणस्तत्रस्थे उदतेजसी। उदेन तेजसा चैव प्राणस्य हि कृतं वपुः'' इति वचनात्, ''प्राणस्य वायुरूपस्य भूतत्रयकृतं वपुः। यतो हि पार्थिवं नात्र खं चात्यल्पमुदाहृतम्'' इत्यस्माच्चोक्तं युक्तम्। मन आत्मा न। अन्नमात्रं अन्नं पृथिवी मात्रं गन्धादिमात्रा च न। एकवद्भावविवक्षया ह्रस्वत्वम्। धिषणा प्राकृतबुद्धिश्च न। सत्वं मूलबुद्धिः अहंकृतिरहंकारतत्वं खं महाकाशं च न। कृतिः दर्शनादिक्रिया च न। अहं शृणोम्यहं स्पृशाम्यहं पश्यामीति सर्वार्थेषु समानत्वादहंकारोऽभिमानविशेषोऽर्थसाम्यं चात्मा न भवतीत्यर्थः। ''नहि देहो नेन्द्रियप्राणमनोबुध्यहमादयः। विष्णुश्चिदानन्दतनुः स हि जीवाधिपः सदा'' इति वचनात्। स वा एष आत्मा नेतिनेतीति श्रुत्यर्थ एव विव्रियते ॥ २५ ॥

इन्द्रियसमाधानविक्षेपयोर्हरिप्रियाप्रियसाधनत्वेनोच्यमानत्वात् ताभ्यां हरेरपि गुणदाषौ स्यातां किमिति तत्राह **समाहितैरिति**। गुणात्मभिः शब्दादिविषयमनस्कैः पुरुषैः स्वविषयत्वेन समाहितैरेकाग्रचित्तत्वेन स्थापितैः करणैरिन्द्रियैः तत्सुविविक्तधाम्नः तेभ्य इन्द्रियेभ्यो विषयेभ्यश्च पृथग्भूतस्वरूपस्य प्राकृतेन्द्रियरहितस्य भगवतः को गुणो भवेत्। न कोपि। विषयेषु विक्षिप्यमाणैरितस्तत आकृष्यमाणैरिन्द्रियैः हरेः किं दूषणम्। न किमपि दूषणम्। अत्रोदाहरणमाह **घनैरिति**। आह्लादरूपैर्घनैरुपेतैः सर्वाह्लादगुणरूपस्य[1] रवेः किं भवेत्। न किमपि प्रयोजनम्। विगतैर्दोषोपि भवेत् किम्। न भवेदेव। यथा रवेर्गुणदोषाभावेपि अन्येषां घनैरुपेतैः छायया सुखं भवेत्, विगतैस्तापेन दुःखं भवेत् तथा समाहितकरणैः समाधानकर्तुः सुखं विक्षिप्तैर्दुःखं भवेदिति भावः। ''समाहितेपि जीवेन विक्षिप्ते वा न तु क्वचित्। विशेषो विद्यते विष्णोस्तथापि तु समाहिते। प्रीतो भवति वै नित्यं सर्वधर्मकृतोऽपि च'' इत्येतदुक्तार्थे मानम् ॥ २६ ॥

---

१. सर्वाह्लादगुणरूपस्येति क्वचित् कोशे नास्ति।

**तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत्।**
**मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत तमः कषायम्॥ २८॥**

**यथाऽमयोऽसाधुचिकित्सितो नृणां पुनः पुनः सन्तुदति प्ररोहन्।**
**एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसङ्गम्॥ २९॥**

**कुयोगिनो ये विहता ह्यन्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः।**
**ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम्॥ ३०॥**

---

ननु हरेरपि सत्वादिगुणकार्येषु देहादिषु स्थितस्य तत्कृतगुणदोषौ जीववत् किं न स्यातामित्याशंक्याकाशवदसङ्ग एव न दोषवानित्याह **यथेति**। यथा नभो वाय्वादीनां गुणैः स्पर्शादिभिर्न सज्जते तत्कृतविशेषवान्न भवति। वाशब्दश्चार्थः। अत्र नभसि गतागतैश्च देहादिभूत-कार्यैर्गुणैश्च। सत्वादिगुणतत्कार्याणामसारतया तदन्तरं वर्तमानमक्षरं ब्रह्म संसृतिहेतुभिः सत्वादि-गुणैस्तन्मयै रागादिदोषैश्च असङ्गतमसम्बन्धमेव। अत्र हेतुः **परमिति**। सत्वादिगुणेभ्य उत्तमत्वेन विलक्षणम्। अनेन निःसङ्गत्वेन मनःसमाधानासमाधानाभ्यां हरेर्गुणदोषाभावेपि विषयसङ्गाज्जीवस्य तौ स्यातामिति दर्शितम्॥ २७॥

तर्हि मुमुक्षोः साधनविधानं व्यर्थमिति न मन्तव्यम्। सर्वदोषाणां सङ्गमूलत्वात् स एव मुमुक्षुणा पुरुषेण निर्मूलनीय इत्याह **तथापीति**। हरेर्गुणदोषाभावेपि तावन्मायारचितेषु प्रकृतिनिर्मितेषु गुणेषु विषयेषु सङ्गः परिवर्जनीयः। कियन्तं कालम्। अन्यथा स्त्रीभिर्वा यानैर्वेत्यादि श्रुतिः सगुणविषया स्यादित्यतोऽवधिमाह **मद्भक्तीति**। दृढेन मद्भक्तियोगेन यावद् रजस्तमश्च तज्जनितं कषेण कर्षणेन अयते गच्छतीति कषायं पापं च निरस्येत। मुक्तिपर्यन्तमिति भावः। अय गताविति धातुः॥ २८॥

व्यतिरेके दोषमाह **यथाऽमय इति**। यथा नृणामसाधुचिकित्सित आमयः सम्यक् चिकित्साभावात् पुनःपुनः प्ररोहन् आमयिनं सन्तुदति, एवमपक्वकषायकर्म सर्वेषु विषयेषु सङ्गो यस्य तत् सर्वसङ्गं मनः कुयोगिनमपरिपक्वयोगयुक्तं पुरुषं विध्यति तस्य भगवद्ध्यानविघ्नं करोति, पुनः पुनर्विषयाभिलाषप्ररोहादिति भावः॥ २९॥

नन्वेवमपरिपक्वयोगवतामनादिकर्ममूलान्तरायविहतानां योगापरिपाकेन भगवदप्राप्तिरापतितेति तत्राह **कुयोगिन इति**। कुयोगिनो ध्यानपरिपाकरहिताः त्रिदशोपसृष्टैराधिदैविकैः, मनुष्यैर्वनितादि-

**करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपातात्।**
**न तत्र विद्वान् प्रकृतिस्थितोपि निवृत्ततृष्णः स्वसुखानुभूत्या॥ ३१॥**

**तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम्।**
**स्वभावमन्यत् किमपीह मानमात्मानमात्मस्थमतिर्न वेद॥ ३२॥**

**यदि स्म पश्यत्यसदिन्द्रियार्थं नानानुमानेन विरुद्धमन्यत्।**
**न मन्यते वस्तुतया मनीषी स्वप्नं यथोत्थाय तिरोदधानम्॥ ३३॥**

---

भिराध्यात्मिकैः, भूतैराधिभौतिकैरन्तरायैर्विहता हि यस्मात् तस्मात् तेऽपक्वयोगिनः प्राक् पूर्वजन्मनि कृतध्यानाभ्यासबलात् तत्वेन योगं ध्यानं युञ्जन्ति कुर्वन्ति। भूयो मत्प्रसादेन मामाप्नुवन्तीति शेषः। कर्मलक्षणतन्त्रसाधनं नानुतिष्ठन्तीत्यन्वयः। अतो मद्योगाभ्यासो न व्यर्थो न मदप्राप्तिश्चेति भावः॥ ३०॥

नन्वत्र कैश्चित् कर्मैव पूर्वाभ्यासवशैः क्रियते न योगोऽभ्यस्यते, कैश्चित् पूर्वाभ्यासेन योग एवाभ्यस्यते न कर्म क्रियत इत्यत्र वासनातिरिक्तप्रयोजकेन भाव्यं स क इति चोद्यं परिहरति **करोतीति**। योग्ययोगिलक्षणो जन्तुर्जीवः कर्म करोतीति प्रत्यक्षम्। तत्रापि केनापि पुरुषेण चोदितः प्रेरितः एव क्रियते कार्यते आनिपातात् शरीरपातपर्यन्तम्। अनेन वासानाद्यतिरिक्तप्रयोजककर्ताऽस्तीत्यवगतम्। स च पूर्णगुणो हरिरेव, एष उ एव साधु कर्म कारयति, यदेष आकाश आनन्दो न स्यादिति श्रुतेः। ननु तर्हि विद्वदविदुषोः को विशेष इत्यत्राह **न तत्रेति**। इदं सर्वं विद्वान् प्रकृतौ प्रकृतिविकृतमहादादिविकृतपञ्चभूतनिर्मितदेहे स्थितोऽपि स्वसुखानुभूत्या भगवदनुग्रहाविर्भूतस्वरूपानन्देन विषयेभ्यो निवृत्ततृष्णः कर्माणि कुर्वन्नपि, तत्र कर्मसु न सज्जत इति शेषः॥ ३१॥

अधुना योगिनोऽसम्प्रज्ञातसमाध्यवस्थामाह **तिष्ठन्तमिति**। मम देहे तिष्ठन्नासीनो व्रजन् शयान इत्यादि क्रियाः कुर्वन् हरिरेवेत्यात्मस्थमतिः परमात्मन्येव स्थितमतिः तिष्ठन्तमासीनमित्यादिक्रियाकरमात्मानं देहं न वेद। किं बहुना पारतन्त्र्याद्यन्तरेण परमात्मनोऽन्यत् न किमपि वेदेत्यर्थः। स्वभावं देहस्य प्रियाप्रियलक्षणम्॥ ३२॥

यदि कश्चित् प्रारब्धकर्मवशात् तडितमिव पश्यति तथापि स्वतन्त्रतया न पश्यतीत्याह **यदि स्मेति**। यदि स्मरणवासनया हरेरन्यदसदिन्द्रियार्थममङ्गलमिन्द्रियविषयं देहगेहादिजगत्

**पूर्वं गृहीतं गुणकर्मचित्रमाज्ञानमात्मन्यविविक्तमङ्ग ।**
**निवर्तते तत् पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ।। ३४ ।।**

**यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न च संविधत्ते ।**
**एवं समीक्षा निपुणा सती मे हन्यात् तमिस्रं पुरुषस्य बुद्धेः ।। ३५ ।।**

---

कर्मनिबन्धनतया पश्यति मनीषी तथापि वस्तुतया स्वतन्त्रतया न मन्यते । तत् कुत इत्यत उक्तं **नानेति** । तत् स्वतन्त्रत्वं नानानुमानेन उत्पत्त्यादिमत्त्वरूपविविधानुमानेन विरुद्धं हि । एतमर्थं निदर्शयति **स्वप्नेति** । यथा स्वप्नदृक् स्वप्नादुत्थाय स्थितः तिरोदधानं अनित्यं परतन्त्रं स्वस्वप्नं जाग्रत्त्वेन न मन्यते, स्वप्नजाग्रत्त्वस्य नानानुमानविरुद्धत्वात् । न हि स्वप्नं पश्यन् स्वप्नं बाध्यं मन्यते अपि तु स्वप्नमद्राक्षमित्यबाध्यत्वमेव जानाति, जाग्रत्त्वमारोपितं पश्यतीति भावः । तथा विद्वानपि जगदबाध्यमेव स्वातन्त्र्यमारोपितं (इति) पश्यतीति भावः । ''नानामानविरुद्धं हि स्वातन्त्र्यं जगतः सदा । स्वतन्त्रो भगवान् विष्णुरेक एव न संशयः'' इत्यनेन ''अस्त्येव स्वाप्नमखिलं वासनारूप-मात्मनि । जाग्रदेतदिति ज्ञानं यत् तदेव भ्रमात्मकम् । तद्वज्जगदिदं सर्वं विद्यमानं न संशयः । स्वतन्त्रमेतदिति तु यज्ज्ञानं तद् भ्रमात्मकम्'' इत्यनेन ''उत्थितो नैव जाग्रत्त्वं क्वचित् स्वप्नस्य पश्यति । स्वातन्त्र्यमेव जगतो ज्ञानवान् नैव पश्यति'' इत्यनेन (च) सिद्धत्वात् स्वप्नदृष्टान्तबलेन जगतो बाध्यत्वमुच्यत इत्येतदासुरमतमित्यवगम्यते ।। ३३ ।।

ननु जगत्स्वातन्त्र्यप्रतीतौ किं कारणमित्याशंक्याज्ञानं कारणमित्याशयेनाह **पूर्वमिति** । ज्ञानोदयात् पूर्वमात्मनि परमात्मनि अज्ञानं गृहीतं परमात्मस्वरूपविषयत्वेनाज्ञानमार्जितम्, जीवेनेति शेषः । न केवलं स्वरूपविषयकमज्ञानं किन्तु गुणकर्मचित्रमिति । भगवतो गुणविषयकत्वेन कर्मविषयकत्वेन च चित्रं नानाविधम् । अज्ञानसद्भावे प्रमाणमाह अविविक्तमिति । एतमहं न जानामीति विवेक-शून्यम् । नन्वेतदज्ञाननिवृत्तौ का प्रतिभटीति तत्राह **अङ्गेति** । अङ्गेत्यामन्त्रणेन भयं माकार्षीरि-त्याह । पुनः पुनरीक्षया हरेः स्वरूपस्य गुणानां कर्मणां चालोचनालक्षणोपासनाजनितज्ञानेन तदज्ञानं निवर्तते पुनस्तदज्ञानं न गृह्यते । ज्ञानोदयानन्तरमात्मा परमात्मापि न विसृज्यः स्वस्वरूप-सुखाविष्कारलक्षणापरोक्षज्ञानेनापरोक्षीकृतो न परोक्षी भवति । तस्य जगत्स्वातन्त्र्यं च न प्रतीयत इत्यर्थः । ''अन्यैर्ज्ञातेऽपि चाज्ञाते न विशेषो हरेः क्वचित् । तेषामेव विशेषः स्यादज्ञानापगमेन तु'' इति वचनाज्जीवस्यैव विशेषो न हरेर्विशेष इति च ज्ञानतव्यं ज्ञानार्थिनेति भावः ।। ३४ ।।

मम साक्षात्कारेणाज्ञानं निवर्तत इत्युक्तम् । तत्र तेन मम कश्चन विशेषो नास्तीतीममर्थं

**एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ।**
**एकोऽद्वितीयो वचसां विरामो येनेरिता वाग्रचनाश्चरन्ति ॥ ३६ ॥**

**एतावानात्मसंमोहो यद् विकल्पस्तु केवले ।**
**आत्माऽमृते स्वमात्मानमचलं यन्न पश्यति ॥ ३७ ॥**

---

सोदाहरणमाह **यथेति**। हिशब्दः साक्षिसूचकः। यथा भानोः सूर्यस्योदयो चक्षुषां तमो निहन्यात् न तु तमः संविधत्ते स्वस्मिन् कमप्यतिशयं च नाधत्ते। एव वैराग्यादिसाधनसामग्र्या निपुणा सती मे समीक्षा पुरुषस्य सर्वदा श्रीनारायणं शरणंगतस्य बुद्धेस्तमिस्रं हन्यात्, नतु मम कञ्चन विशेषं कुर्यात् ॥ ३५ ॥

बहुशः श्रुतपरमात्मस्वरूपस्यापि तत्स्वरूपं कीदृशमित्युद्धवस्यान्तरं चोद्यं प्रिहरति **एष इति**। एषोऽहं स्वयंज्योतिः स्वतः पूर्णप्रकाशः अत एवाजः अत एवाप्रमेयः। महती अनुभूतिर्ज्ञप्तिर्यस्य स महानुभूतिः, सर्वज्ञ इत्यर्थः। सकलानुभूतिः पूर्णसुखानुभवः। एकः ज्ञानानन्दादिगुणाभिन्नत्वात् स्वगतभेदरहितः। अद्वितीयः सर्वोत्तमः। अप्रमेयत्वाद् वेदादिवाचामगोचरः। वाचामगोचरश्चेत् तदीयं ज्ञानं कथं वरीवर्तीति तत्राह **येनेति**। वाग्रचना वैदिकलौकिकसर्ववाग्व्यवहारा येनेरिताः प्रवर्तन्त इत्यनेन भगवदनुग्रहीतवाग्व्यवहारविषयत्वेन तज्ज्ञानमुदेतीति ज्ञातव्यम्। ''ज्ञानानन्दाद्य-भिन्नत्वादेकः सर्वोत्तमत्वतः। अद्वितीयो महाविष्णुः पूर्णत्वात् पुरुषः स्मृतः'' इति वचनात् ॥ ३६ ॥

एवं ज्ञानज्ञेयस्वरूपं निरूप्य मिथ्याज्ञानस्वरूपं तत्कारणाज्ञानस्वरूपं च विविच्य दर्शयति **एतावानिति**। यद् विकल्पः प्रमाणविरुद्धं कल्पनं जीवस्वान्त्र्यपरमात्मास्वान्त्र्यजीवपराभेदादि-विषयो य एतावान् आत्मसंमोहो मनोभ्रमः। भ्रमत्वं बाधकज्ञाननिश्चेयम्, तत् कथमत्रेत्याह **केवल इति**। आत्मा जीवः केवले स्वतन्त्रे अमृते नित्यमुक्ते परमात्मनि स्थितं मदाधारतया स्थितं स्वमात्मानं स्वस्वभावं कदाप्यनपनोद्य[1] अस्वतन्त्रमचलं स्थिरं न पश्यति यद् यावत् तावद् भ्रमो न निवर्तत इत्यतः स्वस्वभावाज्ञानं निमित्तं तन्निवृत्तौ भ्रमो निवर्तत इति निश्चीयते। ''एतावानात्मसम्मोहो यद् विरुद्धस्य कल्पनम्। यत् परात्माश्रयान् जीवान् निश्चयेन न पश्यति'' इति वचनात् नाद्वैतज्ञानेन भेदभ्रमो निवर्तत इत्यर्थः ॥ ३७ ॥

---

१. कदाप्यनपनोद्येति क्वचित् कोशेषु नास्ति।

**यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ।**
**व्यर्थो नाप्यर्थवादोऽयं द्वयं विन्दन्ति सूरयः ॥ ३८ ॥**

**योगिनो पक्वयोगस्य युञ्जतः काल उत्थितैः ।**
**उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३९ ॥**

**योगधारणया कांश्चिदासनैर्धारणान्वितैः ।**
**तपोमन्त्रौषधैः कांश्चिदुपसर्गान् विनिर्दहेत् ॥ ४० ॥**

**कांश्चिन्ममानुध्यानेन नामसङ्कीर्तनादिभिः ।**
**योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शुभैः ॥ ४१ ॥**

**केचिद् देहमिमं धार्यं सुकल्पं वयसि स्थितम् ।**
**विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥ ४२ ॥**

---

इतोपि पञ्चविधभेदभ्रमोऽद्वैतज्ञानेन निवर्तत इत्ययं वादो न विदुषां परिषदि स्वारस्यमाधत्त इति भावेनाह **यन्नामाकृतिभिरिति** । नामाकृतिभिर्नामरूपैर्ग्राह्यं ज्ञेयं पञ्चवर्णं पञ्चभूतात्मकं पञ्चभेदात्मना वर्तनीयं जगत् अबाधितमद्वैतज्ञानबाध्यं न भवति । जगदबाधितमित्ययं व्यर्थो वादो न भवति किन्त्वर्थवादः यथार्थवाद एव । कुतः । सूरयो जीवं परमात्मानं च द्वयं द्वित्वसंख्याविशिष्टं विन्दन्ति ज्ञात्वा परमानन्दं लभन्त इति भावः । अनेन जगत् ज्ञानबाध्यमिति वदन्तोऽपण्डिताः, अन्ये तु पण्डिता इत्युक्तं भवति । "पञ्चभूतात्मकं विश्वं भ्रान्तिसिद्धमपाण्डिताः । वदन्ति पण्डितास्त्वद्धा जगदाहुरबाधितम् । प्रवाहरूपेण सदा विष्णोरिच्छावशे स्थितम्" इति वचनात् ॥ ३८ ॥

पूर्वमन्तरायहतयोगाः कुयोगिनो जन्मान्तरेऽपि योगमभ्यसन्तीत्युक्तम् । अधुना तस्मिन् जन्मन्येव प्राप्तयोगान्तरायपरिहारप्रकारं वक्तुमाह **योगिन इति** । काले योगाभ्यासविहितसमये प्रभातादिलक्षणे योगं युञ्जतः । उपसर्गैरुपद्रवैः । विधिः वक्ष्यमाणः ॥ ३९ ॥

कोयमिति तत्राह **योगधारणयेति** । योगधारणया यमनियमादीनामावर्तनेन ॥ ४० ॥

अनुध्यानेन तत्तदन्तरायविहितपरिहारसमर्थहरिस्मरणेन । नामसङ्कीर्तनादिभिरित्यनेनाधिकारिणः कालविशेषांश्च लक्षयति । अशुभदान् विघ्नान् ॥ ४१ ॥

रसायनादिनानाविधोपायैः शरीरस्य नाशाद्यन्तरायपरिहारस्य सुशकत्वेन सिद्धिसाधनसौलभ्याद्

**इह वर्षशताशीत्या तदायासो ह्यपार्थकः ।**
**अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४३ ॥**

**योगं निषेवतो नित्यं कायश्चेत् कल्पतामियात् ।**
**तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥ ४४ ॥**

**योगचर्यामिमां योगी विचरन् मदपाश्रयः ।**
**नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४५ ॥**

**॥ इति अष्टाविंशोऽध्यायः ॥**

---

व्यर्थं योगधारणादिविधानमत्राह **केचिदिति** । केचिदविवेकिनः परेण धार्यं सुकल्पमिन्द्रियसामर्थ्योपेतं वयसि स्थितं तारुण्यवयसोपेतम् अथ शरीरस्य चिरस्थायित्वानन्तरं योगसिद्धये युञ्जन्ति, मन इति शेषः ॥ ४२ ॥

तेषामविवेकित्वं कुत इति तत्राह **इहेति** । तदायासः तस्य देहस्य पोषणायासः । अपार्थकत्वमाह **अन्तवत्त्वादिति** ॥ ४३ ॥

योगस्य शरीररक्षणयोगत्वाभावात् तदायासस्य तत्फलदत्वान्न वैयर्थ्यं शरीररक्षणायासस्येत्याशङ्क्याह **योगमिति**[१] । नित्यं योगं भगवद्ध्यानलक्षणं रसायनं निषेवतः सेवमानस्य पुंसः चेद् यदि कायः कल्पतां समर्थत्वमियात् प्राप्नोति तत् तर्हि स मतिमान् योगमेव श्रद्दध्यात्, तं योगं उत्सृज्य अन्यत्र रसायनादौ श्रद्धां न कुर्यात् इत्यन्वयः । मत्पर इत्यनेन मतिमत्त्वं विवृतम् । अनेन योगस्यापि शरीररक्षणफलत्वाद् रसायनादौ प्रवर्तमाना अविवेकिनः, अतो मतिमद्भिः मद्योग एवाभ्यसनीय इति सिद्धम् । अत उक्तं युक्तम् ॥ ४४ ॥

अत उक्तयोगान्तरायपरिहारमाचरन्नेव योगपारं गमिष्यतीति भावेनाह **योगचर्यामिति** । स्वसुखं स्वस्वरूपसुखमनुभवतीति स्वसुखानुभूः इत्यनेन योगः सर्वापेक्षिताशेषपुरुषार्थसाधनमित्युक्तं भवति ॥ ४५ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य अष्टाविंशोऽध्यायः ॥**

---

१. ''योगस्य शरीरसाध्यत्वात् शरीररक्षणायासस्य तत्फलदत्वात् न व्यर्थता शरीररक्षणायासस्येत्याङ्क्याह योगमिति'' इति पाठान्तरम् ।

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

**उद्धव उवाच -**

**सुदुश्चरामिमां मन्ये योगचर्यामनात्मनः ।**
**यथाऽञ्जसा पुमान् सिध्येत् तन्मे ब्रूह्यञ्जसाऽच्युत ॥ १ ॥**

**प्रायशः पुण्डरीकाक्ष युञ्जतो योगिनो मनः ।**
**विषीदत्यसमाधानान्मौनसंयमकर्शितम् ॥ २ ॥**

**अथो त आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन ।**
**सुखं च विश्वेश्वर योगकर्मभिस्त्वन्माययाऽमी विहता न मानिनः ॥ ३ ॥**

**किं चित्रमच्युत तवैतदशेषबन्धो-**
**र्दासेष्वनन्यशरणेषु यदात्मदस्त्वम् ।**
**योऽरोचयश्च पशुपैः स्वयमीश्वराणां**
**श्रीमत्किरीटमणिघट्टितपादपीठः ॥ ४ ॥**

---

निर्विघ्नयोगाचरणसाधनं हरेर्भक्तानुकम्पित्वं कथिततत्वज्ञानप्रशंसां तन्निरतानां श्रेयस्त्वं उद्धवस्य हरौ भक्त्यतिशयलक्षणं तस्य भगवद्रतिप्राप्तिं च कथयत्यस्मिन्नध्याये । तत्रादावुद्धव उक्तयोगाचरणस्याशक्यत्वं मनसि कृत्वा तत्सिध्युपायं पृच्छति **सुदुश्चरामिति** । अनात्मनो मनोजयरहितस्याधीरस्य वा । पुमान् यथा भवदुक्तोपायेन सिध्येत् पुरुषार्थवान् भवेत् तथा तद्योगसाधनं मे ब्रूहीत्यन्वयः ॥ १ ॥

तदकथने कोऽनर्थ इति तत्राह **प्रायश इति** । मौनसंयमाभ्यां कर्शितं विषीदति विशेषान्नष्टं भवति । योगाचरणसाधनेऽज्ञाते मनो विषीदति ॥ २ ॥

अथो तस्मात् तज्ज्ञाः परमहंसा एव भवदुक्तयोगाधिकारिण इति भावेनाह **अथो इति**। योगकर्मभिः योगाख्यकर्मभिः । अत एव मानिनो ज्ञानिनः त्वन्मायया अहङ्करादिरूपया न विहता इत्यर्थः ॥ ३ ॥

प्रकृतौ स्थित्वापि प्रकृत्यविहतत्वं त्वद्दासेषु न चित्रमिति विज्ञापयति **किं चित्रमिति** । त्वम्

तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां
सर्वार्थदं सुकृतविद् विसृजेत को नु।
को वा भजेत् किमपि विस्मृतचित्तवृत्तिः
किं वा न वेद तव पादरजोऽमृताम्भः ॥ ५ ॥

नैवोपयान्त्यपचितिं कवयस्तवेश
ब्रह्मादयोपि नतमूर्द्ध सदा स्मरन्तः।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्व-
न्नार्चार्यचैत्यवपुषा स्वगतिं व्यनंक्षि ॥ ६ ॥

---

अनन्यशरणेषु दासेषु आत्मद इति यदतोच्युत अशेषबन्धोस्तवैतच्चित्रं किम्। एतत् कुत्र **दृष्टमिति** तत्राह **य इति**। ईश्वराणां ब्रह्मादीनां श्रीमत्किरीटपरिघट्टितपादपीठः स्वयं यो गोकुले पशुभिः पशुपालैश्च सहात्मदत्वेन अरोचयः प्रकाशितवान् तस्य तव दासेषु एतच्चित्रं किमित्यन्वयः ॥ ४ ॥

भगवद्भक्तमाहात्म्यं तन्माहात्म्याविनाभूतमुक्तम्। तद् विशदयन् सारासारज्ञानमाह **तं त्वेति**। यो ब्रह्मादिशिरोभिः श्रीमत्किरीटमणिघट्टितपादपीठः तं त्वां सुकृतवित् सुष्ठुकृतोपकारज्ञः सारज्ञः को विसृजेत्। कीदृशं त्वाम्। अखिलानामात्मनां जीवानां दयितं प्रेष्ठम्, ईश्वरमणिमाद्यैश्वर्याकरम्, आश्रितानां सर्वार्थदम् अभिष्टाशेषपुरुषार्थप्रदम्। किञ्च कोवा पुरुषः किमप्यस्वतन्त्रं दैवं भजेत्। यदि भजेत् तर्ह्यसौ विस्मृतचित्तवृत्तिः असारज्ञः। चित्तवृत्तिविस्मृतिमुपपादयति **किं वेति**। तव शिव-शिरोमौलिमालायितं पादरजोऽमृताम्भो न वेदेत्यतो पशुरेवेत्यर्थः ॥ ५ ॥

एवमनिमित्तबन्धुत्वेन सर्वस्मादुपकारकस्य भवतः प्रत्युपकारं कर्तुं कवयोपि न समर्था इत्याह **नैवेति**। नतमूर्द्धत्वेन सदा स्मरन्तः कवयो ब्रह्मादयोपि तवापचितिं प्रत्युपकारं नैवोपयान्ति। क्रियमाण उपकारः कीदृश इति तं प्रकारमाह **य इति**। तनुभृतामन्तर्बहिः स्थित्वा अशुभं विधुन्वन् यस्त्वमाचार्यचैत्यः चित्तस्थ आचार्यश्चैत्यो ब्रह्मा तस्यान्तर्यामिवपुषा स्वगतिं स्वयोग्यज्ञानं व्यनंक्षि व्यक्तीकरोषि। आचार्यस्य चित्तस्थवपुषेति वा ॥ ६ ॥

श्री शुक उवाच -

इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।
गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेम मनोहरस्मितः ॥ ७ ॥

श्रीभगवानुवाच -

हन्त ते वर्णयिष्यामि मम धर्मान् सुमङ्गलान् ।
यान् शुद्धानाचरन् मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥

कुर्यात् सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ।
मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥

देशान् पुण्यान् संश्रयेत मद्भक्तैः साधुभिः श्रितान् ।
देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ।  ।

पृथक् सत्रेण वा मह्यं मम यात्रामहोत्सवम् ।
कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिः ॥ ११ ॥

मामेव सर्वभूतेषु बहिरन्तरवस्थितम् ।
ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥ १२ ॥

---

उद्धवेन पृष्टो भगवान् किमकरोदिति परीक्षितो मानसं चोद्यं परिहरति शुक इत्याह **इतीति** । जगत्क्रीडनकः जगत् क्रीडासाधनं यस्य स तथा । जगत्क्रीडनकस्वशक्तिभिरित्येकं वा पदम् । गृहीतं मूर्तीनामात्मान्तरात्मपरमात्मेतिसंज्ञानां त्रयं येन स तथा । जाग्रत्स्वप्नसुषुप्तिप्रेरकत्वेन तत्स्थत्वेपि जाग्रदाद्यवस्थाक्लेशपरिहारसमर्थ इत्याह **ईश्वरेश्वर इति** । ''आत्माऽन्तरात्मा परमात्मेति मूर्तित्रयं हरेः । जाग्रत्स्वप्नसुषुप्तीनां सृष्ट्यादेश्च प्रवर्तकम्'' इति अत्र प्रमाणम् ॥ ७ ॥

मृत्युं जननमरणात्मकं संसारं जयति ॥ ८ ॥ मद्धर्मेषु मदात्मसु मद्रूपेषु च मनोरतिर्यस्य स तथा ॥ ९ ॥ मद्भक्तानामाचरितानि ॥ १० ॥

पृथक् स्वयमेव सत्रेण बहुभिः सह वा मह्यं मत्प्राप्त्यर्थं मम यात्रामहोत्सवमयनादिलक्षणं कुर्यात् ॥ ११ ॥ आत्मनि हृदि आत्मानमन्तर्यामिणम् । यथा शरीरस्थं खमाकाशं निर्लेपं तथा ॥ १२ ॥

**इति सर्वाणि भूतानि मद्भावेन महाद्युते।**
**सभाजयेन्मन्यमानो ज्ञानं केवलमाश्रयन्॥ १३॥**

**ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्यर्के स्फुलिङ्गके।**
**अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः॥ १४॥**

**नरेष्वभीक्ष्णं मद्भावः पुंसो भावयतोऽचिरात्।**
**स्याद्वा माया तिरस्कारं साहंकारापि याति हि॥ १५॥**

**विसृज्य स्वयमात्मस्थां दृश्यव्रीडां च दैहिकीम्।**
**प्रणमेद् दण्डवद् भूमावाश्वचण्डालगोखरम्॥ १६॥**

---

इत्येवं पूर्वोक्तगुणविशिष्टत्वेन सर्वभूतानि प्रविश्य स्थित इति भावना मद्भावः, तेन मन्यमानः। सर्वभूतेष्वस्ति विष्णुरिति मद्भावेन सर्वाणि भूतानि ममालयत्वेन मन्यमान इति वा योजनाभेदः। ''सर्वभूतेष्वस्ति विष्णुरिति भावः सतां मतः। अर्चने सर्वभूतानामादित्ये तद्गतात्मना'' इति वचनात् सर्वभूतार्चनायां विशेषो ज्ञातव्यः। केवलमप्राकृतं ज्ञानमेवाश्रयन्॥ १३॥

केवलज्ञानप्रकारं दर्शयति **ब्राह्मण इति**। ब्राह्मणादिषु सर्वत्रावस्थितं ब्रह्म सममेकप्रकारं पश्यन् समदृङ् मतः, सतामिति शेषः॥ १४॥

एवं भावनाफलमाह **नरेष्विति**। नरेषु मामभीक्ष्णं भावयतः पुंसो मद्भावः मद्भक्तिः स्याद्वा स्यादेव। यो मत् मत्तः भावो मुक्तिलक्षणा भूतिश्च स्यादेव। भगवद्बन्धकशक्तिलक्षणप्रतिबन्धके सति कथं मुक्तिः स्यादत्राह **मायेति**। साहंकारा अहंकारसहकारिणी मायापि तिरस्कारं याति। हिशब्देन ''भक्त्या प्रसन्नो भगवान् दद्यान्मुक्तिं तथा ध्रुवम्'' इति स्मृतिं सूचयति॥ १५॥

भक्तिमतैवं भाव्यमित्याह **विसृज्येति**। भक्तः स्वयं दैहिकीं आत्मस्थां मनसि स्थितां दृश्यव्रीडां दृश्यमानां लज्जां विसृज्य आश्वचण्डालगोखरं दण्डवद् भूमौ प्रणमेदित्यन्वयः। ब्राह्मणादीन् प्रति भूमौ दण्डवन्नमनम्, अन्यांश्चण्डालादीन् प्रति मानसस्मरणमिति भेदः। अत्राप्यन्तर्यामिणः स्मरणं प्रणाम इति विशेषः॥ १६॥

**यावत् सर्वेषु भूतेषु मद्भावो नोपयुज्यते ।**
**तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ।। १७ ।।**

**सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।**
**परिपश्यति च परं परमात्मानमच्युतम् ।। १८ ।।**

**अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ।**
**मद्भावः सर्वभूतेषु मनोवाक्कायकर्मभिः ।। १९ ।।**

**नह्यङ्गोपक्रमे ध्वंसो न धूरस्योद्धवाण्वपि ।**
**मया व्यवसितं सम्यङ् निर्गुणत्वादनाशिषः ।। २० ।।**

**यो योऽपरो मनोधर्मः कल्पते निष्फलाय ते ।**
**तदायासो निरर्थः स्यान्नयादेरिव सत्तम ।। २१ ।।**

---

एतदुपासनावधिमाह **यावदिति**। यावत् सर्वेषु भूतेषु विष्णुरस्तीति मद्भावो मद्विषयं ज्ञानं नोपजायते तावद् वाङ्मनःकायवृत्तिभिरेवमुपासीतेत्यन्वयः ।। १७ ।।

एवमुपासीनस्य परोक्षज्ञानिनो मतिप्रकारमाह **सर्वमिति**। तस्योपासकस्य सर्वं जगद् ब्रह्मात्मकं ब्रह्मणा आत्तं स्वीकृतमधीनत्वेन वर्तितमिति मननं हरेः प्रीतिजनकमित्यर्थः । "ब्रह्मणाऽऽत्तमिदं सर्वं यत् किञ्चित् सचराचरम् । इति पश्येत यो विद्वान् स हि ब्रह्मात्मविन्मतः" इति विशिष्टवचनान्न ब्रह्मात्मैक्यमुच्यत इति सिद्धम् । फलमाह **विद्ययेति**। विद्यया ज्ञानेन आत्ममनीषया स्वरूपभूतबुद्ध्या चाच्युतं परमात्मानं स्वात्मादेः परमन्यं परिपश्यतीत्यन्वयः । चशब्देन अन्यमीशमिति श्रुतिं प्रमाणयति ।। १८ ।।

अन्येनापि मुक्तिः स्यात्, किमनेनेति तत्राह **अयं हीति**। सर्वकल्पानां सर्वमोक्षोपायानां मध्ये अयमुपायो हि सध्रीचीनो मत इति मम सिद्धान्त इत्यनेनाप्तिमूलत्वेनान्योक्तानामाभासत्वं सूचयति । अयमिति क इत्यत उक्तं **मद्भाव इति** ।। १९ ।।

अङ्ग उद्धव अस्य धर्मस्योपक्रमे कृतेपि तन्मात्रस्य ध्वंसो नाशो नैव भवति । अस्य धर्मस्य कर्तुरण्वपि

**एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्।**
**यत् सत्यममृतेनेह मर्त्येनाप्नोति माऽमृतम्॥ २२॥**

**एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः।**
**समासव्यासविधिना देवानामपि दुर्गमः॥ २३॥**

**अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत्।**
**एतद् विज्ञाय मुच्येत पुरुषो नष्टसंशयः॥ २४॥**

**सुविविक्तं तव प्रश्नं मयोक्तमपि धारयन्।**
**सनातनं ब्रह्मगुह्यं परब्रह्माधिगच्छति॥ २५॥**

---

अणुमात्रोपि धूः भार आयासलक्षणो नास्ति। कुतः। अनाशिषः निष्कामस्य मद्धर्मस्य निर्गुणत्वान्मुक्तिसाधनत्वात् मया सम्यग् व्यवसितं निश्चितमतो नान्यधर्मसमो मद्धर्म इति॥ २०॥

अस्यैवोत्तमत्वमुपपादयति **यो य इति**। अन्यदेवतोद्देशेन क्रियमाणो यो यो धर्मः ध्यानार्चनादिलक्षणः क्रियते, पुम्भिरिति शेषः, स ते तव निष्फलाय कल्पते। एतदेवाह **तदायास इति**। तदायासः तत्र क्रियमाणप्रयत्नो निरर्थः स्यात्। कथमिव। नयादेरिव दुर्नयरूपधर्मस्येव। ''नयादिर्दुनयः प्रोक्तो यन्नयं सोऽत्ति सर्वदा'' इति वचनात्॥ २१॥

बुद्धिमतां निश्चयज्ञानवतां बुद्धिर्निश्चयात्मिकैषा। मनीषिणां मनसा सारेच्छावतां मनीषा मनसा सारान्वेषणमेतत्। अनृतेन क्षणेक्षणे अन्यथाभवता अत एव मर्त्येन शरीराख्यजगता ऋतं शश्वदेकप्रकारं सत्यं ब्रह्म मामाप्नोतीति यत् तस्मात्। ''एकदा ज्ञातरूपेण यन्न तिष्ठति सर्वदा। चपलत्वात् सत्यमपि ह्यनृतं जगदुच्यते'' इति, ''सर्वदैकप्रकारत्वात् सत्यं ब्रह्म सदोच्यते'' इति वाक्यद्वयेन सत्यानृतशब्दयोरुक्त एवार्थ इति॥ २२॥

सुगमो योगो वक्तव्य इति त्वया पृष्टेन मया योग उक्त इत्युपसंहरति **एष इति**॥ २३॥ ब्रह्मवादः संसारमोचकं ब्रह्मज्ञानमेवेत्याशयेनाह **अभीक्ष्णश इति**॥ २४॥ सुविविक्तं तव प्रश्नमवधार्य मयोक्तं सनातनं ब्रह्मगुह्यं वेदरहस्यं परिहारमपि धारयन् पुरुषः परं ब्रह्म जानाति ज्ञात्वा प्राप्नोति चेत्यन्वयः॥ २५॥

**य एतन्मम भक्तेषु सम्प्रदद्यात् सुपुष्कलम् ।**
**तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥ २६ ॥**

**य एतत् समधीयीत पवित्रं परमं शुचि ।**
**स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥**

**य एतच्छ्रद्धया नित्यमव्यग्रं शृणुयान्नरः ।**
**मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥ २८ ॥**

**अप्युद्धव त्वया ब्रह्म सखे समुपधारितम् ।**
**अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥**

**नैतत् त्वया दाम्भिकाय नास्तिकाय शठाय च ।**
**अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥ ३० ॥**

**एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ।**
**साधवे शुचये ब्रूयाद् भक्तिः स्याच्छूद्रयोषिताम् ॥ ३१ ॥**

**नैतद् विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ।**
**पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥**

---

प्रचयगमनफलमाह **य एतदिति** । सुपुष्कलं यावदपेक्षितं तावज्ज्ञानम् । ब्रह्मैव दायः पितृधनं यस्य स ब्रह्मदायः, तस्य । यद्वा ब्रह्मदश्च आयोऽर्थागमो यस्य स तथा तस्य । आत्मना प्रसन्नेन मनसा आत्मानं मद्विषयं ज्ञानं दत्वा मत्स्वरूपं ददामि ॥ २६ ॥

अध्येतुः फलमाह **य इति** । मां दर्शयन् ॥ २७ ॥ श्रोतुः फलमाह **य इति** ॥ २८ ॥

अज्ञातांशं सम्यग्वक्तुं स्वोक्तज्ञानेऽवधृतिं पृच्छति **अपीति** । समुपधारितम् अपि किम् । मोहश्च विगतोऽपि । असौ मनोभवः मनःशल्यत्वेन जातः शोकश्च नष्टः किम् ॥ २९ ॥

एतस्य ज्ञानस्योपदेष्टुर्महाफलसम्भवेपि योग्यायैवोपदेष्टव्यं नायोग्यायेत्याह **नैतदिति** ॥ ३० ॥ शूद्राणां योषितां च यदि भक्तिः स्यान्मयि तर्हि तेभ्योऽपि ब्रूयादित्यन्वयः ॥ ३१ ॥ इदमेव मुक्तिसाधनं नान्यदित्याशयेनाह **नैतदिति** ॥ ३२ ॥

**ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे ।**
**यावानर्थो नृणां तात तावान् मोहश्चतुर्विधः ।। ३३ ।।**

**मर्त्यो यदा त्यक्तसमस्तकर्मा निवेशितात्मा विचिकीर्षितो मे ।**
**तदाऽमृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पतेऽसौ ।। ३४ ।।**

**श्री शुक उवाच -**

**स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ।**
**बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किञ्चिदूचेऽश्रुपरिप्लुताक्षः ।। ३५ ।।**

**विष्टभ्य चित्तं प्रणयेन पूर्णं धैर्येण राजन् बहुमन्यमानः ।**
**कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ।। ३६ ।।**

**उद्धव उवाच -**

**विद्रावितो मोहमयोऽन्धकारो य आश्रितो मे तव सन्निधानात् ।**
**विभावसोः किन्नु समीपगस्य शीतं तमोऽभिप्रभवत्यजाद्य ।। ३७ ।।**

---

तर्हि लोका एतत् किमिति न विविदिषन्तीति तत्राह **यावानिति**। नृणां यावान् ज्ञातव्यार्थो भवेत् तावान् चतुर्विधो मोह इत्युपलक्षणम्, पञ्चपर्वाविद्याप्रतिरुद्धत्वान्न ज्ञातुमिच्छन्तीत्यर्थः ।। ३३ ।।

नन्वेवं चेद् विविदिषाऽभावेन कदाप्यनुदयो मुक्तेरत्राह **मर्त्य इति**। अयं मोक्षं प्राप्नोत्विति मोक्षोपायं प्रति मे मया चिकीर्षितो भवेत् । यदा मदुपदेशेन मर्त्यस्त्यक्तसमस्तकर्मा हरिरेव मयि स्थित्वा सर्वकर्म करोति अहं तदधीन एव कर्म करोमि न स्वतन्त्र इति हरावेव निवेशितात्मा च भवति तदाऽमृतत्वं प्रतिपद्यमानः प्राप्तुं योग्यो भवन् मया असौ आत्मभूयाय निर्दुःखानन्दानुभवरूपमोक्षायैव कल्पत इत्यन्वयः । यमैवैष वृणुते तेन लभ्य इति श्रुतेः ।। ३४ ।।

उद्धवस्य भक्त्यतिशयलक्षणमाह **स एवमिति** ।। ३५ ।।

अप्युद्धवेत्याद्युक्तं परिहरति **विद्रावित इति** । यो मोहमयान्धकारो मे मनआश्रितः स एव । तव सन्निधानान्मोहान्धकारापगमः कथमत्राह **विभावसोरिति** । हे अजाद्य । तमश्चाभिभवति किं नु । नैव ।। ३६-३७ ।।

**प्रवर्धिता मे भवताऽनुकम्पिता दत्तो हि विज्ञानमयः पदीपः।**
**हित्वा कृतज्ञस्तव पादमूलं कोऽज्ञः समीयाच्छरणं त्वदन्यम्॥ ३८॥**

**वृक्णश्च मे सुदृढस्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु।**
**प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना॥ ३९॥**

**नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम्।**
**यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी॥ ४०॥**

**श्रीभगवानुवाच -**

**गच्छोद्धव मयाऽऽदिष्टो बदर्याख्यं मदाश्रमम्।**
**तत्र मत्पादतीर्थोदैः स्नानोपस्पर्शनैः शुचिः॥ ४१॥**

**ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः।**
**वसानो वल्कलान्यङ्ग वन्यभुक् सुखनिःस्पृहः॥ ४२॥**

**तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संतयेन्द्रियः।**
**शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः॥ ४३॥**

**मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन्।**
**मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव॥ ४४॥**

---

हरेः स्वात्मन्यनुकम्पातिशयं सद्धेतुं करोति (?) **प्रवर्धितेति**। हिशब्दो हेतौ। अनुकम्पितामपि प्रवर्धितेति मन्ये। विज्ञानमयः प्रदीपो दत्तो हि यस्मात्, तस्मादिति शेषः। अतः सर्वस्मादुपकारकत्वाद् भवानेव निषेव्य इति भावेनाह **हित्वेति**॥ ३८॥

कीदृशो मोहान्धकारो योऽसौ ज्ञानासिना छिन्न इति तत्राह **वृक्ण इति**। यः सृष्टिविवृद्धये त्वया प्रसारितो विस्तारितः स एव स्वमायया एनं (न) संसारयामीत्युद्गतनिजेच्छया प्रादुर्भूतात्मविबोधाख्य-हेत्या वृकूणश्चेत्यन्वयः॥ ३९॥ स्वात्मनो भगवदेकशिष्यत्वं प्रकटयन्नाह **नम इति**॥ ४०॥

अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४५ ॥

श्रीशुक उवाच -

स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिवृत्य पादयोः ।
शिरो निधायाश्रुकलाभिरार्द्रधीः सिञ्चन् पदद्वन्द्वमथो न चक्रमे ॥ ४६ ॥

सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहर्तुमातुरः ।
कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनःपुनः ॥ ४७ ॥

ततस्तमन्तर्हृदि सन्निवेश्य गतो महाभागवतो विशालाम् ।
यथोपदिष्टं जगदेकबन्धुना तपः समास्थाय हरेरगाद् गतिम् ॥ ४८ ॥

यदेतदानन्दसमुद्रसम्भृतं
ज्ञानामृतं भागवताय भाषितम् ।
कृष्णेन योगेश्वरसेविताङ्घ्रिणा
सच्छ्रद्धयाऽऽसेव्य जगद् विमुच्यते ॥ ४९ ॥

---

भगवाननुशाधीत्युक्तं विवृणोति[१] **गच्छेति** ॥ ४१ ॥ ईक्षया ज्ञानेन । मत्पादतीर्थैः मिश्रितत्वेन प्रवृद्धपापविध्वंसनशक्तियुक्ताया अलकनन्दाया जलस्नानोपस्पर्शनैः शुद्धः ॥ ४२-४४ ॥ तिस्रो गतीः जाग्रत्स्वप्नसुषुप्तिलक्षणाः ॥ ४५ ॥

हरिमेधसा विष्णुना । आत्मनो हरित्वमेधयतीति वा हरिमेधास्तेन ॥ ४६ ॥ न चक्रम इत्युक्तं स्वाभिप्रायं विवृणोति **सुदुस्त्यजेति** । विशालां बदरीम् ॥ ४७ ॥

न केवलमेदद्वानमुद्धवस्यैव फलदं (अपि तु) निषेवमाणानामितरेषामपीत्याह **यदेतदिति** । आसेव्य ॥ ४८-४९ ॥

---

१. अनुशाधीत्युक्तो भगवाननुशास्तीत्यवतारिका स्वरसा ।

भवभयमपहन्तुं ज्ञानविज्ञानसारं
निगमकुमुददभ्रं भृङ्गवद् वेद्यसारम् ।
अमृतमुदधिकल्पं पाययन् भृत्यवर्गान्
पुरुषऋषभमाद्यं विष्णुसंज्ञं नतोऽस्मि ॥ ५० ॥

॥ इति एकोनत्रिंशोऽध्यायः ॥

॥ अथ त्रिंशोऽध्यायः ॥

**राजोवाच -**

**ततो महाभागवत उद्धवे बदरीं गते ।**
**द्वारवत्यां किमकरोद् भगवान् भूतभावनः ॥ १ ॥**

---

भगवतो भक्तानुकम्पितां विस्मयमान उत्तरग्रन्थानुवर्तनार्थं भगवत्प्रसादमाकांक्षमाणो भगवन्तं नमति **भवभयमिति** ॥ आद्यं सर्वज्ञं पुरुषर्षभं पुरुषोत्तमं नतोऽस्मीत्यन्वयः । यो भवभयमपहन्तुमुन्मूलयितुं निजयशोमृतं भृत्यवर्गान् पाययन्नास्ते । कीदृशम् । ज्ञानविज्ञान एव सारं वरणीयं स्वादु यस्मिन् तत्तथा । निगमकुमुददभ्रं वेदलक्षणकुमुदैकदेशसिद्धम् । अनेन वेदानामनन्तत्वेपि तत्तद्योग्यतानुसारेणोदितमिति ज्ञायते । अत एव वेद्यसारं ज्ञातव्येषु श्रेष्ठम् । ननु वेदैकदेशसिद्धं चेत् स्वापेक्षितसामग्र्याभावान्नेदमुपादेयमिति तत्राह **उदधिकल्पमिति** । योग्यताविशेषादधिकारिणां पूर्णत्वेन समुद्रसमानम् । भृङ्गवद् यथा भृङ्गो भृङ्गीं मधु पाययति तथेति ॥ ५० ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य एकोनत्रिंशोऽध्यायः ॥**

भगवतो मायालक्षणमाहात्म्यं प्रकटयितुं यादवानां मिथोवधनिमित्तनिधनं सज्जनचेतोनुरागजननाय चतुर्भुजत्वादिलक्षणनिजरूपदर्शनं दुर्जनमनोमोहनाय जराख्यव्याधशरविद्धपादत्वं तत्स्वर्गदानमित्येत् सर्वमस्मिन्नध्याये वक्ति । तत्रादौ परीक्षित्प्रश्नप्रकारं भगवद्वाक्येन यादवानां द्वारकाया निर्गत्य प्रभासप्रयाणं तीर्थस्नानपूर्वकं विप्रादिपूजनं च वक्ति **ततो महाभागवत इत्यादिना** ॥ १ ॥

ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ।। २ ।।

प्रत्याक्रष्टुं नयनमबला यत्र मग्नं न शेकुः
कर्णाविष्टं न सरति यशो यत् सतामात्मलग्नम् ।
यच्छ्रीवाक्यं जनयति रतिं कोऽनुमानः कवीनां
दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः[१] ।। ३ ।।

---

अत्यजत्, अतिरत्रातिशये वर्तते, अतिः स्यादधिकार्थोक्तौ प्रशंसायाममिक्रम इति यादवः, अज हरण इति धातोः भूलोकात् स्वर्गलोकं प्रत्यहरत् ।। २ ।।

[२]प्राकृतरूपवदप्राकृतं च रूपं दिव्यं त्यक्तुमयोग्यं स्वात्मैकत्वेन सतां श्रवणमनोगोचरत्वात् सारूप्यादिमुक्तिदत्वाच्चेति भावेनाह **प्रत्याक्रष्टुमिति**। अबला यत्र यस्मिन् हरेरङ्गे मग्नं नयनं प्रत्याक्रष्टुं तत आनेतुं न शेकुः । सतां कर्णाविष्टमात्मलग्नं मनोमन्दिरं यद्यशः कंससंहर्तृत्वादिलक्षणं न सरति कर्णादेर्नापयाति । न सरति ततो यत् सतामिति केचित् पठन्ति । यद्रूपं यच्छ्रीवाक्यं यस्य श्रीमद्वाक्यं च मनःकर्णयो रतिं निर्दुःखसुखं जनयति करोति । श्रीवाचामिति पाठे लक्ष्म्या वचसां रतिं जनयति, श्रोतॄणामिति शेषः । यच्च किम् तृतीयोतिशय इति सूत्रात् सुखपूर्णम् । कवीनां नु मानं मानानुसारि च । इदं सर्वस्मिन्नुक्तार्थे मानं भवति । कोऽनुमान इति पाठे देहः कः सुखात्मकः कवीनां मानानुसारी चेत्यर्थः । यच्च युधि भारताख्ये जिष्णोर्जयमूर्तेरर्जुनस्य रथगतं दृष्ट्वा तत्साम्यं तस्य स्वरूपस्य निर्दोषत्वादिलक्षणसाम्यमीयुरापुः, भीष्मादय इति शेषः । अत एतादृशं रूपं कथमहरदित्यन्वयः ।। ३ ।।

---

१. द्वितीयपादे न सरति ततो यत् सतामिति, तृतीयपादे च यच्छ्रीवाचां जनयति रतिं किं न मानं कवीनामिति च पाठान्तरे टीकासम्मते । परं कोऽनुमानः कवीनामिति पाठ एव भाष्यकारसम्मत इति भाति । श्लोकव्याख्यानं त्वस्पष्टम् ।

२. प्राकृतरूपवदिति केषुचित् कोशेषु नास्ति । तादृशपाठसत्वे वैधर्म्यदृष्टान्तार्थो वतिः ।

श्रीशुक उवाच -

दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् ।
दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥

श्रीभगवानुवाच -

एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ।
मुहूर्तमपि न स्थेयमत्र वो यदुपुङ्गवाः ॥ ५ ॥

स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः ।
वयं प्रभासं यास्यामो यत्र प्रत्यक् सरस्वती ॥ ६ ॥

तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ।
देवताः पूजयिष्याम स्नपनालेपनार्हणैः ॥ ७ ॥

ब्राह्मणांस्तु महाभागान् कृतस्वस्त्ययना वयम् ।
गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥

विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ।
देवद्विजगवां पूजा भूतेषु परमा दया ॥ ९ ॥

इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ।
तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १० ॥

तस्मिन् भगवताऽदिष्टं यदुदेवेन यादवाः ।
चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥

ततस्तस्मिन् महापानं पपुर्मैरेयकं मधु ।
दिष्टविभ्रंशितधियो यादवा नष्टमङ्गलाः ॥ १२ ॥

महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ।
कृष्णमायाविमूढानां सङ्घर्षः सुमहानभूत् ॥ १३ ॥

युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ।
धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥ १४ ॥

पतत्पताकैः रथकुञ्जरार्वभिः खरोष्ट्रभिर्महिषैर्नरैरपि ।
मिथः समेत्याश्वतरैः सुदुर्मदान्यहञ्छरैर्दद्भिरिव द्विपा वने ॥ १५ ॥

प्रद्युम्नसाम्बौ युधिरूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ।
सुभद्रसङ्ग्रामजितौ सुचारुगदौ सुमित्रासुरथौ समीयतुः ॥ १६ ॥

अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः ।
अन्योन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुन्देन विमोहिता भृशम् ॥ १७ ॥

दाशार्हवृष्ण्यन्धकभोजसात्वता अध्वर्युदा माधुरशूरसेनाः ।
विसर्जनाः कुकुरा कुन्तयश्च मिथस्तु जघ्नुः सुविसृज्य सौहृदम् ॥ १८ ॥

पुत्रास्त्वयुध्यन् पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ।
मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहन् ज्ञातय एव मूढाः ॥ १९ ॥

शरेषु हीयमानेषु भज्यमानेषु धन्वसु ।
शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥ २० ॥

ता वज्रकल्पा अभवन् परिधा मुष्टिना हृताः ।
जघ्नुर्द्विषस्ते कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥

---

राज्ञा पृष्टः शुकोऽत्राह दिवीति ॥ ४ ॥ द्वारवत्यां दृश्यन्ते ॥ ५ ॥ कदम्बरसधारात्तु मदिरानिर्मितं[१] मधु । मैरेयमिति सम्प्रोक्तं यत्पानाद् भ्रश्यते मनः '' इति । दिष्टेन दैवसंज्ञेन भगवता ॥ ६-१२ ॥ सङ्घर्षः कलहः ॥ १३ ॥

वेलायां समद्रजलसीम्नि ॥ १४ ॥ अर्वाणोऽश्वाः । दद्भिर्दन्तैः ॥ १५ ॥ अध्वर्युदा इति केचिद् यादव-विशेषाः ॥ १६-१८ ॥ एरकाः समुद्रतीररुहः सूचीमुखतृणानि जह्रुरुत्पाटितवन्तः ॥ १९-२० ॥

---

१. कदम्बरसाधारात्तमदिरानिर्मितं इति पाठः स्याद्वा ?

**प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ।**
**हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥**

**अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ।**
**एरकामुष्टिपरिघैश्चरन्तौ जघ्नतुर्युधि ॥ २३ ॥**

**ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ।**
**स्पर्द्धाक्षोभः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥**

**एवं सर्वेषु नष्टेषु कुलेषु स्वेषु केशवः ।**
**उत्तारितो भुवोभार इति मेनेऽवशेषितः ॥२५॥**

**रामः समुद्रवेलायां योगमास्थाय पौरुषम् ।**
**तत्यजे योगमाविश्य संयोज्यात्मानमात्मनि ॥२६॥**

**रामनिर्याणमालोक्य भगवान् देवकीसुतः ।**
**निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥**

**बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णुप्रभया स्वया ।**
**दिशो वितिमिराः कुर्वन् विधूम इव पावकः ॥ २८ ॥**

**श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ।**
**कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९ ॥**

---

एरकायुक्तमुष्ट्याख्यपरिघैः ॥ २१-२३ ॥

पौरुषं पूर्णषड्गुणभगवद्विषयं ध्यानं समास्थाय सम्यगेकाग्रचित्तत्वेन कृत्वा योगं योगनामानं विष्णुमाविश्य आत्मानं स्वान्तर्यामिणमात्मनि व्याप्ते भगवद्रूपे संयोज्य एकीभवतीति सञ्चित्य देहं तत्यज इत्यन्वयः । आत्मनेपदप्रयोगेण सुखेन देहत्यागं सूचयति ॥ २४-२६ ॥

भगवता देहं त्वक्त्वा न दिवंगतं तत्प्रदर्शनमसुरजनमोहनार्थं कृतमिति ज्ञापयन् शुको हरेस्तदानीन्तनस्वरूपप्रकारं ब्रूते **बिभ्रदिति** ॥ २७-२८ ॥

सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ।
पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥

कटिसूत्रब्रह्मसूत्रकिरीटकनकाङ्गदैः ।
हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥

वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः ।
कृत्वोरौ दक्षिणं पादमासीनं पङ्कजारुणम् ॥ ३२ ॥

मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरः ।
मृगाकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥

चतुर्भुजं तं पुरुषं दृष्ट्वा य कृतकिल्बिषः ।
भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥

**व्याघ उवाच -**

अजानता कृतमिदं पापेन मधुसूदन ।
क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥

यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ।
वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं विभो ॥ ३६ ॥

तमाशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् ।
यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥

---

अत्र श्रीकृष्णोऽसुरजनमोहकरीं मायां प्रकटयति जराख्यव्याधेनेत्याह **मुसलेति** । मुसलावशेषायःखण्डेन कृत इषुः शरो यस्य स मुसलावशेषायःखण्डकृतेषुः । चूर्णितमुसलावशिष्टायःखण्डेन कृतशरवानित्यर्थः । मृगाकारं मृगत्वबुद्धिजनकम् ॥ २९-३३ ॥ अजानता मया ॥ ३४-३५ ॥

असाधु अनुचितम् ॥ ३६ ॥ तं मृगलुब्धकं मृगलोभिनं जहि ॥ ३७ ॥

यस्यात्मयोगरचितं न विदुर्विरिञ्च-
[१]रुद्रादयोऽस्य तनयाः पतयो गिरां ये।
त्वन्मायया विहतदृष्टय एतदञ्जः
किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥

**श्रीभगवानुवाच -**

मा भैर्जर त्वमुत्तिष्ठ काम एष कृतो हि मे।
याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥

**श्री शुक उवाच -**

इत्यादिष्टो भगवता कृष्णेतेच्छाशरीरिणा।
त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥

---

तत्र कृत ब्रह्महत्यादिदोषपरिहारसद्भावेप्यत्र कृतदोषपरिहारो नास्त्येव, तेनाधःपात एवातो मद्वध एव श्रेयानिति भावेनाह **यस्येति**। विरिञ्चरुद्रादयः, अस्य विरिञ्चस्य तनया मरीच्यादयः, गिरां पतयो बृहस्पत्यादयः, ते एते यस्य तव आत्मयोगरचितं स्वरूपसामर्थ्योपायेन कृतं सृष्ट्यादिकं न विदुः। तत्र निमित्तमाह **त्वन्माययेति**। त्वन्मायया बन्धकशक्त्या विहतदृष्टयः प्रलुप्तज्ञानाः, यस्मात् तस्मादिति शेषः। असद्गतयः अप्रशस्तव्याधयोनिगता अत एव ज्ञानशून्या वयं तस्य ते तव एतच्चरितमञ्जो गृणीमः किम्। नैव ज्ञातुं शक्ता इत्यतः एतत्स्तुत्यादिकर्मणाप्येतत्पाप-परिहारोपायाज्ञानादधःपातात् पूर्वमेव मां जहीत्यर्थः। रुद्रादयः सुमतय इति केचित् पठन्ति। अनेन कैमुत्यन्यायो दर्शित इति ज्ञायते ॥ ३८ ॥

भगवान् भक्तवत्सलत्वान्मयि भक्तिरेव सकलपापध्वंसिनीति भावं कृत्वा वक्ति **मा भैरिति**। मा भैः भयं मा कार्षीः। एष कृतः शरवेधो मे कामः कामितः कांक्षित इत्यर्थः। हिशब्देन दुष्टजनमोहनं प्रयोजनं सूचयति। अतः किमस्मै फलं ददासीति तत्राह **याहीति**। सुकृतिनां पदमित्यनेनेदमपि सुकृतमेवास्त्विति ध्वनयति ॥ ३९ ॥

नेदं प्राकृतपुरुषोक्तवत् कालान्तरेऽपि सन्देहकरमिति भावेनाह **इतीति** ॥ ४० ॥

---

१. रुद्रादयः सुमतयः पतय इति पाठान्तरम्।

दारुकः कृष्णपदवीमन्विच्छन् नाधिगम्य तम्।
वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥

तं तत्र तिग्मद्युतिमायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम्।
स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य सबाष्पलोचनः ॥ ४२ ॥

[१]अदृश्यतस्ते चरणाम्बुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा।
दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रनष्टे ॥ ४३ ॥

**श्री शुक उवाच -**

इति ब्रुवति सूते वै रथो गरुडलाञ्छनः।
ख उत्पपात राजेन्द्र साश्वध्वज उदीक्षितः ॥ ४४ ॥

तमन्वगच्छन् दिव्यानि विष्णुप्रहराणानि च।
तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥

---

प्रासङ्गिकं समाप्य कथाशेषं प्रस्तौति **दारुक इति**। अन्विच्छन् अन्वेषणं कुर्वन् तं कृष्णं नाधिगम्य अविज्ञाय पुनः तुलसिकामोदो यस्य स तथा तं वायुमाघ्राय ज्ञात्वा तुलसिकामोदवाय्वभिमुखम् ॥ ४१ ॥ तत्राश्वत्थमूले कृतकेतनं तं कृष्णं दृष्ट्वा ॥ ४२ ॥

प्रभाते तव चरणाम्बुजमदृश्यतोऽपश्यतो मम दृष्टिः प्रनष्टा अस्तंगता। दृश्यमानायाः कथं नाश इत्यत आह **तमसीति**। फलमाह **दिश इति**। शान्तिं मङ्गलम्। शान्तिः प्रशममङ्गले इति यादवः। उडुपे चन्द्रे प्रनष्टे अस्तंगते। अत्रोडुभिः सह चन्द्रस्यादर्शनं विवक्षितम्। अन्यथा नक्षत्रप्रेक्षणेनापि दिगादिविवेकोपपत्तेरिति। अत उडुपपदप्रयोग इति। आहाश्रित इति पाठे पादप्रपन्नः सूतः कृष्णमाह योहं रे चरणाम्बुजमाश्रितस्तस्य मे दृष्टिः प्रनष्टेति योजना ॥ ४३ ॥

इदमप्यतिमाहात्म्यं हरेरिति भावेनाह **इतीति**। उदीक्षितः हरिणा उर्ध्वं गतो दृष्टः। अत्र चेतनानियतरथाद्यचेतनप्रवृत्तिदृशां लौकिकानां भगवन्माहात्म्यबुद्धिरितरेषां ज्ञानिनां प्रेक्षालक्षणसंज्ञया गतिं पश्यतां चैतन्यात्मकान्यच्युतरथादीनीत्यहो विश्वमूर्तेर्माहात्म्यमिति ज्ञातव्यम् ॥ ४४ ॥

---

१. आहाश्रितस्ते, आह श्रितस्ते इति पाठान्तरे।

**श्रीभगवानुवाच -**

गच्छ द्वारवतीं सूत ज्ञातिनां निधनं मिथः ।
सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥

द्वारकायां न च स्थेयं भवद्भिश्च स्वबन्धुभिः ।
मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥

स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ।
अर्जुनेनान्विताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥

त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।
मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥

**श्री शुक उवाच -**

इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ।
तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥ ५० ॥

॥ इति त्रिंशोऽध्यायः ॥

---

तेन रथादिगमनेन ॥ ४५ ॥ पुत्रादावुपेक्षकः । एतां संसारवृत्तिम् मन्मायया मदिच्छया रचना प्रकारो यस्याः सा मन्मायारचना ताम् ॥ ४६-४९ ॥ दुर्मनाः दुःखितान्तःकरणः । पुरीं द्वारवतीसंज्ञाम् ॥ ५० ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां एकादशस्कन्धस्य त्रिंशोऽध्यायः ॥**

## ।। अथ एकत्रिंशोऽध्यायः ।।

**श्रीशुक उवाच -**

**अथ तत्रागमद् ब्रह्मा भवान्या च समं भवः ।**
**महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ।। १ ।।**

**पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ।**
**चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ।। २ ।।**

**द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ।**
**गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ।। ३ ।।**

**ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ।**
**कुर्वन्तः सङ्कुलं राजन् भक्त्या परमया युताः ।। ४ ।।**

**भगवानपि तान् वीक्ष्य विभूतीरात्मनो विभुः ।**
**संयुज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ।। ५ ।।**

**लोकाभिरामां स्वतनुं धरणाध्यानमङ्गलाम् ।**
**योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत् स्वकम् ।। ६ ।।**

---

हरेः स्वलोकनिर्याणप्रकारादिकं कथयत्यस्मिन्नध्याये । तत्रादौ ब्रह्मादीनामागतिमाह **अथेति** । भवान्या रुद्राण्योमया ।। १ ।। द्विजा ऋषयः ।। २ ।। विभूतीः स्वसन्निधानस्थानविशेषानिन्द्रादीन् । आत्मानं स्वमात्मनि मूलरूपे ।। ३-५ ।।

आग्नेय्या योगधारणया जातेनाग्निना तनुमदग्ध्वा परं पदं स्वकं धामाविशत् । ''आग्नेय्याऽन्ये धारणया देहं दग्ध्वा परं पदम् । यान्ति देवाः समस्ताश्च तेषामन्यास्तनूर्हरिः । नृसिंहरूपी सर्वेषां भित्त्वा ताभिरलंकृतः । नृत्यति प्रलये देवः स्वयं कृष्णादिरूपवान् । अदग्ध्वैव तनुं याति नित्यानन्दस्वरूपतः'' इति वचनादुक्तार्थ एवाङ्गीकरणीय इति भावः ।। ६ ।।

दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ।
सत्यं धर्मो धृतिर्भूतिः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥

देवादयो ब्रह्ममुखा आविशन्तं स्वधामनि ।
अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥

सौदामिन्या यथाऽऽकाशे यान्त्या भित्त्वाऽभ्रमण्डलम् ।
गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ९ ॥

ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ।
विस्मितास्तां प्रशंसन्तः स्वंस्वं लोकं ययुस्तदा ॥ १० ॥

राजन् परस्य तनुभृज्जननाप्ययेहा
मायाविडम्बनमवैहि यथा नटस्य ।
सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते
संहृत्य चात्ममहिमोपरतः स आस्ते ॥ ११ ॥

---

तं कृष्णमनु ॥ ७ ॥ अत्राप्येकं माहात्म्यातिशयमाह **देवादय** इति ॥ ८ ॥ यथा मर्त्यैरभ्रमण्डलं भित्त्वा आकाशे यान्त्याः सौदामिन्या गतिर्न लक्ष्यते तथा कृष्णस्य गतिर्दैवतैर्न लक्ष्यते ॥ ९ ॥

जन्मादिमतो हरेस्तनुमदग्ध्वेति कथं घटत इति तत्राह **राजन्निति** । परस्य सर्वविलक्षणस्य परमात्मनः तनुभृज्जननवदप्ययवच्च ईहा चेष्टा मायाविडम्बनं स्वेच्छानुकरणमवैहि । यथा नटस्य राजादिरूपग्रहणविषयचेष्टा । "प्रजापतिश्चरति गर्भे अन्तः", "अजायमानो बहुधा विजायते", "अजातो जातवद् विष्णुरमृतो मृतवत् तथा । मायया दर्शयेन्नित्यमज्ञानां मोहनाय च" इति प्रमाणबाहुल्याद् हरेरयं स्वभाव इत्यर्थः । स्वतो देहाद्यभावे हरेः सर्जनादिकं कथं युज्यत इति तत्राह **सृष्ट्वेति** । स हरिरात्मना स्वरूपशक्त्या इदं जगद् सृष्ट्वा अनुविश्यावतारैर्विहृत्य अन्ते प्रलये संहृत्य चात्ममहिमोपरतः स्वमहिम्नि स्थित आस्ते । अनेन स्वमहिम्नैव सर्वं घटत इत्युक्तं भवति ॥ १०-११ ॥

**मर्त्येन यो गुरुसुतं यमनीतलोकं**
**त्वां चानयच्छरणदः परमास्त्रदग्धम्।**
**[१]जिग्ये पुरेऽन्तकमपीशतनावनीशः**
**[२]किं स्वावने स्वरनयन् मृगयुं सदेहम्॥ १२॥**

**तथाप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक्।**
**नैच्छत् प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्य गतिं प्रदर्शयन्॥ १३॥**

---

एवमपि मृगयुविद्धत्वं हरेर्जननादिकमापादयतीत्यत्राह **मर्त्येनेति**। यः कृष्णः मर्त्येन शरीरेण सह यमनीतलोकं यमेन नीतो लोकं समुद्दिश्य यः स तथा तम्, यमेन स्वलोकानीतमित्यर्थः, गुरोः सान्दीपिनेः सुतम्, द्रौणेः परमास्त्रदग्धं त्वां चानयत्। तथा यो बाणपुरेऽन्तकं रुद्रमपि जिग्ये। रुद्रो मा विशान्तक इति श्रुतेः। यद्वा पारिजातापहरणे अन्तकं यममपि जिग्य इति। अन्तकान्तकमिति पाठे यमस्याप्यन्तकं रुद्रमित्यर्थः। सोऽनीशः अन्येशरहितः श्रीकृष्णः ईशतनौ सर्वेशानां रुद्रादीनामपीशत्वं तनोतीतीशतनुस्तस्मिन् देहे मृगयोरनीश्वरः स्यात् किम्। न स्यादेव। अतोपि सामर्थ्यप्रकटनाय विप्रशापमनुस्मरन्नविद्ध एव स्वभक्तं व्याधशरीरान्मोचयन् तेन शल्येषुणा विद्ध इव तस्य स्वात्मानं प्रकाश्य तेन प्रसादितस्तस्मै स्वलोकं ददावित्यर्थः॥ १२॥

तर्हि किं बलभद्रादीन् सदेहान् स्वलोकं नानैषीदिति तत्राह **तथापीति**। यद्यप्यशेषस्थिति-सम्भवाप्ययेषु अनन्यहेतुः स्वयमेव हेतुः हेत्वन्तरविवर्जितः। कुलालस्य मृद्दण्डाद्यपेक्षावत् प्रकृत्यादिशक्त्यपेक्षितत्वेन कथं हेत्वन्तरं नास्तीत्यत उक्तम् **अशेषशक्तिधृगिति**। तथापि बलभद्रादीनां वपुः प्रणेतुं नैच्छत् भगवान्। मर्त्येन मरणशीलेन देहेन किं प्रयोजनमिति भावेनात्र शेषितम्, हरिणेति शेषः। अनेनापि किं प्रयोजनमत उक्तम् **स्वस्य गतिमिति**। स्वस्य गतिं स्वभक्तानां स्वविषयज्ञानलक्षणयोगगतिं प्रदर्शयन्। एवं प्रदर्शनं प्रयोजनमित्यर्थः। अतः समर्थोऽपि प्रयोजनाभावान्न नीतवानित्यर्थः। अतः स्वशरीरं नेतुं नैच्छदित्यर्थोऽनुपपन्नः, उक्तहेतुविरुद्धत्वादसम्भवाच्चेति। "जगतो मोहनार्थाय भगवान् पुरुषोत्तमः। दर्शयन् मानुषीं चेष्टां तथा मृतकवद् विभुः। प्रकाशयेददेहोपि मोहनाय दुरात्मनाम्। मायया मृतकं देहं तदा सृष्ट्वा प्रदर्शयेत्। कुतो हि मृतकं तस्य मृत्यभावात् परात्मनः" इति प्रमाणसद्भावाच्च॥ १३॥

---

१. जिग्येन्तकान्तकमपीशतनाविति पाठान्तरम्।
२. चतुर्थः पादो व्याख्यानेन न संवदते।

य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम्।
प्रयतः कीर्तयेद् भक्त्या तामेवाप्नोत्यनुत्तमम्॥ १४॥

दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः।
पतित्वा चरणावस्रैर्न्यषिञ्चत् कृष्णविच्युतः॥ १५॥

कथयामास निधनं वृष्णीनां कृत्स्नशो नृप।
तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः॥ १६॥

तत्र वै त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः।
व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आयुधैः॥ १७॥

देवकी रोहिणी चैव वसुदेवस्तथा सुतौ।
कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम्॥ १८॥

प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः।
उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः॥ १९॥

रामपत्न्याश्च तं देहमुपगुह्याग्निमाविशन्।
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः।
कृष्णपत्न्योऽविशन्नग्निं रुग्मिण्याद्यास्तदात्मिकाः॥ २०॥

---

एतज्ज्ञानस्य स्वप्राप्तिहेतुत्वाच्चोक्त एवार्थ इति भावेनोक्तमुपसंहरति **य एतामिति**॥ १४॥ कृष्णोक्तो दारुकः किमकरोदिति तत्कथाशेषमाह **दारुक इति**॥ १५॥

भगवद्विषयां स्मृतिं विजहुः, क्षणमिति शेषः॥ १६-१८॥

तदात्मिकास्तदेकचित्ताः। ''अग्नावन्तर्दधे भैष्मी सत्यभामा वने तथा। न तु देहवियोगोस्ति तयोः शुद्धचिदात्मनोः'' इति प्रमाणाद् रुग्मिणीसत्यभामयोरन्तर्धानमवगन्तव्यम्। अन्याः षण्महिष्योऽग्नौ देहं त्यक्तवत्य इति भावः॥ १९-२०॥

अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ।
आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥

बन्धूनां नष्टगोत्राणामर्जुनः साम्परायिकम् ।
हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥

द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् ।
वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ २३ ॥

नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः ।
स्मृत्याऽशेषाशुभहरः सर्वमङ्गलमङ्गलः ॥ २४ ॥

स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ।
इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥

श्रुत्वा सुहृद्वधं राजन्नर्जुनात् ते पितामहाः ।
त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥

य एतद् देवदेवस्य विष्णोः कर्माणि जन्म च ।
कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥

इत्थं हरेर्भगवतो रुचिरावतारं
वीर्याणि चास्य चरितानि च मङ्गलानि ।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो
भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥

॥ इति एकत्रिंशोऽध्यायः ॥

---

आत्मानं स्वम् ॥ २१ ॥ साम्परायिकं परेतविषयं कर्म ॥ २२ ॥

अन्यत्र ग्रन्थान्तरे । इह अस्मिन् ग्रन्थे । परमहंसगतौ परमहंसानामाश्रये हरौ, शरणे वा ॥ २३-२८ ॥

यत्तत्वं निगमोपि वक्तुमनलं शाखेन्दुवल्लक्षितं
ब्रह्माद्याः किमुतावलम्बविधुरा निर्दोषचित्ता अपि ।
अप्येवं जलवेगवन्मतिगतेरेषां सदैकं पदं
तद् ब्रह्माख्यमखण्डबुद्धिहृदयावासं प्रवन्दे परम् ।। १ ।।

एकादशस्कन्धगता पदरत्नावलिस्त्वियम् ।
अधिग्रीवं मुकुन्दस्य वनमालेव राजताम् ।। २ ।।

**इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थभट्टारकस्य कृतौ श्रीमद्भागवतटीकायां पदरत्नावल्याम् एकादशस्कन्धे एकत्रिंशोध्यायः ।।**

**।। समाप्तश्चायं स्कन्धः ।।**

## ॥ अथ द्वादशस्कन्धः ॥

### ॥ अथ प्रथमोऽध्यायः ॥

श्री शुक उवाच -

योऽन्त्यो रिपुञ्जयो नाम भविष्योऽथ बार्हद्रथः ।
तस्यामात्यस्तु मुनिको हत्वा स्वामिनमात्मजम् ॥ १ ॥

प्रद्योतसञ्ज्ञं राजानं कर्ता यत् पालकः सुतः ।
विशाखयूपस्तत्पुत्रो भविता चाजकस्ततः ॥ २ ॥

नन्दिवर्धस्तु तत्पुत्रः पञ्चप्रद्योतना इमे ।
अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीमिमाम् ॥ ३ ॥

शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः ।
क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥ ४ ॥

विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ।
दर्भकस्तत्सुतो भाव्यो दर्भकस्याजयस्ततः ॥ ५ ॥

---

### पदरत्नावली

पद्मावासालयं नत्वा पद्मभूपूर्वस्वर्गीड्यम् ।
द्वादशस्कन्धं व्याकुर्वे द्वादशात्मप्रीत्यै नित्यम् ॥

श्रीनारायाणक्लृप्तशिष्टवंशादिकथनेन तन्माहात्म्यमेव कथयत्यस्मिन् द्वादशस्कन्धे । तत्र प्रथमेऽध्याये वंशशेषं कथयति **य इति** । अन्त्यः वंशावसानभवः । कस्य वंशान्ते भव इत्यत उक्तम् **बार्हद्रथ इति** । स्वामिनं रिपुञ्जयम् । आत्मजम्, स्वस्येति शेषः ॥ १ ॥

यद् यस्य प्रद्योतस्य सुतः पालको नाम । यदित्यस्याव्ययत्वात् षष्ठी । यद्वा यः पालको यस्य यत्पालकः स तस्य सुत इति (?) ॥ २ ॥

प्रद्योतनेन साकं पञ्च । तेषां राज्यावधिकालमाह **अष्टेति** । भोक्ष्यन्ति पालयन्ति । भुजोऽनवन इत्यतः परस्मैपदम् । पूर्ववंशवैलक्षण्यद्योतनार्थो वा व्यत्यासः ॥ ३ ॥

नन्दिवर्धन आजेयो महानन्दिश्च तत्सुतः ।
शैशुनागा दशैते वै षष्ट्युत्तरशतत्रयम् ॥ ६ ॥

समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः ।
महानन्दिसुतो राजन् शूद्रीगर्भोद्भवो बली ॥ ७ ॥

महापद्मपतिः कश्चित् कुलक्षत्रविनाशकृत् ।
ततो नृपा भविष्यन्ति शूद्रप्राया अधार्मिकाः ॥ ८ ॥

स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः ।
शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ ९ ॥

तस्य चाष्टौ भविष्यन्ति सुमालिप्रमुखाः सुताः ।
य इमां पृथिवीं राजन् भोक्ष्यन्ति स्म शतं समाः ॥ १० ॥

नवनन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति ।
तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥ ११ ॥

स एव इन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ।
तत्सुतो वारिराजस्तु ततश्चाशोकवर्धनः ॥ १२ ॥

सुयशा भविता यस्य सङ्गतः सुयशःसुतः ।
शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १३ ॥

शतधन्वा ततस्तस्य भविता तु बृहद्रथः ।
मौर्या ह्येते नव नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ १४ ॥

समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ।
हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ ॥ १५ ॥

---

महानन्दिं विशिनष्टि **महानन्दीति** ॥ ४-७ ॥

महानन्दिभवः क इति (आह) **कश्चिदिति** । महापद्मसंख्यया संख्याता सेना महापद्मा, तस्याः पतिः । कुलक्षत्रविनाशकृत् ततः कुलक्षत्राभावात् ॥ ८ ॥ स महापद्मनामा नन्दः ॥ ९-१० ॥

पुष्यमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति ।
अग्निमित्रस्ततस्तस्मात् सुधेष्ठो भविता ततः ॥ १६ ॥

वसुमित्रो भद्रकश्च पुलिन्दो भविता ततः ।
ततो घोषः सुतस्तस्माद् वज्रमित्रो भविष्यति ॥ १७ ॥

ततो भागवतस्तस्माद् देवभूतिः कुरूद्वह ।
शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥ १८ ॥

ततः कण्वानियं भूमिर्यास्यत्यल्पगुणा नृपान् ।
शुङ्गं हत्वा देवहूतिं कण्वोऽमात्यस्तु कामिनम् ॥ १९ ॥

स्वयं करिष्यते राज्यं वसुदेवो महामतिः ।
तस्य पुत्रस्तु भूमित्रस्ततो नारायणः सुतः ॥ २० ॥

सुशर्माख्योऽस्य नृपतिः कण्वानां भविता ततः ।
काण्वायना[१] इमे भूमिं चत्वारिंशच्च पञ्च च ॥ २१ ॥

शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ।
हत्वा कण्वं सुशर्माणं तद्भृत्यो वृषलो बली ॥ २२ ॥

---

नन्देन सह नवसंख्यान् नन्दान् नन्दवंशजान् उद्धरिष्यति, आपद इति शेषः । मौर्या मुरवंशजाः । हीनजातयः कैवर्ताः ॥ ११ ॥ कथं भोक्ष्यन्तीत्यत आह **स एवेति** । स एव नवनन्दाचार्यः ॥ १२ ॥ मौर्यराजा मौर्याः ॥ १३-१४ ॥ वंशव्यत्यासं कथयति **हत्वेति** ॥ १५ ॥ पुष्यमित्र इत्यादि जातिप्रयुक्तं नाम शुङ्ग इत्यादि विशेषनाम ॥ १६ ॥

शुङ्गा शुङ्गवंशजाः नृपाः ॥ १७-१८ ॥ कण्वाः कण्ववंशजाः । तान् नृपान् यास्यति । अल्पगुणा ओषध्यादिगुणसम्पत्तिरहिता । कथं कण्वान् यास्यतीत्यत आह **शुङ्गमिति** । शुङ्गं शुङ्गाख्यं राजानं देवहूतिं हत्वा नाम्ना वसुदेवः कण्वः । तस्य शुङ्गस्यामात्यः । कामिनं ग्राम्यकर्मासक्तम् ॥ १९ ॥ काण्वायना कण्ववंशभावाः ॥ कण्वानां चतुर्थः सुशर्मा । इमे च वसुदेवादयः काण्वायना वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति । तस्य सुशर्मणो भृत्यः ॥ २०-२२ ॥

---

१. 'कण्वायना' इति क्वचित् पाठः ।

गां भोक्ष्यत्यन्ध्रजातीयः कश्चित्कालमसत्तमः ।
कृष्णनामा च तद्भ्राता भविता पृथिवीपतिः ॥ २३ ॥

श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ।
लम्बोदरस्तु तत्पुत्रस्तस्माच्छिविलको नृप ॥ २४ ॥

मेघस्वनः शिबिलकादटमानस्तु तस्य च ।
अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ २५ ॥

पुरीषसेरुस्तत्पुत्रस्ततो राजा सुनन्दनः ।
चकोरो द्दढको यस्य शिवख्यातिररिन्दमः ॥ २६ ॥

तस्यापि गोमतीपुत्रः पुरीमान् भविता ततः ।
शिवशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः ॥ २७ ॥

विजयस्तत्सुतो भाव्यश्चन्द्रबीजः सुलोमधीः ।
एते त्रिंशन्नृपतयश्चत्वार्यष्टशतानि च ॥ २८ ॥

षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन ।
सप्ताभीरा आन्ध्रभृत्या दश गर्दभिनो नृपाः ।
कङ्काः षोडशभूपाला भविष्यन्त्यतिलोलुपाः ॥ २९ ॥

ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्कराः ।
भूयो दश पुरुण्डाश्च मौना एकादशैव तु ॥ ३० ॥

एते भोक्ष्यन्ति पृथिवीं दशवर्शशतानि च ।
नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥ ३१ ॥

---

तस्य वृषलस्य भ्राता ॥ २३ ॥ हालेयः हलान्मेयः ॥ २४-२७ ॥

एते आभीरादयो मौनव्यतिरिक्ताः पञ्चषष्टिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति । ततः पूर्वोक्ता एवैकादशमौनाः त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति । मौनाः मौनकुलेजाता एकादश । त्रीणि अब्दशतानि ॥ २८-३१ ॥

भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि वै संस्थिते कुले ।
किलकिलायां नृपतयो भूतवंशोपवङ्गरैः ॥ ३२ ॥

शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः ।
युक्ता एते वर्षशतं भविष्यन्त्यधिकानि षट् ॥ ३३ ॥

तेषां त्रयोदश सुता भवितारोऽथ बाह्लिकाः ।
पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३४ ॥

एककाला इमे भूपाः सप्तान्ध्राः सप्त कोसलाः ।
वैदूरपतयो भाव्या नैषधास्तत एव हि ॥ ३५ ॥

नैषधानां तु भविता विश्वस्फूर्जिः पुरञ्जयः ।
करिष्यत्यवरान् वर्णान् पुलिन्दयदुमद्रकान् ॥ ३६ ॥

प्रजाश्च ब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ।
वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ ३७ ॥

अनुगङ्गमाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ।
सौराष्ट्रावन्त्याभीराश्च शूद्राश्चार्बुदमालवाः ॥ ३८ ॥

---

कुले मौनकुले संस्थिते नष्टे किलकिलायां नगर्यां तस्य शिशुनन्देर्भ्राता भूतवंशोपवङ्गैर्युक्ता षट्षड्वर्षाण्यधिकानि ॥ ३२ ॥ बाह्लिका बाह्लीका बाह्लीकदेशपतयः ॥ ३३-३४ ॥

तथा आन्ध्रा अन्ध्रदेशपतयः कोसला कोसलविषयपतयः, वैदूरयः वैदूराख्यनगरपतयो निषधाश्च । एते तत्तद्देशनामभिः प्रख्याताः तुल्यकाला अखण्डमण्डलेषु[1] भूपाः तत एव तेभ्यो बाह्लीकेभ्य एव भाव्या भविष्यन्ति ॥ ३५ ॥

ततश्च नैषधानां विषयाणां राजा पुरञ्जयः, शत्रूणामिति शेषः, स पुलिन्दयदुमद्रकान् अवरान् नीचान् वर्णान् करिष्यति । किं बहुना । सर्वाः प्रजाश्चापि विवक्षिताः ॥ ३६ ॥

ब्रह्मभूयिष्ठाः बहुलवेदविदः । स्थापयिष्यति स्थिरीकरिष्यति ॥ ३७ ॥

अनुगङ्गं गङ्गासमीपे । आप्रयागं प्रयागाख्यक्षेत्रपर्यन्तं दीर्घां मेदिनीं पद्मवत्यां पुरि स्थितिं

---

१. अखण्डमण्डलेषु इति केषुचित् कोशेषु नास्ति ।

व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ।
सिन्धोस्तटं चन्द्रभागां कार्श्वीं काश्मीरमण्डलम् ।। ३९ ।।

भोक्ष्यन्ति शूद्रा व्रात्याश्च म्लेञ्छा अब्रह्मवर्चसः ।
तुल्यकाला इमे राजन् म्लेञ्छप्रायाश्च भूभृतः ।। ४० ।।

एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ।
स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ।। ४१ ।।

उदितास्तमितप्राया अल्पसत्वाल्पकायुषः ।
असंस्कृताः क्रियाहीना रजसा तमसा वृताः ।। ४२ ।।

प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ।
तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ।। ४३ ।।

अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ।। ४४ ।।

।। इति प्रथमोऽध्यायः ।।

---

कृत्वा । आप्रयागं गुप्तां पालिताम् (वा) । तदनन्तरं सौराष्ट्राश्च आवन्त्याश्च आभिराश्च शूद्रश्च अर्बुदाश्च मालवाश्च ।। ३८ ।। व्रात्याः संस्कारहीनाः द्विजाः शूद्रप्राया जनाधिपतयो भविष्यन्ति ।। ३९-४० ।।

किञ्चैते सर्वे अधर्मानृतपराः अधर्मे अनृते च परिनिष्ठिताः । फल्गुदा अल्पदातारः।। ४१ ।।

उदितास्तमितप्राया बहुलं सूर्योदयमस्तंगतमेव जानन्ति नापरम् । अल्पकालावस्थायिनो वा । असंस्कृताः गर्भाधानादिसंस्कारहीनाः ।। ४२ ।।

प्रजा भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति । किञ्च एवंविधा ये त एव नाथा येषां ते तन्नाथा जनपदा देशवर्तिनो मनुष्याः तच्छीलाचारवादिनः तेषां शीलं चाचारश्च वादश्च तद्वन्तः ।। ४३-४४ ।।

।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य प्रथमोऽध्यायः ।।

## ।। अथ द्वितीयोऽध्यायः ।।

**श्रीशुक उवाच -**

**ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ।**
**कालेन बलिना राजन् नङ्क्ष्यन्त्यायुर्बलं स्मृतिः ।। १।।**

**वित्तमेव कलौ नॄणां जन्माचारगुणोदयाः ।**
**धर्मन्यायव्यवस्थायां कारणं बलमेव हि ।। २ ।।**

**दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ।**
**स्त्रीत्वे पुंस्त्वे चातिरतिर्विप्रत्वे सूत्रमेव हि ।। ३ ।।**

**लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ।**
**अवृत्त्यन्यायदौर्बल्ये पाण्डित्येऽचापलं वचः ।। ४ ।।**

---

कल्क्यवतारं तच्चरितं च युगविभागलक्षणं च वक्त्यस्मिन्नध्याये । तत्रादौ कलिवैभवमाह **ततश्चेति** । कालक्षयानन्तरं[१] धर्मादयो नङ्क्ष्यन्तीत्यन्वयः । कारकाभावादिति शेषः ।। १ ।।

यदि कलौ नृणां वित्तमस्ति तर्ह्येव तेषां जन्मादयः, पूज्याः स्युरिति शेषः । अयं धर्मोऽयं न्याय इति व्यवस्थायां बलमेव कारणम् । धनमिति वा पाठः ।। २ ।।

अभिरुचिः अन्योन्यस्नेहलक्षणेच्छा हेतुः, न कुलगोत्रादिशास्त्रीययोगः । व्यावहारिके क्रयविक्रयादिव्यवहारविषये मायैव हेतुः । अतिरतिः अतितरामात्मनो दर्शनीयताविशेषः[२] । सूत्रं तन्तुलक्षणम् ।। ३ ।।

आश्रमाणां ख्यातौ ज्ञाने ब्रह्मचर्याद्याश्रम इति वक्तव्ये अन्योन्यापत्तिकारणम् आश्रमादाश्रमान्तरप्राप्तिकारणं लिङ्गमुपाध्यायादिलक्षणं लाञ्छनम्[३] । अन्यायदौर्बल्ये अन्यायाकरणे

---

१. प्रजाक्षयानन्तरमिति पाठः स्यात् । पूर्वाध्यायान्ते तथैवोक्तेः ।

२. स्त्रीत्वस्य पुंस्त्वस्य प्रदर्शनपरतेत्यभिप्रायः स्यात् ।

३. आश्रमख्यातौ अयमाश्रमीति प्रसिद्धिविषये अन्योन्यापत्तिः परस्परं नमनं प्रतिनमनं च । तयोश्च कारणं लिङ्गं दण्डकमण्डल्वादिकमेव न विद्या - इति सत्यधर्मतीर्थाः ।

अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु ।
स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥

दूरेवार्यटनं तीर्थं लावण्ये केशधारणम् ।
उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥

दाक्ष्यं कुटुम्बभरणे यशोर्थे धर्मसेवनम् ।
एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥ ७ ॥

ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ।
प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥

आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ।
शाकमूलामिषक्षौद्रफलपुष्पादिभोजनाः ॥ ९ ॥

अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः ।
शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः ॥ १० ॥

---

अवृत्ति वृत्तिराहित्यं वृत्त्यभाव एव हेतुः । कृतो न्यायो न्याय इत्यर्थः[१] (?) । अचापलम् अचञ्चलतालक्षणं वचः, कारणमित्यनुवर्तते ॥ ४ ॥

अनाढ्यता दरिद्रत्वमसाधुत्वे दुष्टत्वे । त्वं मम जाया इति स्वीकारो हेतुः । प्रसाधनं शरीरस्य शुद्धिरलङ्कारो वा ॥ ५ ॥

दूरेवार्यटनं दूरतरजलयात्रा यत्र क्रियते तत् तीर्थं नतु गुर्वादि[२]। केशधारणं धम्मिल्लधारणम् । उदरम्भरता स्वोदरपूर्णता स्वार्थः स्वप्रयोजनम् ॥ ६ ॥ ब्रह्म ब्राह्मणः । दस्यूनां धर्माणि चौर्यादीनि येषां ते तथा तैः ॥ ७-८ ॥

आच्छिन्नदारद्रविणाः बलादाकृष्टभार्यावित्ताः । क्षौद्रं मधु । मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुरित्यभिधानम् । शाकादि भोजनं येषां ते तथा ॥ ९ ॥ दुर्भिक्षकरनिमित्तपीडिताः । हिमं नीहारः ॥ १० ॥

---

१. अस्पष्टमिदं वाक्यम् । कुतो न्यायो न्याय इत्यर्थ इति क्वचित् पाठः ।
२. न तु गुर्वादीति क्वचित् कोशे नास्ति ।

क्षुत्तृषाव्याधिभिश्चैव सन्तप्यन्ते च चिन्तया।
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम्॥ ११॥

क्षीयमाणेषु देहेषु देहिनां कलिदोषतः।
वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम्॥ १२॥

पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु।
चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु॥ १३॥

शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु।
गृहप्रायेष्वाश्रमेषु योनिप्रायेषु बन्धुषु॥ १४॥

अणुप्रायेष्वौषधीषु शमिप्रायेषु स्थास्नुषु।
विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु॥ १५॥

इत्थं कलौ गतप्राये जनेषु परधर्मसु।
धर्मत्राणाय सत्वेन भगवानवतरिष्यति॥ १६॥

चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः।
धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये॥ १७॥

शम्बलग्राममुख्यस्य ब्राह्मणस्य महात्मनः।
भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति॥ १८॥

---

तृषया तृष्णया। व्याधिभिः कुष्ठादिभिः॥ ११-१२॥

चौर्याद्यर्थं नानावृत्तयो येषां ते तथा॥ १३॥ छाग अत्र तुगभावो लिङ्गव्यत्यासं प्रति गृहमायना एव[१]। बन्धुत्वं योनिसम्बन्धमात्रम्॥ १४॥ अणुप्रायेषु कक्षमाषप्रचुरासु। जनशून्यप्रायेषु॥ १५-१६॥

विष्णोर्जन्म कर्म च साधूनां धर्मत्राणाय बुष्कर्मापनुत्तये च, स्यादिति शेषः॥ १७॥ शम्बलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसो ब्राह्मणस्य भवने गृहे॥ १८॥

---

१. इदं वाक्यमस्पष्टार्थम्। सर्वत्र कोशेष्वेवमेव पाठः। नूनं लेखक प्रमादः। छागीप्रायास्विति वक्तव्ये छागप्रायास्विति लिङ्गव्यत्यासः। तुगभावः स्पष्टः।

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ।
असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥

विचरन्नसिमान् क्षोण्यां हयेनाप्रतिमद्युतिः ।
नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति ॥ २० ॥

अथ तेषां भविष्यन्ति मनांसि विशदानि वै ।
वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥ २१ ॥

पौरजानपदानां वै हतेष्वखिलदस्युषु ।
तेषां प्रजाविसर्गश्च स्थविष्ठः सम्भविष्यति ॥ २२ ॥

वासुदेवे भगवति सत्वमूर्तौ हृदि स्थिते ।
यदाऽवतीर्णो भगवान् कल्किर्धर्मपतिर्हरिः ।
कृतं भविष्यति तदा प्रजासूतिश्च सात्विकी ॥ २३ ॥

यदा चन्द्रश्च सूर्यश्च तथा तिष्ये बृहस्पतिः ।
एकराशौ समेष्यन्ति तदा भवति तत् कृतम् ॥ २४ ॥

---

आशुगं शीघ्रगामिनम् ॥ १९ ॥ नृपलिङ्गच्छदः राजलक्षणच्छन्नान् ॥ २० ॥

वासुदेवस्याङ्गरागस्य चन्दनाद्यनुलेपस्य प्रशस्तपुण्यगन्धेन युक्तं वायुं स्पृशन्तीति वायुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशस्तेषाम् ॥ २१ ॥

प्रजाविसर्गः सन्ततीनामुत्पत्तिः । स्थविष्ठो बहुलः ॥ २२ ॥ प्रजासूतिः सन्तानोत्पत्तिः ॥ २३ ॥ कृतप्रारम्भे लक्षणान्तरमाह **यदेति** । तिष्यः पुष्यः । चन्द्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रयोगः तदा कृतयोगं भविष्यति । यद्यपि प्रतिद्वादशाब्देर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु[1] तेषां त्रयाणामपि पुष्ययोगः सम्भवति तथापि तेषां सहप्रयोगो[2] अत्र विवक्षितः । समेष्यन्तीति वचनात् ॥ २४ ॥

---

१. अस्पष्टमिदं वाक्यम् । एकस्मिन् कोशे यद्यपीत्यादि वाक्यमेव नास्ति।
२. सहप्रवेश इति पाठः स्यात् । सहप्रवेशोऽत्राभिमत इति सत्यधर्मतीर्थाश्च ।

**येऽतीता वर्तमाना ये ये भविष्यन्ति पार्थिवाः ।**
**ते त उद्देशतः प्रोक्ता वंशजाः सूर्यसोमयोः ॥ २५ ॥**

**आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ।**
**एतद् वर्षसहस्रं तु शतं पञ्च दशोत्तरम् ॥ २६ ॥**

**सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ।**
**तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि ॥ २७ ॥**

**तेनैते ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ।**
**ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाम् ॥ २८ ॥**

---

एवं नवमस्कन्धमारभ्यानुक्रान्तं वैवस्वतमनोर्वंशद्वयमुपसंहरति **येऽतीता इति** । उद्देशतः संक्षेपतः ॥ २५ ॥

कलियुगावान्तरविशेषमाह **आरभ्येति** । वर्षसहस्रं पञ्चदशोत्तरशतं चेति कयापि विवक्षयाऽवान्तरसंख्येयम् । वस्तुतः सहस्रवत्सरं भोक्ष्यन्तीत्युक्तं नवमस्कन्धे ''ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्'' इति । ''शिशुनागाश्च षष्ठ्युत्तरशतत्रयम् । भोक्ष्यन्ति पृथिवीम्'' इति अत्रैवोक्तम् ॥ २६ ॥

कलेः प्रवृत्तिं बुद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह **सप्तर्षीणामिति** । अयमर्थः । प्रागग्रं शकटाकारं सप्तर्षिमण्डलम् । तत्र किञ्चिदुन्नतरेखाया अग्रस्थानीयो मरीचिः । ततः पश्चादानम्रयुगन्धराकारो वसिष्ठः सभार्यः । ततः पश्चादीषदुन्नतस्तेषां मूलस्थानीयोऽङ्गिराः । ततः पश्चाच्चतुरश्रताराचतुष्के ईशान्येऽत्रिः । ततो दक्षिणतः पुलस्त्यः । पुलस्त्यात् पश्चिमतः पुलहः । तत उत्तरतः क्रतुः । एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसञ्ज्ञौ तयोस्तु मध्ये तयोः पूर्वयोश्च मध्ये यत् समं दक्षिणतः[१] समदेशावस्थितमश्विन्यादिषु[२] यदन्यतमं नक्षत्रं दृश्यते तेन तथैव युक्ता नृणामब्दशतं तिष्ठन्ति । ते च द्विजास्त्वदीये काले अधुना मघामाश्रिता वर्तन्ते ॥ २७-२८ ॥

---

१. अश्विन्यादिनक्षत्रचक्रस्य सप्तर्षिमण्डलाद् दक्षिणतो विद्यमानत्वात् ।

२. समानदेशावस्थितमित्यर्थः । पूर्वयोः पुलहक्रत्वोर्यन्मध्यं तत्समानदेशे दक्षिणतः स्थितं यदश्विन्यादिनक्षत्रेष्वन्यतमं तेन युक्ता अब्दशतं तिष्ठन्तीति यावत् ।

विष्णोर्भगवतो भागः कृष्णाख्योऽसौ दिवं गतः।
तदाऽविशत् कलिर्लोकं पापे यद् रमते जनः॥ २९॥

यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः।
तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत्॥ ३०॥

यदा देवर्षयः सप्त मघासु विचरन्ति हि।
तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः॥ ३१॥

यदा मघाभ्यो यास्यन्ति पूर्वाषढां महर्षयः।
तदा नन्दात् प्रभृत्येषः कलिर्वृद्धिं गमिष्यति॥ ३२॥

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि।
प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः॥ ३३॥

दिव्याब्दानां सहस्रे तु प्रतियाते पुनः कृतम्।
भविष्यति यदा नृणां मन आत्मप्रकाशकम्॥ ३४॥

इत्येवं मानवो वंशो यथा संख्यायते भुवि।
तथा विट्शूद्रविप्राणां वंशा ज्ञेया युगेयुगे॥ ३५॥

---

तेषु ऋषिषु मघासु वर्तमानेषु सत्सु॥ २९॥ पराक्रान्तुं स्वसामर्थ्यं दर्शयितुम्॥ ३०॥ कियन्तं कालं विचरणमित्यत उक्तम् द्वादशेति॥ ३१॥ अस्तु कलेः परं कश्चित् कालं हित्वा पश्चात् वृद्धिः सा कदेति तत्राह **यदेति**॥ ३२॥

कृष्णस्वर्गारोहणानन्तरं कश्चित् कालं हित्वा पश्चादाविष्टः किं कलिरुत तस्मिन्नेवाहनीति सन्देहं व्यवच्छिनत्ति **यस्मिन्निति**॥ ३३॥

ततः कियान् कालः कृतप्रारम्भायेति तत्राह **दिव्येति**। यदा यस्मिन् कृतयुगे। आत्मप्रकाशकं परमात्मप्रकाशकं, भवतीति शेषः॥ ३४॥

इति शब्दः समाप्तिवचनः। इति समाप्तिपर्यन्तं कथित एष मानवो वंशः वैवस्वतमनुसम्बन्धी भुवि यथा संख्यायते तथा विट्शूद्रविप्राणां वंशा अपि युगेयुगे ज्ञेया बोद्धव्या इत्यतिदेशोऽयम्॥ ३५॥

एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम्।
कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ३६ ॥

देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः।
कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥

ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ।
वर्णाश्रमयुतं धर्मं पूर्ववत् प्रथयिष्यतः ॥ ३८ ॥

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्।
अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९ ॥

राजन्नेते मया प्रोक्ता नरदेवास्तथा परे।
भूमौ ममत्वं कृत्वाऽन्ते हित्वेमां निधनं गताः ॥ ४० ॥

कृमिविड्भस्मसञ्ज्ञान्ते राजनाम्नोऽपि यस्य च।
भूतध्रुङ् मनुते स्वार्थं किं वेद निरयो यतः ॥ ४१ ॥

---

एतेषां सत्वे किं ज्ञापकमत्राह एतेषामिति। नामलिङ्गयुक्तानाम्। अनेनैतिह्यं प्रमाणमुक्तं भवति ॥ ३६ ॥

कृते धर्मप्रतिष्ठापकः क इति तत्राह **देवापिरिति**। महायोगबलान्वितौ महाज्ञानबलयुक्तौ, अणिमाद्यैश्वर्ययुक्तौ वा ॥ ३७ ॥

कानि युगानीत्यत्राह **कृतमिति** ॥ ३८-३९ ॥ एषामज्ञानमाह **राजन्निति** ॥ ४० ॥

राजनाम्नोऽपि यस्य शरीरस्यान्ते नाशे कृमिविड्भस्मसञ्ज्ञा तादृशं शरीरं प्राप्य भूतध्रुक् स्वार्थं मनुते न परप्रयोजनम्। यतो भूतद्रोहान्निरयो भवति तं वेद किम्। न वेदैव। यस्य पुरुषशरीरस्यान्त इति वा ॥ ४१॥

कथं सेयमखण्डा भूः पूर्वैर्मत्पुरुषैर्धृता।
मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥ ४२ ॥

तेजोऽबन्नात्मकं कायं गृहीत्वाऽऽत्मतया मुधा।
महीं ममतया चोभौ हित्वाऽन्तेदर्शनं गताः ॥ ४३ ॥

ये ये भूपतयो राजन् भुञ्जते भुवमोजसा।
कालेन ते कृताः सर्वे कथामात्राः कथासु वै ॥ ४४ ॥

॥ इति द्वितीयोऽध्यायः ॥

॥ अथ तृतीयोऽध्यायः ॥

श्रीशुक उवाच -

दृष्ट्वाऽऽत्मनिजयव्यग्रान् नृपान् हसति भूरियम्।
अहो मां विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ १ ॥

काम एष नरेन्द्राणां मोघः स्याद् विदुषामपि।
येन फेनोपमे पिण्डे येन विस्रम्भिता नृपाः ॥ २ ॥

---

स्वार्थमननप्रकारमाह **कथमिति**। भवन्त्यस्यां सत्वानीति भूः येयं मत्पूर्वैः पुरुषैर्धृता सेयं भूर्ममाखण्डा राजान्तरानधिकृता कथं स्यात्। मत्पुत्रस्य मत्पौत्रस्य च मद्वंशजस्य, कथं स्यादिति मत्वा। अहं पूर्वो यस्यां सा मत्पूर्वा ॥ ४२ ॥

तेजोबन्नमिदं कायमात्मतया नित्यत्वेन मुधा गृहीत्वा। अमी राजानो ममत्वेन गृहीत्वा। उभौ महीं देहं च हित्वा अदर्शनं मरणं गता भवन्तीत्यन्वयः ॥ ४३ ॥

साम्प्रतं तेष्वेकोपि नास्तीत्याशयेनाह य इति। पुराणादिगतकथासु कथामात्राः सर्वात्मना कथैव येषां ते तथा कृताः। स्वरूपतो न सन्तीति शेषः ॥ ४४ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य द्वितीयोऽध्यायः ॥**

चतुर्युगधर्मविभागः कलिदोषपरिहारश्चेत्येतदस्मिन्नध्यायेऽभिधीयते। तत्रादौ राज्ञां मौढ्यदर्शनेन

**पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः ।**
**ततः सचिवपौराप्तकरीन्द्रानथ कण्टकान् ॥ ३ ॥**

**एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ।**
**इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥ ४ ॥**

**समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा ।**
**कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥**

**यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ।**
**गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥ ६ ॥**

---

भूमेः परिहासप्रकारमाह **दृष्ट्वेति** । आत्मनो नितरां जये व्यग्रान् तदेकपरायणान् ॥ १ ॥ मौढ्यमेवोपपादयति **येनेति** ॥ २ ॥

कीदृशस्तेषां काम इति तत्राह **पूर्वमिति** । षड्वर्गं सन्ध्यादिलक्षणम् । निर्जयो नामोत्कर्षः । षडिन्द्रियविषयं वा[1] । अनेन भूम्येकसाधनाग्रहं[2] सूचयति । राजमन्त्रिणः राजा च मन्त्रिणश्च राजमन्त्रिणः । मन्त्री बुद्धिसहायः स्यादिति । ततो मन्त्रिजयानन्तरम् । सचिवः कर्मसहायः, अमात्या कर्मसचिवा इत्यमरः । आप्ता विश्वस्ताः । अथ पश्चात् कण्टकान् क्षुद्रशत्रून् ॥ ३ ॥

एवं क्रमेण राज्ञो जित्वा पृथिवीं जेष्यामः वशीकरिष्यामः इत्याशया अतितृष्णया । अन्तकं मृत्युम् ॥ ४ ॥

एवं केचिन्मां जित्वाप्यतितृष्णया अब्धिं विशन्तीत्यनेन द्वितीयादिजयाद्यं सूचयति । भूजयादिना न किञ्चिदपि प्रयोजनमपि त्वन्ततोऽनर्थ एवावशिष्यते मनोजयफलापेक्षयेत्याह **कियदिति** । आत्मजयस्य मनोजयस्य फलापेक्षया एतद् भूजयादिकं कियत्फलम् । आत्मजयेपि किं फलं येनायमेव साध्य इत्यत्राह **मुक्तिरिति** । आत्मजये मुक्तिरेव फलं यस्मात् तस्मादिति शेषः ॥ ५ ॥

इतोपि मज्जयकामा अज्ञा एवेत्याह **यामिति** । मनवस्तत्सुताश्च यां मां विसृज्य यथागता याता अबुद्धयः तां मां जेष्यन्तीत्यन्वयः । आत्मजयवतां त्यागशक्तिरन्येषामन्यथेति सूचयति ॥ ६ ॥

---

१. भूजयपरिपंथिविषयम् निर्जित्येत्यर्थः । षड्वर्गं कामादिकं निर्जित्येति सत्यधर्मतीर्थाः । तत्राप्येवमेवार्थः ।
२. भूमिसाधनैकाग्रहमित्यर्थः । एकशब्दो भिन्नक्रमः ।

मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः ।
जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ।। ७ ।।

ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः ।
स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ।। ८ ।।

पृथुः पुरूरवा गाधिर्भरतो नहुषोऽर्जुनः ।
मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ।। ९ ।।

तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः ।
भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृपः ।। १० ।।

हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ।
नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ।। ११ ।।

अन्ये च बहवो दैत्या राजानो ये प्रजेश्वराः ।
सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ।। १२ ।।

ममतां मय्यमर्त्यायां कृत्वोच्चैर्मर्त्यधर्मिणः ।
कथावशेषाः कालेन ह्यकृतार्था कृता अहो ।। १३ ।।

---

न केवलमितरेषां मत्कृते विग्रहः, अपि तु शरीरसम्बन्धिनामपि स्यादित्याह **मत्कृत इति** । अपिशब्दः पुत्रादीनामित्यनेन सम्बन्धयितव्यः । अयमपि प्रायिक इत्याह **असतामिति** । असतामप्रशस्तकर्मणाम् ।। ७ ।। किंप्रकारो विग्रह इति तत्राह **ममेति** ।। ८ ।। तत्र कांश्चिन्नृपान् निर्दिशति **पृथुरित्यादिना** ।। ९-१२ ।।

एते मर्त्यशरीरधर्मिणः सर्वेऽप्यमर्त्यायां मयि विषये ममतां कृत्वा अकृतार्था असाधितपुरुषार्थाः कालेन बलिना कथावशेषाः कृता हि यस्मात् तस्मादमीषामज्ञानमहो । अत आत्मजयेन भाव्यमित्यर्थः ।। १३।।

**कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्।**
**विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्नतु पारमार्थ्यम्॥ १४॥**

**यत्रोत्तमश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः।**
**तमेव नित्यं शृणुतादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः॥ १५॥**

---

निगमयति **कथा इति**। लोकेषु यशो विताय विस्तृत्य परेयुषां लोकं प्राप्तानां महीयसां मन्वादीनामुत्तमानां पुरुषाणामिमाः कथास्ते कथिताः, मयेति शेषः। किमर्थं कथिता इति तत्राह **विज्ञानेति**। वचोविभूतीः वचसां विभूतयो विविधभवनविषया वा। विज्ञानवैराग्यविवक्षया योग्यस्य पुंसो विज्ञानवैराग्ये स्यातामित्यभिप्रेत्य विवृताः। न तु पारमार्थ्यं परमार्थ उत्तमार्थो वेदमुख्यार्थो भगवान् तत्सम्बन्धविवक्षया नैव। तस्य विधिनिषेधाविषयत्वात्[1]। विज्ञानविवक्षयापि मदुक्त एव ग्राह्यो नान्योक्त इत्याह **वचोविभूतीरिति**। अन्यवाचोविभूतयो वचसां बहुत्वान्न पारमार्थ्यं उत्तम-पुरुषार्थसाधनज्ञानमुद्दिश्य न भवन्तीत्यर्थः। वाचो विग्लापनं हि तदिति श्रुतेः॥ १४॥

कुत इतरा वाचोविभूतयः पुरुषार्थोपयोगिन्यो न स्युरित्यत आह **यत्रेति**। यत्र यस्यां वाचि उत्तमश्लोकगुणानुवादः संगीयते पुरुषस्तामेव वाचं शृणुतात् शृणोत्वित्यर्थः। श्रीहरिभक्त्य-नुत्पादकत्वादितरा वाचो हेया इत्यर्थः। अन्या वाचो विमुञ्चथेति श्रुतेः॥ १५॥

---

१. अस्पष्टमिदम्। सत्यधर्मतीर्थास्त्वेवं व्याचक्रुः। "इमाः कथा मया ते कथिताः। विज्ञानवैराग्यविवक्षया सदधिकारिणस्ते स्यातामिति। ताश्च कथाः किंरूपिण्य इत्यत आह वचोविभूतीरिति। वचसां तत्तद्राजादि-चरितवर्णनपराणां विभूतयो विविधभवनानि यासां ताः। तत्कृत्यानत्ययेन वचनानां नानविधताऽनु-सन्धेया। न तु पारमार्थ्यम्, वच इत्येकदेशानुवृत्तिः स्वार्थे च ष्यञ्, इदं वचः परमार्थं परमोऽर्थो यस्य तन्न, किन्तु मुख्यार्थे हेतुरिति श्राव्यमित्यर्थः। यस्य पारमार्थ्यं मुख्यार्थत्वं नास्ति तद्वच इति वाऽन्वयः" इति।

राज्ञां वैभवादिवर्णनमेव परमपुरुषार्थो न, किन्तु तद् वैभवं भगवत्प्रसादायत्तमिति नश्वरमिति चानुसन्धाय भगवदुत्कर्षज्ञानमन्यत्र वैराग्यं च सम्पाद्यम्। तादृशविज्ञानवैराग्ययोः परमपुरुषार्थसाधनतया तद्धेतुतया इमाः कथा आदर्तव्या इति तात्पर्यम्।

राजोवाच -

केनोपायेन भगवन् कलेर्दोषान् कलौ जनाः ।
विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ॥ १६ ॥

युगानि युगमानं च मानं प्रलयकल्पयोः ।
कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥

श्रीशुक उवाच -

कृते प्रवर्तते धर्मश्चतुष्पात् तज्जनैर्धृतः ।
सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥

सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ।
आत्मारामाः समदृशः प्राय आश्रमिणो जनाः ॥ १९ ॥

त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ।
अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः ॥ २० ॥

तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः ।
त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृपाः ॥ २१ ॥

---

ज्ञातकलिदोषपरिहारोपि राजा लोकोपकाराय पृच्छति **केनेति**। कलेरुत्पन्नान् दोषान् विधमिष्यन्ति परिहरिष्यन्ति। उपचितान् संवृद्धान्। तदुपायस्वरूपं यथा यथावत् ॥ १६ ॥

कालस्य विष्णोर्गतिं गमनप्रकारं च ॥ १७ ॥ सूचीकटाहन्यायेन युगधर्मस्वरूपमादौ वक्ति **कृत इति**। तज्जनैः कृतयुगजनैः। के चत्वारः पादा इत्यत्राह **सत्यमिति**। विभोर्धर्मस्य ते पादाः ॥ १८ ॥ तत्राश्रमिणां स्वभावमाह **सन्तुष्टा इति**। समदृशो वस्तुयाथार्थ्यज्ञानिनः। करुणयन्तीति करुणाः। आश्रमिण इत्यनेन भार्याद्यवियोगमाह। नित्यगृहस्था इत्यर्थः ॥ १९ ॥ तुर्यांशश्चतुर्थांशो दानलक्षणः पादो हीयते ह्रसति। पादहानौ प्रतिप्रक्षमाह **अधर्मेति** ॥ २० ॥

तदा त्रेतायां यज्ञादिक्रियातपोनिष्ठा भवन्ति न लम्पटाः विषयरागिणो न भवन्ति। त्रैवर्गिकाः त्रिवर्गसहिताः। त्रयीवृद्धाः वेदविद्यायां विशारदाः, त्रैविद्या इत्यर्थः। ब्रह्मोत्तरा ब्राह्मणोत्तरा ब्राह्मणाधिकाः ॥ २१ ॥

तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे ।
हिंसाऽतुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥

यशस्विनो माहाशालाः स्वाध्यायाध्ययने रताः ।
आढ्याः कुटुम्बिनो दृष्टा वर्णाः क्षत्रद्विजोत्तमाः ॥ २३ ॥

कलौ तु धर्महेतूनां पर्यासोऽधर्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोपि विनङ्क्ष्यति ॥ २४ ॥

तस्मिन् लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ।
दुर्भगा भूरिदर्पाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥

सत्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥

प्रसीदति यदा सत्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद् रुचिः ॥ २७ ॥

---

अधर्मलक्षणैः अधर्मस्वरूपपादैः हिंसाऽतुष्ट्यनृतद्वेषैः हिंसाऽतुष्ट्यनृतलक्षणं द्वैधं द्वित्वं येषां ते तथा तैः। अतुष्टियुतमनृतमतुष्ट्यनृतम्। धर्मस्य तपःसत्यदयादानेषु पादेष्वर्धं ह्रसति। अनेन द्वापरशब्दो निरुक्तः ॥ २२ ॥ महाशाला यज्ञकर्तारः ॥ २३ ॥

पर्यासो निरासः। सोऽपि सत्यलक्षणोऽपि, धर्मो वा ॥ २४ ॥ शुष्कवैरिणो निष्प्रयोजन-वैरिणः। शूद्रदासोत्तराः प्राधान्येन शूद्राणां दासाः ॥ २५ ॥ सत्वादयो गुणा आत्मनि मनसि परिवर्तन्ते पर्यायेण वर्तन्ते ॥ २६ ॥

कथं तत्राह **प्रसीदतीति**। यदा सत्वं प्रसीदति तदा मनआदीनि प्रसन्नानि भवन्ति। लक्षणान्तरमाह **ज्ञान इति**। यद् यदा ज्ञानादिरुचिस्तदा। कुत एतत् कल्प्यत इत्यत्राह **यदिति**। मनआदिप्रसादेन ज्ञानाद्यभिरुचिर्ज्ञायत इति यद् यस्मात् तस्मादिति ॥ २७ ॥

यदा धर्मेषु कामेषु भक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीत बुद्धिमान् ॥ २८ ॥

यदा लोभस्त्वसन्तोषो मनोदम्भोऽथ मत्सरः ।
कर्मणां चापि काम्यानां द्वापरं तद् रजस्तमः ॥ २९ ॥

यदा मायाऽनृतं तन्द्रा निद्रा हिंसा विषादनम् ।
शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥ ३० ॥

यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ।
कामिनो वृत्तिहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥

दस्यूत्कृष्टा जनपदा वेदाः पाखण्डदूषिताः ।
राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥

अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ।
तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥ ३३ ॥

ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ।
शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥

पणयिष्यन्ति वै क्षुद्राः किराटान् कूटकारिणः ।
अनापद्यपि मंस्यन्ते वार्तां साधुजुगुप्सिताम् ॥ ३५ ॥

---

देहिनां यदा काम्यंत इति कामास्तेषु कर्मसु यशसि चापादनीयमिति स्नेहविशेषो भवति तदा बुद्धिमान् रजोवृत्तिस्त्रेतेति जानीत जानातु ॥ २८ ॥

यदा आत्मनि लोभादयो दृश्यन्ते तदा रजस्तमः रजस्तमोगुणयुतं द्वापरं जानातु ॥ २९ ॥

यदा मायादयो दृश्यन्ते यत्र स कलिस्तामसस्तमोगुणवृत्तिमानित्युपलक्ष्यते । विषादनं विषण्णता ॥ ३० ॥ यस्मात् कलिदोषात् क्षुद्रदृशः अल्पज्ञाना लोकोपद्रवकर्मज्ञाना वा । वृत्तिहीना जीवनोपायरहिताः । असतीरसत्यः ॥ ३१ ॥ दस्यूत्कृष्टाः दस्यूपद्रुताः । कृष हिंसायामिति धातुः ॥ ३२ ॥ वटवो ब्रह्मचारिणः । अव्रता महाव्रतादिहीना अग्निकार्यादिव्रतहीना वा ॥ ३३ ॥ भूर्यपत्याः

पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ।
भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥

पितॄन् भ्रातॄन् स्वसॄर्ज्ञातीन् हत्वा सौरतसौहृदाः ।
श्वशुरश्यालसंवादा दीनाः स्त्रैणा कलौ नराः ॥ ३७ ॥

शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः ।
धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ।
निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥

वासोऽन्नपानशयनव्यवायस्नानभूषणैः ।
हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥

कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ।
त्यक्ष्यन्ति हि प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥ ४१ ॥

न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि ।
पुत्रीं भार्यां च कुलजां क्षुद्राः शिश्नोदरम्भराः ॥ ४२ ॥

---

बहुसन्तानाः ॥ ३४ ॥ क्षुद्रा दरिद्राः किराटान् परिणतफलानि पणयिष्यन्ति विक्रेष्यन्ति[१] कूटकारिणः धातुर्वादकरणशीलाः[२] । वार्ता कुसीदादिवैश्यवृत्तिम् ॥ ३५ ॥

अखिलोत्तमम्, कुलादिनेति शेषः । कौलं कुले विद्यमानं विपन्नमापदं प्राप्तं भृत्यं पतयस्त्यक्ष्यन्ति । अपयस्विनीः क्षीररहिता गाश्च त्यक्ष्यन्तीति शेषः ॥ ३६ ॥

सौरते सुरतमन्त्रविषये सौहृदं प्रेम येषां ते तथा । श्वशुरशालाभ्यां सह सम्यक् संवादो येषां ते तथा ॥ ३७ ॥ पिशाचवत् सन्दर्शो दर्शनं येषां ते तथा ॥ ३८-४० ॥ विगृह्य विग्रहं वैरं कृत्वा । काकणिकेऽप्यर्थे अत्यल्पधनविषये ॥ ४१-४२ ॥

---

१. किराटान् पक्कफलादीन् अपणयितव्यान् पणयिष्यन्ति - इति सत्यधर्मतीर्थाः ।
२. कूटकारिणः कपटव्यापारा इति सत्यधर्मतीर्थाः । धातुर्वादित्यादि न स्पष्टार्थम् ।

**कलौ न राजन् जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् ।**
**प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥ ४३ ॥**

**यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान् ।**
**विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥**

**पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् ।**
**सर्वं हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥ ४५ ॥**

**श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ।**
**नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥**

**यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ।**
**एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥**

**विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजाप्यैः ।**
**नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥**

---

पाखण्डशास्त्रेणाद्वैतविषयेण भिन्नचेतसो व्यामोहितचित्ताः ॥ ४३ ॥ किंमाहात्म्योऽयं भगवान् येन तद्यजनं सप्रयोजनं स्यादिति तत्राह **यन्नामधेयमिति** । विमुक्तं कर्मलक्षणमर्गलं तालकीलं यस्य स तथा, विध्वस्तकर्मबन्धन इत्यर्थः ॥ ४४ ॥ केनोपायेनेत्यादिना पृष्टं परिहर्तुमाह **पुंसामित्यादिना** । द्रव्यदेशात्मसम्भवान् द्रव्यदेशस्वभावोद्भूतान् । किमपि नावशिष्यते । अतः सर्वमित्युक्तम् ॥ ४५ ॥

चित्तस्थितिभावे[१] नानासाधनमाह **श्रुत इति** । अशुभमित्युपलक्षणम् । प्रथमकर्मभोगायतन-प्रारम्भप्रभृति (?) सम्पादिताशुभमित्यर्थः ॥ ४६ ॥ मन्दाधिकारिणः क्षिप्रप्रवृत्त्यर्थं सदृष्टान्तमाह **यथेति** । शास्त्रोक्ता अष्टादशदोषा दुर्वर्णमित्यनेन गृह्यन्ते । धातुजं गैरिकसमुद्भवं वा । आत्मगतः चित्तगतः । अशुभाशयं पापराशिं पापसम्पृक्तजडमनो वा ॥ ४७ ॥

विद्यादिनाऽन्तःकरणशुद्ध्या श्रेयः स्यात्, किं चित्तस्थेन हरिणेति तत्राह **विद्येत्यादिना** । प्राणनिरोधः प्राणायामः । अन्तरात्मा अन्तःकरणम् । हृदिस्थे सति ॥ ४८ ॥

---

१. चित्तस्थितिभावो नाम चित्तस्थत्वं तत्र नानासाधनमाहेत्यर्थः ।

तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ।। ४९ ।।

म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्गः सर्वात्मा सर्वसम्भवः ।। ५० ।।

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ।। ५१ ।।

कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद् हरिकीर्तनात् ।। ५२ ।।

।। इति तृतीयोऽध्यायः ।।

।। चतुर्थोऽध्यायः ।।

**श्रीशुक उवाच -**

कालस्ते परमाण्वादिर्द्विपरर्धावधिर्नृप ।।
कथितो युगमानं च शृणु कल्पलयावथ ।। १ ।।

---

उपसंहरति **तस्मादिति** ।। ४९ ।। आत्मभावमात्मनि भक्तिं नयति प्रापयति । सर्वमादत्त इति सर्वात्मा । सर्वस्य सम्भवो यस्मात् स सर्वसम्भवः ।। ५० ।। कलिः केवलं न दोषाकर एव, अपि तु गुणापादकोपि भवति, औषधोपचितद्रव्यवदित्याह **कलेरिति** ।। ५१ ।। ध्यानादिप्रधानसाधनमन्तरेण कीर्तनमात्रेण संसारबन्धनिर्मोकः कथमित्याशंक्य तत्तद्युगेषु भगवत्क्लृप्तत्वेन युक्तमित्यभिप्रेत्याह **कृत इति** । कृते यत् तत् स्यादित्यर्थः ।। ५२ ।।

**।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य तृतीयोऽध्यायः ।।**

भगवत्कटाक्षप्रेक्षणाक्षिप्तकल्पप्रलयप्रकारं तत्स्वरूपं भागवतप्रवृत्तिं च कथयत्यस्मिन्नध्याये । तत्रादावुक्तमनूद्य वक्तव्यं प्रतिविधत्ते **काल इति** । कथितः तृतीये स्कन्धे । अथ कल्पप्रलययोरपि कालाधीनत्वेन तत्स्वरूपश्रवणानन्तरम् ।। १ ।।

चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
स कल्पो यत्र मनवश्चतुर्दश विशां पते ॥ २ ॥

यदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता ।
त्रयो लोका इमे यत्र कल्पन्ते प्रलयाय हि ॥ ३ ॥

एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ।
शेतेऽनन्तासनो विश्वमात्मसात् कृत्य चात्मभूः ॥ ४ ॥

द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।
तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥ ५ ॥

एष प्राकृतिको राजन् प्रलयो यत्र लीयते ।
आण्डकोशस्तु सङ्घातो विघात उपसादिते ॥ ६ ॥

पर्जन्यः शतवर्षाणि भूमौ राजन् न वर्षति ।
तदा निरन्ने ह्यन्योन्यं भक्ष्यमाणाः क्षुधार्दिताः ॥ ७ ॥

सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः ।
रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ॥ ८ ॥

ततः सांवर्तको वह्निः सङ्कर्षणमुखोत्थितः ।
दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥ ९ ॥

---

यत्र दिने ॥ २ ॥ यस्य दिनस्यान्ते । ब्राह्मी ब्रह्मसम्बन्धिनी । यत्र रात्रौ ॥ ३ ॥ यत्र प्रलये । आत्मसात् कृत्य आत्मनि निधाय ॥ ४ ॥ सप्तप्रकृतयः महदहङ्कारौ, आकाशादिपञ्चभूतानि च ॥ ५ ॥

यत्र प्रकृतिप्रलये । सङ्घातः चतुर्विंशतितत्वसमूहात्मकः । प्रलयप्रकारमाह **विघात इति** । विघाते प्रलये उपससादिते आसन्ने सति ॥ ६ ॥ कल द्रवण इति धातोः कालेन द्रवणहेतुना ॥ ७ ॥ सामुद्रं समुद्रस्य रसं जलं दैहिकं देहस्य विद्यमानं रसं रेतोलक्षणं वीर्यं भूमे रसं तिक्तादिलवणम् ॥ ८ ॥

सांवर्तकः प्रलयकालीनः । सत्वशून्यान् प्राणिरहितान् । भूविवरान् पातालादीन् ॥ ९ ॥

उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ।
दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ॥ १० ॥

ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ।
परः सांवर्तको वाति धूम्रं खं रजसा वृतम् ॥ ११ ॥

ततो मेघकुलान्यङ्गः चित्रवर्णान्यनेकशः ।
शतवर्षाणि वर्षन्ति नदन्ति रभसस्वरैः ॥ १२ ॥

तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ।
तदा भूमेर्गन्धगुणं ग्रसन्त्याप उपप्लवे ॥ १३ ॥

ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते ।
अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ॥ १४ ॥

ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ।
लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ १५ ॥

स वै विशति खं राजन् ततश्च नभसो गुणम् ।
शब्दं ग्रसति भूतादिर्नभस्तमनु लीयते ॥ १६ ॥

तैजसानीन्द्रियाण्यङ्ग देवा वैकारिका गुणैः ॥ १७ ॥

महान् ग्रसत्यहङ्कारं गुणाः सत्वादयश्च तम् ।
ग्रसतेऽव्याकृतं बीजं गुणान् कालेन चोदितम् ॥ १८ ॥

---

रजसा वृतं खं धूम्रस्थानम् ॥ १०-११ ॥ चित्रवर्णानि नीलादिनानाविधानि ॥ १२ ॥

ब्रह्माण्डविवरान्तरं ब्रह्माण्डबिलविशेषं ब्रह्माण्डबिलोदरं वा एकोदकमुदकात्मकं भवति । पञ्चभूतगुणलयप्राकारमाह तदेति। उपप्लवे प्रलये ॥ १३ ॥ नीरसा आपः ॥ १४ ॥ तद्रहितं रूपरहितं तेजो वायौ लीयते ॥ १५ ॥ स वायुः खं विशति । तदनु शब्दगुणलयानन्तरम् । तैजसानीन्द्रियाणि, तैजसाहंकारे लीयन्त इति शेषः ॥ १६ ॥ वैकारिका देवा वैकारिकाहंकारे स्वगुणैः सह ॥ १७ ॥ तं महान्तम् बीजं व्यञ्जकम् । मूलप्रकृतिः कालेन हरिणा चोदितं प्रेरितं सत्वादिगुणान् ग्रसते ॥ १८ ॥

**न तस्य कालावयवैः परिणामादयो गुणाः ।**
**अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥**

**न यत्र वाचो न मनो न सत्वं तमो रजो वा महादादयोऽमी ।**
**न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ २० ॥**

**न स्वप्नजाग्रन्न च तत् सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ।**
**सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ २१ ॥**

**लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ।**
**शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥ २२ ॥**

**बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ।**
**अन्वयव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २३ ॥**

---

मूलप्रकृतिस्वरूपं वक्ति न **तस्येति**। तस्याव्यक्तस्य त्रुटिलवादिकालावयवैः परिणामादयो गुणा न सन्ति । तदव्यक्तं मूलप्रकृतिं विश्वसृजां कारणम्, आमनन्तीति शेषः । इतरविशेषणमुक्तयोः सममित्याशयेनाह अनादीति ॥ १९ ॥

कालेनेत्युक्तस्य हरेः स्वरूपं दर्शयति न **यत्रेति** । वागदयो यत्र कश्चन विशेषं नापादयन्तीति शेषः ॥ २० ॥

आकाशाद्यन्यतमवच्च न भवतीत्याह न **स्वप्नेति** । स वा एष आत्मा नेतिनेतीति श्रुतेः । सुषुप्तवत्[१] सुखरूपम् । सुखमस्वाप्समिति सुप्तिपदेन सुखं लक्ष्यते । शून्यवत् सूक्ष्ममत एवाप्रतर्क्यं तर्का-गोचरम् । मूलभूतं सर्वस्य प्रधानकारणम् । पद्यत इति पदं गम्यमित्यर्थः ॥ २१ ॥

कालाख्यपरमात्मस्वरूपमुक्त्वा लयं निर्दिशति **लय इति** । यदा यस्मिन् लये कालविद्रुताः । कालेन समाप्तजीवनावधयः, अत एव विवशा हर्यधीनाः पुरुषाव्यक्तयोः ब्रह्मप्रकृत्योः शक्तयः पृथिव्यादयः सम्प्रलीयन्ते । एषः लयः प्राकृतिको हि नामेति शेषः ॥ २२ ॥

चराचरेऽवशिष्यमाणं किं तत्राह **बुद्धीति** । तदा प्रलये आश्रीयतेऽनेन[२] चराचरेणेत्याश्रयं

---

१. उत्तरार्धस्थस्य पदस्य प्रतीकग्रहणमिदम् ।
२. आश्रयन्ते इति क्वचित् पाठः ।

**दीपश्चक्षुश्च रूपं च तेजसो न पृथग् भवेत्।**
**एवं धीः खानि मात्राश्च न स्युरप्युत मारुतात्॥ २४॥**

---

प्रपञ्चाधारभूतं ज्ञानं नित्यनिर्दोषज्ञानात्मकं ब्रह्म बुद्धीन्द्रियार्थरूपेण बुद्ध्या ज्ञानात्मिकया लक्ष्म्या, ज्ञानहेतुत्वेन बुद्धिशब्दवाच्यया त्रय्या, मुक्तश्रेण्या वा। चक्षुरादीन्द्रियविषयसौन्दर्यातिशयेन भाति ज्योतीरूपेण वर्तते। कथंकारं वर्तत इति तत्राह अन्वयव्यतिरेकाभ्यामिति। प्रपञ्चसद्भावासद्भावाभ्यां कालाभ्यां वर्तत इति। यद्वा बुद्धीन्दियात्मकदेहाकारेण, बुद्धिवान् मनोवानिति श्रुतेः। अनेन ''संविदेव परितो विराजत इति पूर्वाचार्यवचनाज्ज्ञातृज्ञेयविवर्जितं ज्ञानम्'' इति व्याख्यानं प्रत्युक्तम्। तादृशज्ञानस्य पाषाणकल्पत्वेन हेयत्वात्। नासदासीदितीतरवस्तुनिषेधाद् धात्रादिसद्भावः कथमत्राह **आद्यन्तवदिति**। यत् शरीरयोगवियोगवत् तद् अवस्तु अस्वतन्त्रम्। यदादावन्ते च वर्तमानं लक्ष्म्यादितत्वं तदप्यस्वतन्त्रम्। ''यदादिनिधनयुक्तम् उत्पत्तिनाशवत् तद् वस्तुनो ब्रह्मणो व्यतिरिक्तं न भवति। तदध्यस्तत्वेन तज्ज्ञानेन लीयते'' इति यन्मतं तदासुरम्। तदुक्तम् - ''जीवविष्ण्वोरंभेदश्च देहयोगवियोजने। विष्णोर्दुःखव्रणित्वादि पराभावस्तथैव च। अस्वातन्त्र्यं च वेदादावुक्तवद् भासते विभोः। क्वचित् क्वचिद्विमोहाय दैत्यादीनां दुरात्मनाम्'' इति[१]॥ २३॥

एतमर्थं सोदाहरणमाह **दीप इति**। दीपादिकं ज्यातिषस्तेजसस्तच्छक्तिमन्तरेण पृथक् स्वातन्त्र्येण प्रकाशकं न भवेत्। एवं बुद्ध्यादिकमपि मारुतान्मुख्यप्राणादपि पृथक् ज्ञानजननशक्तिमन्न। वायुना वै गौतम सूत्रेणेति श्रुतेः। किमुत परब्रह्मणः। एतस्माज्जायते प्राणः, आत्मन एष प्राणो जायते, ब्रह्मणो वा एतानि करणानीत्यादिश्रुतेः॥ २४॥

---

१. तत्र तत्रेषदस्पष्टमिदं व्याख्यानम्। सत्यधर्मतीर्थास्त्वेवं व्याचक्रुः। ''परिशिष्यमाणं किमित्यत आह बुद्धीति। तदाश्रयं चराचराश्रयं ज्ञानं ज्ञानरूपं ब्रह्म बुद्धीन्द्रियार्थरूपेण बुद्ध्या ज्ञानात्मकरमया, बुद्ध्यतेऽनयेति बुद्धिस्त्रयी तया, इन्द्रियाणां चार्थतया विषयतया भाति। अन्वयव्यतिरेकाभ्यां यदाद्यन्तवद् भगवदधीनोत्पत्तिविनाशवत् तदवस्तु नित्यशक्तियुक्तभगवद्भिन्नमस्वन्त्रम्। अनुकूले पीतदुकूले सर्वं सम्पद्यत इत्यन्वयः, अन्यथा नेति व्यतिरेकः। अनुकूले जगन्नाथे विपरीते विपर्यय इत्यादेः। यत्सत्वे भगवतः सत्वे यत् सम्भविष्यतो जगतः सत्वम्, यत्प्रसादोन्मुखत्वाभावे यदसत्प्रायं वर्तते जगदतः सोऽस्तीत्यन्वयः, अन्यथा (दा) त्वप्रसादोन्मुखे नास्तीत्युच्यते इति व्यतिरेकः, ताभ्यां परिशिष्टं ज्ञानं ब्रह्मेति वा'' इति॥

**बुद्धेर्जागरणं स्वप्नं सुषुप्तिरिति होच्यते।**
**मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि॥ २५॥**

**यथा जलधरा व्योम्नि भवन्ति न भवन्ति च।**
**ब्रह्मणीदं तथा विश्वमुपयात्युदयाप्ययम्॥ २६॥**

**एते ह्यवयवाः प्रोक्ताः सर्वावयविनामिह।**
**विनार्थेन प्रतीयेरन् पटस्येवाङ्ग तन्तवः॥ २७॥**

---

न स्वप्नेत्यत्र स्वप्नाद्यवस्था अपि न ब्रह्मण इत्युक्तम्। तर्हि कस्य ता इति तत्राह **बुद्धेरिति**। बुधं ज्ञानं धीयतेऽस्मिन्निति बुद्धिर्जीवः। तस्य जागरणादिकमुच्यते। ह, सता सोम्येत्यादिश्रुतिसिद्धम्। अथ हैतत् पुरुषः स्वपिति नामेति च। अनेन जाग्रदादीनां निरालम्बनतया मिथ्यात्वमपास्तम्। ननु सुप्त्याद्यवस्थावद् विश्वादीनामपि नानात्वं सत्यं स्यदिति तत्राह **मायामात्रमिति**। प्रत्यगात्मनि परमात्मनि स्थितं नानात्वं मायया स्वेच्छया मात्रं निर्मितं त्रातं न स्वाभाविकम्। एतेन कृष्णरामादिरूपाणां मूलरूपेण भेदो निरस्तः। तदुक्तम् - ''प्रत्येकं विष्णुरूपाणां भ्रान्तिमात्रा भिदा मता। जगतश्चैव विष्णोस्तु सत्यो भेदः सदैव तु। यथाकाशघनौ नित्यं भिन्नावेव परस्परम्। एवमीशो जगच्चैव भिन्नावेव परस्परम्'' इति॥ २५॥

नन्वेवं तर्हि जगद्ब्रह्मणोश्च भेदो न पारमार्थिकः स्यादित्यतः सोदाहरणं भेदस्य सत्यत्वं समर्थयते **यथेति**। उदयाप्यययोर्मिथो विरुद्धधर्मत्वादेकवद्भावः। इदं विश्वं ब्रह्माधारतया सृष्टिसंहारौ याति। गगनघनयोराधाराधेययोर्भेदो यथा सत्यस्तथा जगद्ब्रह्मणोरपीति। एतदप्युक्तं यथाकाश-घनावित्यादिना॥ २६॥

ननु जगद्ब्रह्मणोरिवायवावयविनामपि भेदः सन्नेव किं न स्यात् पटस्यामी तन्तव इति प्रतीतेरत्राह **एत इति**। सर्वेषां महदादीनामवयविनां येऽवयवाः प्रोक्ताः खादयः, एते अर्थेन विना भेदव्यवहारमन्तरेण प्रतीयेरन् हि यस्मात् तस्मादभिन्ना इति शेषः। कथमभेद इत्यत्राह **पटस्येति**। पटस्यावयवास्तन्तवोऽवयविना पटेनाभिन्ना इति यथा अङ्गीकर्तव्यम्, तन्तु पटः मृद् घटः शुक्लः पट इत्याद्यभेदव्यवहारदर्शनात्। प्रत्येकं तन्तुना भेदेऽपि समुदायरूपेणाभेद इति प्रकटनाय तन्तव इति बहुवचनम्। अत एव '' अवयव्यवयवाभेदात् कोट्यंशो भेद ईरितः। सोऽपि भेदो न चाभेदात्

**यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ।**
**अन्योन्यापाश्रयात् सर्वमाद्यन्तवदवस्तु च ॥ २८ ॥**

**विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा ।**
**न निरूप्यो ह्यणुरपि स्याच्चेत् स भ्रम आत्मनः ॥ २९ ॥**

**न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते ।**
**नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरपि ॥ ३० ॥**

---

पृथगेव प्रवर्तते '' इति वाक्यमत्र गृहीतम् । अनेन कार्यकारणादीनां भेद इति मतमपास्तम् । पटस्य तन्तव इति प्रयोगः पटस्य शौक्ल्यमितिवन्निष्कर्षणार्थः। सोऽपि श्रीहरिनियत इति न युक्तिविरोधः। ''अवयव्यवयवानां तु कार्यकारणवस्तुनाम् । एक एव नियन्ताऽसौ हरिर्नारायणः परः'' इति वाक्यादवगन्तव्यः । २७ ॥

नन्वेवं चेदवयविनि सत्यवयवनाशे तस्यापि तदभेदः स्यादत्राह **यदिति** । यावद्द्रव्यभावि सामान्यमित्युच्यते । अयावद्द्रव्यभावी विशेष इति ।तत्र यद् वस्तु नष्टावयवाभिन्नमित्युपलभ्येत सामान्यावयववत् स बुद्धेर्भ्रमः। कुतः। अन्योन्यापाश्रयाद् विश्लेषात् । तस्मादाद्यन्तवदवस्त्वेव । यद्वा हनुमद्भीमांशानां वाय्वाद्यंशिनां सामान्यविशेषशक्तिदर्शनात् कथमभेदः सङ्गच्छत इति तत्राह **यदिति** । अन्योन्यापाश्रयात् अन्योन्याभेदविषयप्रमाणात् असुरजनमोहाधिकृतत्वेनाद्यन्तवत्त्वादवस्तु सर्वमविद्यमानमेव ॥२८॥

यथा अवयव्यवयवादीनामभेदो दुरवबोधः एवं पदार्थानामनन्तत्वात् तत्स्वरूपभेदोऽपि परमात्मानमन्तरेण दुर्ज्ञेय इत्याशयेनाह **विकार इति** । वि निषेधे पृथग्भाव इत्यतो विकारः पृथक्कारो नानाविधो भेदः प्रत्यगात्मानं साक्षिभूतं श्रीनारायणमन्तरेण अणुरल्पोऽपि निरूप्यो नास्ति । स एव निरूपयितुं शक्तः, नासत्त्वान्नेत्याह[१] **ख्यायमान इति** । प्रतीयमानस्यासत्वं जुगुप्सितं प्रमाणविरोधादित्यपिशब्दः॥ २९ ॥

नन्वेकस्य प्रतिभातं तु कृतकान्न विशिष्यत इतिवन्निर्धारणायोग इति तत्राह **न हीति** । यद्यविद्वान् ब्रह्मरूपाणां नानात्वं मन्यते तर्ह्यपि सत्यस्य ब्रह्मणो रूपाणां नानात्वं सत्यं न भवति । अविद्वन्मतत्वात् । ननु युक्ता ह्यस्य हरयः शता दशेति श्रुतेः कथं सत्यं नेत्यत्राह - **नानात्वमिति** । नेत्यनुवर्तते ।

---

१. नासत्वादित्याहेति पाठः स्यात् ।

**यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ।**
**एवं वचोभिर्भगवानधोक्षजो व्याख्यायते वैदिकलौकिकैर्जनैः ।। ३१ ।।**

**यथा घनोऽर्कप्रभवोर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ।**
**एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्माङ्कस्यात्मन आत्मबन्धनः ।।३२ ।।**

---

छिद्रयोर्बाह्यान्तःस्थाकाशयोः यद्वद् यथा नानात्वं नास्ति एक एव महाकाशो घटे जायमाने बहिरन्तश्चेति द्वित्वसंख्यामुपैति । उत्पद्यमानो नीलिमाकारोऽप्याकाशो द्वित्वमेति। तत्र प्रागुक्तो हरेरुपमितिं याति पश्चादुक्तो जीवानामित्यर्थविशेषो हिशब्देनोपात्तः। उक्तं च - ''महाकाशो बहिस्थश्च घटाद्यन्तस्थ एव च। द्वेधा समुदितोऽन्यौ च द्वावाकाशौ प्रकीर्तितौ। घटरूपस्तदन्यश्च महाकाशात् परो लघुः। महाकाशवदेवात्र परमात्मा सनातनः। घटान्तस्थमहाकाशप्रतिमोऽन्तर्गतो विभुः। घटस्यान्तर्गताकाशो महाकाशात् परो मतः। तद्वद् देवादयः सर्वे जीवा मुक्त्युपयोगिनः। तमोगाश्चैव ये सर्वे घटरूपखवन्नराः '' इति। ज्योतिषोरधिदैवाध्यात्मसंज्ञयोः । सहस्रं वा आदित्यस्य रश्मयः आसु नाडीष्वातता इति श्रुतेः। तयोर्वातप्राणसञ्ज्ञयोरधिदैवमथाध्यात्ममिति श्रुतेश्च[१] । अत्रापि विशेषः पूर्ववदवगन्तव्य इति ।। ३० ।।

बहुत्वसंख्यावाचिन्याः श्रुतेः किं विनिगमक(?)मत्राह **यथेति** । बहुधा कटककुण्डलाद्यात्मना हेम नानासंज्ञाविषयं समीयते तथा भगवानपि देवो नरो वराहः शुक्लः पीतो ह्रस्वोऽणुर्दीर्घो महानिति विविधाकारेण व्याख्यायते प्रकाश्यत इति ।। ३१ ।।

हरेस्तत्त्वस्वरूपं निरूप्य संसारप्रकारमाह **यथेति**। अर्कशब्देनाप्तेजोवायव उच्यन्ते। तेजस्सम्बन्धेन धूम उपलक्ष्यते । अर्कप्रभवः धूमतेजोजलमरुद्भ्यः प्रभव उत्पत्तिर्यस्य स तथा । अर्केण नभसि दर्शितः। सूर्यप्रकाशे सत्येव दृश्यते नान्यथा। यथा घनः सूर्यदर्शनप्रतिबन्धकः । आपो वा अर्क इति श्रुतेः। यथा अर्कांशस्य चक्षुषः तमः सूर्यदर्शने प्रतिबन्धकम्। आदित्यश्चक्षुर्भूत्वा अक्षीणी प्राविशदिति श्रुतेः। एवमहंकारो ब्रह्मापेक्ष्य गुणोऽमुख्यः तदीक्षितः तेन प्रकाशितः ब्रह्मांशकस्य जीवस्य , पादोऽस्य विश्वा भूतानीति श्रुतेः, ब्रह्मणो भिन्नांशस्य आत्मनो जीवस्य आत्मानं मतिं ज्ञानं बध्नातीत्यात्मबन्धनः। आत्मा देहे धृतौ जीव इत्यादौ यादवप्रकाशे मतौ प्रयुक्तत्वात् । तद्ब्रह्मावेदहं ब्रह्मास्मीति श्रुतेः ब्रह्मणो विशेषभूत इति वा[२] ।। ३२।।

---

१. इदं वाक्यमस्पष्टम् ।
२. इदं च वाक्यमस्पष्टम् ।

**घनो यदाऽर्कप्रभया विदीर्यते चक्षुःस्वरूपं परमीक्षते तदा।**
**यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत्॥ ३३॥**

**यदैवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनम्।**
**छित्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग सम्प्लवम्॥३४॥**

**नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप।**
**उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः सम्प्रचक्षते॥ ३५॥**

**कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा।**
**परिमाणाद्यवस्थास्ता जन्मप्रलयहेतवः॥ ३६॥**

---

यदा घनः अर्कप्रभया तीव्रया सूर्यप्रभया विदीर्यते नष्टो भवति तदा सूर्यांशश्चक्षुः स्वबिम्बं रविमीक्षते यथा तथा यदा जीवस्यात्मनः परमात्मनो दर्शने उपाधिः निमित्तभूतोऽहङ्कारो जिज्ञासया परमात्मोपासनया नश्यति तर्हि तदा जीवः परं परमात्मानं अनुस्मरेत् अनुकूलस्मरणसमर्थो भवतीत्यन्वयः। हिशब्देन भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः इतीदं वाक्यमग्राहि। ॥३३॥

असम्प्रज्ञातसमाधिस्थलक्षणमाह यदेति[१]। एवमुक्तविधयोद्भूतया एतया[२] विवेकहेतिना निशितज्ञानायुधेन मायामयाहङ्करणात्मबन्धनं भगवदिच्छानिर्मितलिङ्गशरीरलक्षणाहङ्कारजनित-संसारहेतुं छित्वा अच्युतात्मानुभवः नित्यमुक्तपरमात्मापरोक्षदर्शनेनासम्प्रज्ञातसमाधिस्थः निर्मुक्त-लिङ्गशरीराभिमानोऽवतिष्ठते । एतमङ्ग आत्यन्तिकं सम्प्लवं प्रलयमाहुः। असम्प्रज्ञात-समाधिस्थावस्थाया नामान्तरमिदम्॥ ३४॥

इदानीं दैनन्दिनजन्मप्रलयावाह **नित्यदेति**। दिनेदिने ब्रह्मादीनां सर्वभूतानामुत्पत्तिप्रलयौ स्त इति एके सूक्ष्मज्ञाः सम्प्रचक्षते वदन्तीत्यन्वयः॥ ३५॥

चेतनानां निर्विकारत्वेन जन्माद्यसम्भवात् कथमुच्यते नित्यदा जन्माद्यस्तीति तत्राह **कालेति**। कालस्रोतोजवेन कालनदीप्रवाहवेगेन क्षिप्रं ह्रियमाणस्य नीयमानस्य देहस्य॥ ३६॥

---

१. आत्यन्तिकप्रलयलक्षणमाह यदैवेति - इति सत्यधर्मतीर्थाः।

२. उद्भूतेन एतेन इति पाठः स्वरसो भाति।

**अनाद्यन्तवताऽनेन कालेनेश्वरमूर्तिना ।**
**अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥ ३७ ॥**

**नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ।**
**आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥**

**एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्वधाम्नः ।**
**लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥**

**संसारसिन्धुमतिदुस्तरमुत्तितीर्षो**
**र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।**
**लीलाकथारसनिषेवणमन्तरेण**
**पुंसो भवेद् विविधदुःखदवार्तिदस्य ॥ ४० ॥**

**पुराणसंहितामेतां ऋषिर्नारायणोऽव्ययः ।**
**नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥**

---

प्रतिदिनं जीवस्योर्वारुकविकारवत् परिणामाद्यवस्थाः किं न स्युरिति तत्राह **अनाद्यन्तवतेति** । आकाशे ज्योतिषां नक्षत्राणां यथा स्थितेर्लयो नास्ति , तथा चेतनस्येति शेषः ॥ ३७ ॥

उक्तमुपसंहरति **नित्य इति** । कालस्य कालान्तर्यामिणो हरेर्गतिः स्थितिः ईदृशा दुरवबोधेति ॥ ३८ ॥

परमप्रमेयमुपसंहरति **एता इति** । यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत् क्रोडीं तनुं सकल-यज्ञमयीमित्यारभ्य याः कथा एताः । जगद्विधातृत्वं चतुर्मुखस्यास्तीत्यतोऽ**खिलसत्वधाम्न इति** । सत्वगर्भत्वमुदरम्भरत्वमित्यतो **नारायणस्योति** । सत्वोऽस्त्री जन्तुषु क्लीबे इति यादवः । विस्तरतः कथनं किं न स्यादिति तत्राह **कार्त्स्न्येनेति** । अजो ब्रह्मा ॥ ३९ ॥

कथाकथनप्रयोजनमाह **संसारेति** । प्लवो नौः ॥ ४० ॥

स वै मह्यं महाराज भगवान् बादरायणः ।
इमां भागवतीं प्रीतः संहितां वेदसम्मिताम् ॥ ४२ ॥

एतां वक्ष्यत्यसौ सूत ऋषिभ्यो निमिशालये ।
दीर्घसत्रे कुरुश्रेष्ठ सम्पृष्टः शौनकादिभिः ॥ ४३ ॥

अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः ।
यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ ४४ ॥

त्वं च राजन् मरिष्येति पशुबुध्दिमिमां जहि ।
न जातः प्रागभूतोऽद्य देहवत् त्वं न नङ्क्ष्यसि ॥ ४५ ॥

न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ।
बीजाङ्कुरवद् देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ४६ ॥

---

कथारसनिषेवणाय भागवतपुराणमेव मुख्यसाधनमित्यभिप्रेत्य तस्याप्तिमूलत्वज्ञापनाय मूलं दर्शयति **पुराणेति** ॥ ४१ ॥ संहिताया वेदसंहितात्वज्ञापनाय **वेदसम्मितामिति** ॥ ४२ ॥

अस्या विषयमाह **अत्रेति** । कुतोऽस्या इतरेभ्यः श्रैष्ठ्यं येनादरेण ग्राह्या स्यादित्यतो वाह **अत्रेति**। विष्णवभिन्नत्वेन ब्रह्माद्यन्यतमःकिं नस्यादित्यत्राह **यस्येति** । अनेन आत्मा वै पुंत्रनामाऽऽसीदिति वाक्यप्राप्ता तदात्म(ता)शङ्काऽपि दूरीकृतेति ॥ ४३-४४ ॥

ननु जातः मृतोऽहमिति बुध्देर्विक्रियायाः(सत्वेन)कथं चेतनस्य परिणामाद्यवस्थाभाव इत्याशंक्य सिंहावलोकन्यायेन तस्याविकारित्वमाह **त्वंचेति**। मरिष्येति (इति) सन्धिभावेन घटादिनाशवैलक्षण्यं देंहवियोगस्य दर्शयति **नेति** । न जायते म्रियते वा कदाचिदित्यादेः। देहवदिति प्रत्येकमभिसम्बध्यते। नेति च। त्वं देहवत् न जातः। तर्हि प्रागसन् नेत्याह **प्रागिति**। देहवत् प्रागभूतोऽनुत्पन्नः (न)। अद्य देहवन्न परिणमसि ॥ ४५ ॥

देहान्तरवन्न भविष्यसि । पुत्रपौत्रादिरूपवान् भूत्वा त्वं देहवन्न न नङ्क्ष्यसि । कथमिव पुत्रपौत्रादिरूपवान् । तत्राह **बीजेति** । बीजाङ्कुरपरम्परा यथा तथा । कस्मान्नाशाभाव इति तत्राह **देहादेरिति**। हेतुगर्भविशेषणम्। अत्रापि निदर्शनं यथाऽनल इति। दार्वादिरिति शषः। पुत्रादिरूपत्वे

**स्वप्ने यथा शिरश्छेदः पञ्चत्वाद्यात्मनस्तथा ।**
**यस्मात् पश्यसि देहस्य तत आत्मा ह्यजोऽमरः ।। ४७ ।।**

**घटे भिन्ने यथाऽकाश आकाशः स्याद् यथा पुरा ।**
**एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ।। ४८ ।।**

---

त्वभेदोऽपि प्राप्त इत्यतो वाह **बीजेति** । यथा बीजपरम्परराया भेदः प्रमितस्तथा प्रकृत इति । शेषः प्राग्वत् ।। ४६ ।।

ननु जातो मृत इत्यभेदप्रतीतेस्तद्व्यतिरेकः कथमनलदृष्टान्तःपरमात्मनि सङ्गत इति तत्राह[१] **स्वप्न इति** । आत्मनो जीवस्य स्वप्ने स्वशिरश्छेदो यथा मिथ्या तथा पञ्चत्वादि । इदं स्वानुभवसिद्धमित्याह **यस्मादिति** । त्वं देहस्य पञ्चत्वादि पश्यसीति यस्मात् तत आत्मा अजो न जातः अमरो न मृतश्चेति यत् तस्माद् देहस्यैव जन्मादयो न चेतनस्येति सिद्धम्[२] ।।४७ ।।

अधुना प्रसङ्गात् सामान्यविशेषमरणावस्थामाह **घट इति** । घटे भिन्ने कपालीभूते घटाकारपरिमितो घटाकाशो नीलिमाकारबहिस्थाकाशः स्यात् । पुरा यथा तथेत्यर्थः। एवं देहे मृते पञ्चत्वमुपगते सति जीवः संसारी ब्रह्म तत्त्वं यथाकर्म स्वर्गनरकादिकं सम्पद्यते । घटान्तस्थमहाकाशैकदेशो बहिस्थव्याप्ताकाशो भवति तथा पुरा जीवः प्राणधारकः परमात्मा अन्तर्यामी ब्रह्म व्याप्तस्वरूपमाप्नोति । घटान्तर्गतभूताकाशः पुरा यथा महाकाशाधीनः पश्चादपि तदधीनतामापद्यते तथा चरमदेहान्तलिङ्गशरीरे[३] मृते नष्टे जीवो मुक्तियोग्यः आत्मा परञ्जोतिः सम्पद्यते । अयमर्थः। “महाकाशो बहिस्थश्च घटाद्यन्तस्थ एव च ” इति तत्त्वसंहितावचनादवगन्तव्यः। ब्रह्म मोक्षं पुनरावृत्तिशून्यं वा[४] ।। ४८ ।।

---

१.अस्पष्टेयमवतारिका ।

२.तव देहस्य च भेदे त्वद्दर्शनमेव मानमित्याह स्वप्न इति । आत्मनो यथा स्वप्ने शिरश्छेदः तथा पञ्चत्वादिकं यस्माद् देहस्य पश्यसि ततस्तस्मादात्मा जीवो भवान् अजोऽमरश्च । अवलोक्यावलोकयोर्न तादात्म्यमिति जन्मादयो न देहिनः किन्तु देहस्यैव - इति सत्यधर्मतीर्थाः।

३. चरमदेहान्तस्थे लिङ्गशरीरे मृते इत्यर्थः स्यात् ।

४. नातिस्पष्टमिदं व्याख्यानम् ।

**मनः सृजति वै देहान् गुणान् कर्माणि[1] चात्मनः।**
**तन्मनः सृजते माया ततो जीवस्य संसृतिः।। ४९।।**

**स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते।**
**तावद् दीपस्य दीपत्वमेवं देहकृतो भवः ।। ५०।।**

**रजःसत्त्वतमोवृत्त्या जायेतैधेत नश्यति।**
**न तत्रात्मा स्वयञ्ज्योतिर्यो व्यक्ताव्यक्तयोः परः ।। ५१ ।।**

**आकाशवद् ध्रुवाधारो ध्रुवो नानामितस्ततः।**
**एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ।। ५२ ।।**

---

प्रकारान्तरेण संसारावस्थामाह मन इति। आत्मनो जीवस्य मनः सुरनरादिदेहान् गुणान् कर्माणि आवृत्तिहेतुभूतानि पुण्यपापलक्षणानि च सृजति आपादयति । शब्दादिविषयासक्तिहेतुभूतानि वा । एवंविधं मनः सत् किम् । तत्राह **तदिति** । माया जडप्रकृतिः तन्मन उत्पादयति । सृजत इत्यात्मनेपदप्रयोगेण चिन्मिश्रं मन इति सूचयति। ततो जडमनसः जीवस्य संसृतिः संसारः, वर्तत इति शेषः ।। ४९ ।।

कियन्तं कालं जन्मात्मकः संसार इति तत्राह **स्नेहेति** । यावद् यावन्तं कालं तैलादि-स्नेहाधिष्ठानद्रव्यस्थितवर्त्यग्निसंयोगः तावत् तावन्तं कालं दीपस्य दीपत्वं प्रकाशनसामर्थ्यम् । एवं देहकृतो देहादिकर्मनिमित्तकृतो भव इत्यन्वयः ।। ५० ।।

तैलाद्यभावेन यथा दीपादेः शून्यता एवं जीवस्यापि देहाद्यभावेन शून्यत्वमायातमत्राह **रज इति** । मनसो रजआदिगुणोपजीवनेन देहो जायत इत्यादि । तत्र तस्यामवस्थायामपि यो व्यक्ताव्यक्तयोः देहप्रकृत्योः परो विलक्षणः स आत्मा जीवो न जायते न वर्धते न नश्यति । कुतः । स्वयञ्ज्योतिर्ज्ञानात्मा ।। ५१ ।।

इदानीमुपास्तिप्रकारं विधत्ते **आकाशवदिति**। आकाशवत् ततो व्याप्तः ध्रुवाधारो नित्याधारः ध्रुवो नित्यश्च यः नानामितः तत्तद्वस्तुपरिमाणपरिमितश्च एवंविधमाहात्म्योपेतमात्मस्थं स्वहृदयकुहरनिलयं आत्मानं परमात्मानं आत्मनैव सर्वप्रयत्नेन आमृश सम्यग् विचार्योपास्व। प्रभो इत्युपास्तिसामर्थ्यमाह ।। ५२ ।।

---

१. गुणकर्माणि इति पाठान्तरम्।

**बुद्ध्याऽनुमानगर्भिण्या वासुदेवानुचिन्तया।**
**चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ ५३ ॥**

---

दुर्मरणदोषदुष्टस्य मम देहत्यागेऽपि मोक्षो नास्तीति न चिन्तयेत्याशयेनाह **बुद्ध्येति**। आत्मा स्वस्वेतरवृत्तित्वानाक्रान्तनित्यनिष्ठाधिकरणं मेयत्वादात्मवदिति, देहः स्वस्वेतरवृत्तित्वानाक्रान्त-नित्यनिष्ठाधिकरणं मेयत्वाद् घटवदित्यनुमानगर्भिण्या[१] वासुदेवानुचिन्तया हरेर्निरन्तरसदुपासनया वर्तमानं त्वां विप्रकुमारवाक्येन चोदितः प्रेरितः तक्षको न धक्ष्यति दष्टदोषं नापादयतीत्यन्वयः ॥ ५३ ॥

---

१. अनुमानद्वयमिदं सत्यधर्मतीर्थैरेवं व्याख्यातम्। तथा हि। ''आत्मेति जीवात्मेत्यर्थः। स्वस्वेतरवृत्तित्वानाक्रान्ते-त्यनेन स्ववृत्तित्वस्वेतरवृत्तित्वोभयाभाववद् ब्रह्म विवक्षितम्। स्वपदं पक्षीभूतास्वातन्त्र्यादिगुणविशिष्टजीव-परम्। स्वेतरे अस्वातन्त्र्यादिगुणवत्तया जीवसदृशा जीवभिन्ना घटादयः। तदुभयवृवित्वाभाववद् ब्रह्म। न च सर्वगतस्य कथं जीवतदितररावृत्तित्वमिति वाच्यम्। अखिलजीवतदितरवृत्तित्वपदेन जीवतदितरात्मकाधिकरणसापेक्षसत्ताकत्वस्य विवक्षितत्वात्। तस्य च किंवस्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीदित्यधिष्ठानाक्षेपश्रुतिविरोधेनासम्भवात्। स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति श्रुतेः। तस्य परमात्मनो या नित्यनिष्ठा नित्यसम्बन्धः परमात्मनिष्ठस्वामित्वनिरुपितस्वत्वरूपः, तदधिकरणं मेयत्वात् परिमितशक्तित्वात् (आत्मवत् परमात्मवत्) इत्यर्थः। न च माविषयत्वरूपयथाश्रुतार्थपरत्वमेव किं न स्यादिति वाच्यम्। तथा सति घटादेरेव दृष्टान्तत्वसम्भवेन घटवदिति वक्तव्ये आत्मवदिति दृष्टान्तकथनासङ्गत्यापत्तेः। न चैवमपि साध्यहेत्वारुभयोरप्यभावात् कथं दृष्टान्तत्वमिति वाच्यम्। व्यतिरेकदृष्टान्तत्वाशयात्। देहपक्षकद्वितीयानुमाने मेयत्वादित्यस्य परिमित्वादित्यर्थः। परिमितशक्तित्वादित्यर्थकरणे घटवदिति दृष्टान्तानानुगुण्यापत्तेः। शक्तिपदस्य कार्योत्पत्तिप्रयोजक-चेष्टाजनकप्रयत्नस्वरूपयोग्यतापरत्वात्। अत एव द्वितीयानुचमानं न केवलव्यतिरेकि। न च निष्ठापदस्य कथं सम्बन्धपरत्वमिति वाच्यम्। भूतलनिष्ठो घट इत्यादौ भूतले निष्ठा यस्येति विग्रहवाक्यघटकीभूतस्य निष्ठापदस्य भूतलानुयोगिकघटनिष्ठसंयोगात्मकाधेयतापरत्वस्य दृष्टत्वात्। न च साध्ये नित्यनदं व्यर्थम् इति वाच्यम्। भगवतो भगवद्भक्तानां च स्वाभिभृत्यभावरूपसम्बन्धो नित्य इति प्रतीतेरुद्देश्यत्वेन सार्थक्यात्। अत एव गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादित्यत्र गुणगुणिभेदस्य पूर्वपक्षिणा तार्किकेणाङ्गीकृततया अभिन्नत्वमात्रस्यैव साधनीयत्वेऽपि भिन्नाभिन्नत्वेनैव गुणादिप्रतीतेरुद्देश्यत्वात् तदर्थमेव भिन्नपदस्य सार्थक्यम्। साध्यघटकविशेषणस्य व्यभिचारादिनिरासकत्वानियमात्। क्षित्यङ्कुरादिकं स्वोपादान-गोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यं कार्यत्वाद् घटवदित्यत्र च कृतिमज्जन्यमित्यनेनैव क्षित्यङ्कुराद्युत्पाद-प्रयोजककृतिमत्तयेश्वरसिद्धौ संभवत्यामपि ज्ञानचिकीर्षाग्रहणं ज्ञानचिकीर्षाकृतिमत्त्वेनेश्वर-प्रतीतेरुद्देश्यत्वात् तदर्थत्वेन सार्थकमिति समाहितम्। तथा चैतद्युक्तिपूर्वकं स्वस्मिन् स्वीयदेहे च भगवत्स्वामिकत्वमनुसन्दधतस्तव तक्षको दष्टत्वदोषं नापादयतीत्याशयः। आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः। नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत्। सर्वोत्कृष्टोऽयमेवैकस्तदीयोऽहं स मे पतिः, 'मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च' इत्यादिप्रमाणानुसारादित्थं व्याख्यानम्' इति।

**मृत्यवो नोपसर्पन्ति मृत्यूनां मृत्युमीश्वरम्।**
**अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्॥ ५४॥**

**एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले॥५५॥**

**दशन्तं तक्षकं पादे लेलिहानं विषाननैः।**
**न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः॥ ५६॥**

**एतत् ते कथितं तात यथा त्वं पृष्टवान् नृप।**
**हरेर्विश्वत्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि॥ ५७॥**

**॥ इति चतुर्थोऽध्यायः॥**

---

मृत्यूनां मारकाणां मृत्युं मारकमीश्वरमुप[१] समीपे स्थितं मृत्यवो न सर्पन्ति त्वां न प्रप्नुवन्ति। दंशदोषास्पर्शने प्रकारान्तरेणोपायमाह **अहमिति**[२]। न हन्यत इत्यहं, न हीयत इति वा, कदापि न जहाति स्वशक्तिमिति वा। एवंविधमीश्वरं विहाय कदापि न तिष्ठति, अस्वातन्त्र्यादित्यर्थः॥५४॥

उपासनफलमाह **एवमिति**। एवंविधस्त्वं निष्कले आत्मनि परमात्मानं समधाय संयुज्य समीक्ष्य सम्यग् ध्यायन् विषयुक्ताननैःपदे दशन्तं[३] तक्षकं लेलिहानं सर्पं न द्रक्ष्यसि, इतरसर्पवदिति शेषः।आत्मनो हरेः पृथक् स्वातन्त्र्येण स्थितं विश्वं शरीरं च न पश्यसीत्यन्वयः॥ ५५॥

अवान्तरप्रमेयमुपसंहरति **एतदिति**। चेष्टेति पाठे सा कथितेति शेषः॥ ५७॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य चतुर्थोऽध्यायः॥**

---

१. उपेत्येतत् समीपे स्थितमिति व्याख्यातम्। उपसर्गाः सति क्रियावचने तत्सम्बन्धिनो भवन्ति, असति ससाधनां क्रियामाहुरिति वचनात्।

२.सत्यधर्मतीर्थास्तु प्रकारान्तरेणेदमवतारयामासुः। तथाहि। साम्मुग्ध्येनोक्ता प्राग् वासुदेवचिन्ता एवंरूपेति निरूपयति **अहमिति** इति। अहेयं बह्म सदा मम धाम आश्रयः पदं गम्यं चेति चिन्तनं कार्यमिति सरलः पान्थाः।

३.अनेन शृङ्गिशापः पादे तक्षको दशत्वित्येवंरूप इति ज्ञायत इति सत्यधर्मतीर्थाः।

॥ अथ पञ्चमोऽध्यायः ॥

सूत उवाच-

एतन्निशम्य मुनिनाऽभिहितं परीक्षिद्
व्यासात्मजेन निखिलात्मदृशा समेन ।
तत्पादपद्ममुपसृत्य नतेन मूर्ध्ना
बध्दाञ्जलिस्तमिदमाह स विष्णुरातः॥१॥

परीक्षिदुवाच-

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ।
श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥ २ ॥

नात्यद्भुतमिदं मन्ये महतामच्युतात्मनाम् ।
दीनेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥

पुराणसंहितामेतामश्रौषं भवतो ह्यहम् ।
यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥

भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ॥ ५ ॥

---

श्रीनारायणानुग्रहेण परीक्षितो देहवियोगलक्षणं मरणं जनमेजयस्य पितृभक्तिप्रदर्शनाय सर्पयागः शक्तस्य च शक्रस्य स्वविमानपातोपेक्षां च कथयत्यस्मिन्नध्याये । तत्रादौ परीक्षितः शुकानुज्ञानदानप्रार्थनाप्रकारं वक्तुमाह **एतदिति** । एतत् पुराणम् । निखिलं पूर्णमात्मनं पश्यतीति निखिलात्मदृक् तेन । समस्तस्वामिदृशा वा ॥ १ ॥

सिद्धः सम्पादितपुरुषार्थदेहः ॥२॥ दीनेष्वनुग्रह इति यत् तदिदम् ॥ ३ ॥ कोऽयमनुग्रह इति तमाह **पुराणेति** ॥ ४ ॥ भयाभावे निमित्तमाह **प्रविष्ट इति** । निर्वाणमानन्दं प्राकृतशरीररहितं वा ॥ ५ ॥

अनुजीनीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तकामाशयं चेतः प्रवेक्ष्ये विसृजाम्यसून् ॥ ६ ॥

अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ।
भवता दर्शितं क्षेमं परं भगवतः पदम् ॥ ७ ॥

सूत उवाच -

इत्युक्तस्तमनुज्ञाय भगवान् बादरायणिः ।
जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥

परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ।
समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥ ९ ॥

प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः ।
ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥ १० ॥

तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना ।
हन्तुकामो नृपं गच्छन् ददर्श पथि काश्यपम् ॥ ११ ॥

तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ।
द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥

ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ।
बभूव भस्मसात् सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥

---

कामानामाशयः यस्मात् तज्जडचेतो निगृह्य अधोक्षजे प्रवेक्ष्ये ॥ ६ ॥ क्षेमं मङ्गलम् । क्षेमो ना प्राप्तरक्षायां मोक्षेऽप्यस्त्री तु मङ्गलमिति यादवः ॥ ७ ॥

अस्पन्दासुः निश्चलेन्द्रियः, विषयव्यापारशून्येन्द्रिय इत्यर्थः ॥ ८-९ ॥ ब्रह्मणि भूतः ॥ १० ॥ हे विप्राः॥ ११-१२ ॥

अहिगरलाग्निना सर्पविषाग्निना ॥ १३-१५ ॥

हाहाकारो महानासीद् भुवि खे दिक्षु सर्वतः ।
विस्मिता अभवन् सर्वे देवासुरनरादयः ॥१४॥

देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः ।
ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥

जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ।
अथाजुहाव सङ्क्रुद्धः सर्पान् सत्रे सह द्विजैः ॥ १६ ॥

सर्पसत्रे समिद्धेऽग्नौ दह्यमानान् महोरगान् ।
दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥

नापश्यत् तक्षकं तत्र राजा पारीक्षितो द्विजान् ।
उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥

तं गोपायति राजेन्द्र इन्द्रः शरणमागतम् ।
तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥

पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ।
सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २० ॥

तच्छ्रुत्वा जुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे ।
तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥ २१ ॥

इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ।
बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥

---

कथान्तरमारभते **जनमेजय** इत्यादिना ॥ १६-१७ ॥

**तत्र** यज्ञे कुण्डाग्नौ ॥ १८ ॥ हे विप्राः पात्यतामिति शेषः ॥ १९-२० ॥ **मरुत्वता** मरुद्भिर्युक्तेन ॥ २१ ॥ **ब्रह्मोदिताक्षेपैः** ब्राह्मणोत्कर्षणमन्त्रवचनैः ॥ २२ ॥

तं पतन्तं विमानेन सहतक्षकमम्बरात् ।
विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥

नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् ।
अनेन पीतममृतमथायमजरामरः ॥ २४ ॥

जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा ।
राजंस्तेन विना नान्यो प्रदाता सुखदुःखयोः ॥ २५ ॥

सर्पचोरादिवह्नयम्बुक्षुत्तृड्व्याध्यादिभिर्नृप ।
पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म च ॥ २६ ॥

तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम् ।
सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥

---

आङ्गिरसः अङ्गिरोग्रोत्रप्रभवः । किमिति अत्रेन्द्रेणोपेक्षाऽकारि स्वपाते, न हीन्द्रस्य ब्राह्मणेभ्योऽभिभवो भवेद् देवोत्तमत्वादिति शङ्का न कार्या । जनमेजयस्य स्वसन्तानोद्भवत्वेन तत्प्रीतिकामेनेन्द्रेणेयमुपेक्षा कृता । " स्वन्तानोद्भवं कीर्त्या योजयन् जनमेजयम् । शक्तोऽप्यशक्तवद् यष्टुरिन्द्र आसीदुपेक्षकः । एवमेव ऋषीणां च कीर्तिं योजयताऽमुना । कृतोपेक्षा महेन्द्रेण किमु विष्णुः परात्परः । तस्माद् विष्णोरशक्यं न भूतभव्यभवत्स्वपि । नचानिष्टं गुणैरेव पूर्णो नारायणः सदा" इति वचनात् ॥ २३ ॥

अथ तस्मात् ॥ २४ ॥ मरणं देहवियोगलक्षणम् । गतिः परलोकावाप्तिलक्षणा । स्वेन स्वतन्त्रेण हरिणैवोद्बोधितेन स्वानुष्ठितेन कर्मणा । तेन स्वकर्मोद्बोधकेन हरिणा विना सुखदुःखयोः प्रदाता अन्यो नास्ति ॥ २५ ॥

कर्मणः कारणत्वे सर्पादिना मृतो विष्णुमित्र इति कथमुपपद्यत इत्याशंक्य तेऽपि कर्म निमित्तीकृत्य कारणमिति भावेनाह **सर्पेति** । आदिशब्देन वृक्षादिभ्यः पतनं गृह्यते । सुखादिभोगहेतुत्वाच्च कर्म प्रधानकारणमित्याह **भुङ्क्त इति** ॥ २६ ॥

फलितमाह **तस्मादिति** । संस्थीयेत समाप्तं भवतु । आभिचारिकं जनोपद्रवकारकं कर्म । एकस्यापराधेनानपराधिबहुजननाशेन पापमेव स्यादिति भावेनाह **सर्पा इति** । ननु तज्जातित्वात्

**इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः ।**
**सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥**

**सैषा विष्णोर्महामाया बाध्यबाधकलक्षणा ।**
**यया मुह्यत्यसावात्मा भूतेषु गुणवृत्तिभिः ॥ २९ ॥**

**न यत्र दुर्भाव्यतया विराजते मायात्मवादेऽसकृदात्मवादिभिः ।**
**न यद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्ति यत् ॥३० ॥**

**न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितः स्वयम् ।**
**तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन् विरमेत तन्मुनिः ॥ ३१ ॥**

---

तक्षकापरध एषामपराधस्तस्मादनागसो न स्युः, एकः पापानि कुरुते फलं भुङ्क्ते महाजन इत्याशंक्य तक्षकस्याप्यपराधो नास्ति दैवेन तद्दंशनेन स्वकृतकर्मपूर्वकेण परीक्षितो मरणस्य क्लृप्तत्वादिति भावेनाह **जनैरिति** ॥ दिष्टं दैवकृतं कर्मपलम् ॥ २७ ॥

इत्यादियुक्तिपूर्वकेण वचसा । वाक्पतिं बृहस्पतिम् । वाग्वै बृहतीति श्रुतेः । तद्बृहतोः करपत्योश्चोरदेवतयोरिति सुट् तलोपश्च ॥ २८ ॥

सुखादेर्जीवादृष्टमेव मुख्यं कारणं नान्यदित्याशङ्कां परिहरति **सैषेति** । या अदृष्टोद्बोधिका सैषा महामाया महदपरिमितं माहात्म्यं तस्य विष्णोः । तस्मान्न दुर्गाऽत्रोच्यते । बाध्ये स्थितत्वाद् बाध्यात्मत्वेन जानाति ।सत्वादिगुणवृत्तिभिः कारणैः, विषयवृत्तिभिर्व्यापारैरिति शेषः ॥२९॥

मुह्यन्नात्मा परमात्मेति शंकामपाकरोति **नेति**।आत्मवादिभिः उपनिषद्विचारचतुरैः पुरुषैः असकृद् बहुवारमात्मवादे परमात्मविचारे कृते सति माया मोहनशक्तिर्यत्र हरौ न विराजते मोहकत्वेन न प्रवर्तते अन्यैर्दुर्विभाव्यतया स्थिता । उपक्रमादितात्पर्यलिङ्गैः क्रियमाण एव विचारो निर्णायको नतु यथाप्रतीतार्थ इत्याह **नेति** । विविधो यद् विवादः तदाश्रयो ब्रह्मविषयो न भवति ।यद् वाचाऽनभ्युदितमिति श्रुतेः । तर्हि मननसमर्थस्य मनसो विषयत्वं स्यादत्राह **मनश्चेति** । चोप्यर्थः। मनोऽपि यद् ब्रह्म न विषयीकरोति । यन्मनसा न मनुते इति श्रुतेः । संकल्पविकल्पाभ्यां वृत्तिर्यस्य तत् तथा । अनेन मनसोऽस्थिरत्वेन विषयीकरणसामर्थ्यं नास्तीति सूचितम् । मनसा वा अग्रे

**परं पदं वैष्णवमामनन्ति यन्नेतिनेतीत्यतदुत्सिसृक्षवः ।**
**विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यापुरमुं पदेपदे ॥ ३२ ॥**

**तदेतदधिगच्छति विष्णोर्यत् परमं पदम् ।**
**अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥**

**अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।**
**नचेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥**

**नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे ।**
**यत्पादाम्बुरुहध्यानान्संहितामध्यगामिमाम् ॥ ३५ ॥**

**॥ इति पञ्चमोऽध्यायः ॥**

---

संकल्पयत्यथ वाचा व्याहरतीति श्रुतेः वचोविषयो नेति किं वक्तव्यमिति कैमुत्यन्यायोऽप्यदर्शि । अत्र वागादिशब्देन तदभिमानिदेवता व्यपदिश्यन्ते ।तासां जडत्वेन प्रवृत्यनुपपत्तेः ॥ ३० ॥

सृज्यं विश्वं यत्र न वर्तते, बाधकतयेति शेषः । उभयोर्देवासुरयोः परं विलक्षणं आनन्द (दुःख) लक्षणं श्रेयः सृजता ददता येन वैषम्यनैर्घुण्ये नाप्येते इति शेषः । त्रिभिः सत्वादिगुणैर्धमार्थकामैर्वा अन्वितो जीवः स्वयं च यत्र न कञ्चन विशेषमापादयतीति शेषः[१] । यः तदेतद् ब्रह्म जानाति तन्मुनिः स ज्ञानी षडूर्मीन् निषिध्य विरमेत, कृत्यादिति शेषः । कीदृशं ब्रह्म । उत्सादितबाध्यबाधकम् उत्सादितौ बाध्यबाधकौ येन तत् तथा ॥ ३१ ॥

किंनामधेयं ब्रह्मेति तत्राह **परं पदमिति** । यन्नेतिनेतीत्यतदुत्सिसृक्षवो विचक्षणा यदेवंस्थितं तद् वैष्णवं पदमामनन्ति वदन्तीत्यन्वयः । कीदृशम् । तस्मिन्नेव समाहितैः करणैरवसितं सम्यग् वशीकृतम् ॥ ३२ ॥

अत्र प्रमाणमाह **तदेतदिति** ॥ ३३ ॥ अतिवादान् दुष्टवचनानि ॥ ३४ ॥ श्रेयः प्राप्तौ तस्मादिदं

---

१. सृज्यं सृजता येन उभयोरिह परत्र चेत्युभयोर्यत्र जीवस्य संगे परं श्रेयो भवति स जीवस्त्रिभिर्गुणैरन्वितः । स्वयं तद् ब्रह्म तैर्नान्वितम् । यद् यत उत्सादितबाध्यबाधकम् उत्सादितौ बाध्यबाधकौ येन तत् । बाध्यबाधके स्वाधीने इति तदुत्सादकम् । - इति सत्यधर्मतीर्थाः ।

## ।। अथ षष्ठोऽध्यायः ।।

**शौनक उवाच -**

**पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ।**
**वेदा वै कतिधा व्यस्ता एतत् सौम्याभिधेहि नः ।। १ ।।**

**सूत उवाच -**

**समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।**
**हृदाकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ।। २ ।।**

---

प्रकृष्टसाधनमित्याशयेनाह **नम इति** । श्रीकृष्णचरणारविन्दप्रणतिस्मरणपूर्वकं भागवतपुराण-लक्षणसंहिताश्रवणमननादिकं मुख्यसाधनमित्यर्थः ।। ३५ ।।

**।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य पञ्चमोऽध्यायः ।।**

भगवन्माहात्म्यप्रकटनाय तत्प्रेरितेन चतुर्मुखेन नादादिवेदान्तशब्दराशिमुद्धृत्याध्यापनेन पुत्रेभ्यो विश्राणनं तच्छिष्येभ्यो विभज्य दानम्, अनुयुगं पुनरपि तद्विभाग पुराणप्रवचनं च निगदत्यनेनाध्यायेन । तत्रादौ सूतः शौनकं वेदविभागं पृच्छति **पैलादिभिरिति** । वैपदेन वेदादेरभिव्यक्तिर्मूल-वेदविभक्तिश्च कथं केनेति सूचयति । व्यासशिष्यैरित्यनेन कस्मिन् युगे किं विभक्तान् वेदान् व्यस्यन्नुताविभक्तानिति, वेदाचार्यैरित्यनेन वेदोपयोगिकल्पप्रणयानादिनिपुणैरिति, महात्मभिरित्यनेन तपोबलाद् वेददर्शनसमर्थैरिति, अभिधेहीत्येननान्वर्थनामपूर्वकं वदेति ।। १ ।।

तत्रादौ सूचितप्रश्नं परिहर्तुं सूतः कथामाह **समाहितात्मन इति** । सं समीचीने निर्दुःखानन्दानुभवे हरावाहित आत्मा मनो यस्य स तथा तस्य । ब्रह्मपदस्यानेकार्थे वृत्तेर्विवक्षितमर्थमाह **परमेष्ठिन इति** । शब्दस्याकाशविशेषगुणत्वेन ततोऽभिव्यक्तिर्युक्तेति सूचयति **हृदाकाशादिति** ।तत्सत्वे किं प्रमाणमत्राह **वृत्तिरोधादिति** । स नादः सर्वेन्द्रियवृत्तिस्तम्भाद् वायुवृत्तिनिरोधाच्च विभाव्यते ज्ञायते, योगिनेति शेषः ।।२।।

**यदुपासनया ब्रह्मन् योगिनो मलमात्मनः ।**
**द्रव्यक्रियाकारकाख्यं[1] धूत्वा यान्त्यपुनर्भवम् ॥ ३ ॥**

**ततोऽभूत् त्रिवृदोङ्कारो व्यक्तप्रभवः स्वराट् ।**
**यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ ४ ॥**

**शृणोति य इमं स्फोटं सुप्तःश्रोतेव शून्यदृक् ।**
**येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ५ ॥**

---

किममुना नादेन शून्यकल्पेन फलमिति तत्राह **यदुपासनयेति** ।यस्य नादस्योपासनया योगिनो द्रव्याणि पञ्चभूतानि तन्निर्मितदेहो वा क्रिया कर्मेन्द्रियं कारकं ज्ञानेन्द्रियम् एभ्य आख्यातं प्रकाशितमुत्पन्नमिति यावत् आत्मनो मनसो मलं धूत्वा अपुनर्भवं मोक्षं यान्तीत्यन्वयः । ''स्त्रीपुंनपुसकात्माऽयं नादो ब्रह्मविनिर्मितः । घण्टादिनादसदृशो मुक्तिस्वर्गादिदो विभुः'' इति वचनादपुनर्भवं तारतम्योपेतं फलमाप्नुवन्तीति भावः ॥ ३ ॥

ततो नादाद् घण्टानादानुकारात् त्रीन् अकारोकारमकाराख्यान् वर्णान् वृणोतीति त्रिवृत् ओंकारोऽभूदभिव्यक्तः । व्यक्तस्य प्रपञ्चस्य प्रभव उत्पत्तिर्यस्य स तथा । भूतं भवद् भविष्यदिति सर्वमोंकार एवेति श्रुतेः । वर्णपक्षे अव्यक्तस्य हरेः सकाशात् प्रभवो यस्य स तथा । स्वत एव राजतीति स्वराट्, स्वयं प्रकाशमान इत्यर्थः । स्वयं परमात्मनं राजयतीति वा । एतदेवाह **यत्तदिति** । यत्तदोंकारात्मकं वस्तु हरेर्लिङ्गं ज्ञापकम् । ओतत्ववाची ह्योंकारो वक्त्यसौ तद्गुणोतताामिति वचनात् । चतुर्मुखव्यावृत्तये **परमात्मन इति** ॥ ४ ॥

शम् ऊनं यापयति दैत्यादेरिति शून्यं परब्रह्म पश्यतीति शून्यदृक् सःब्रह्मापरोक्षी, यश्च सुप्तः ब्रह्म प्राप्तः[2] स इमं स्फोटं प्रणवलक्षणं ध्वनिं शृणोति । क इव श्रोतेव ।[3] भगवानिव । श्रोता मन्तेति श्रुतेः । अनेनास्य सत्वे प्रमाणमुक्तं भवति ।किञ्च येनोंकारेण वाग् वेदलक्षणा व्यज्यते अकारस्य

---

१. टीकानुसारात् आख्यमित्यस्य आख्यातमित्यर्थः ।

२. स्वित्यानन्दः परो विष्णुस्तमाप्तः सुप्त उच्यत इति बृहद्भाष्योक्तेः ।

३. शृणोतीति श्रवणस्वातन्त्र्यमाख्यातलभ्यमसहमानः स्वयं मूलकृद् व्याख्याति श्रोतेवेति । तच्छ्रावको भगवानेवेत्यर्थः- इति सत्यधर्मतीर्थाः ।

**स्वधाम्नो ब्रह्मणः साक्षाद् वाचकःपरमात्मनः ।**
**स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥ ६ ॥**

**तस्य हासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ।**
**धार्यन्ते यैस्त्रयो भावा गुणानामर्थवृत्तयः ॥ ७ ॥**

---

प्रणवात्मकत्वात् । अकारो वै सर्वा वागिति श्रुतेः । प्रणवस्य वेदादित्वादकारस्यापि सर्वादित्वात् । आप्तेरादिमत्वाद्वेति श्रुतेः । आत्मनः परमात्मनः उत्पद्यमान आकाशो यस्य व्यक्तिः स्थानम् । आत्मन आकाशः सम्भूत इति श्रुतेः । आकाशात् सर्वमुत्पद्यत इति च ॥ ५ ॥

पूर्वं लिङ्गत्वेन तद्विषयत्वमुक्तमधुना वाचकत्वेनाह **स्वधाम्न इति** । स्वयंप्रकाशस्य । ओङ्कारस्य सर्वानुगतत्वमाह **स इति** । स ओङ्कारःसनातनं सदातनं सर्वमन्त्रोपनिषद्वेदानां बीजं फललक्षणाङ्कुरजनकशुक्रस्थानीयं स्त्री[१] घण्टानादवदच्छिन्नत्वेनोच्चार्यमाणं सर्वमन्त्रादीनां जपानां फलदानसामर्थ्यं जनयतीति भावः[२] ॥ ६ ॥

त्रिवृदित्युक्तं विवृणोति **तस्येति** । अकाराद्यास्त्रयो वर्णा तस्योंकारस्यावयवा आसन्नित्यन्वयः। हेत्यनेन सोयमात्माऽध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा अकारोकारमकारा इति प्रसिद्धिमाह । यद्वा वृत्त्यभिव्यक्तौ प्रत्यारम्भ क्रियत इति सूचयति । प्रत्यारम्भे प्रसिध्दौ हेत्यभिधानम्।एभ्यो भूर्भवः स्वरिति नामाभिव्यक्तिं वक्ति **धार्यत इति** । यैरकाराद्यैस्त्रयो भावा व्याहृतिलक्षणा धार्यन्ते । व्याहृतिभ्योऽक्षरसमाम्नायो व्यज्यते । ज्ञानादिगुणानामर्थे विषयभूते हरौ वृत्तिर्येषां ते तथोक्ताः । सर्ववेदोक्तगुणार्णवनारायणलीलाव्याहरणाद् व्याहृतय इत्यर्थः । यद्वा भूरादिलोकेषु शब्दादिगुणानां भोगप्रवर्तकाः ॥ ७ ॥

---

१. त्रिर्घण्टानादवदिति पाठः स्याद्वा ?

२. लिङ्गतयाऽवगमकत्वमोंकारस्योक्तम् । इदानीं वाचकोऽपीति द्वितीयपक्षे मुख्यतया वाचक इत्याह । स्वधाम्नः स्वप्रकाशस्य परमात्मनः साक्षात् परममुख्यवृत्त्या वाचकः स ओङ्कारः सर्वमन्त्रोपनिषत्सहिता वेदास्तेषां बीजं मूलम् । यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोंकारेण सर्वा वाक् सन्तृण्णेति श्रुतेः । सनातनं नित्यं नादेनोच्चारणेन सह वर्तत इति तत् तथा । त्रिमात्रोंकारमात्रोच्चारणेन सर्ववेदपारायणफलं तथा स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत इत्यादेस्तत्फलोन्नाहकं च भवतीति तात्पर्यम् - इति सत्यधर्मतीर्थाः ।

ततोऽक्षरसमाम्नायमसृजद् भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ८ ॥

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान् सोंकारांश्चातुर्होत्रविवक्षया ॥ ९ ॥

पुत्रानध्यापयत् तांस्तु महर्षीन् ब्रह्मकोविदान् ।
ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ १० ॥

ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ।
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ११ ॥

क्षीणायुषः क्षीणसत्वान् दुर्मेधान् वीक्ष्य कालतः ।
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतनोदिताः ॥ १२ ॥

---

ततो व्याहृतिभ्योऽक्षरसमाम्नायमकारादिहकारान्तानामक्षराणां समीचीनं सम्प्रदायं गुरुपारम्पर्य-क्रममसृजदित्यन्वयः । कोऽसौ क्रम इति तं स्पष्टयति **अन्तःस्थेति** । यरलवा अन्तःस्थाः शषसहा ऊष्माणः, अचः स्वराः, कादयो मावसानाः स्पर्शाः । "एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्धमात्रकम् " इत्यत आदिशब्दो विवृतः ॥ ८ ॥

तेनाक्षरसमाम्नायेन सव्याहृतिकान् भूर्भुवःसुवरिति वा एतास्तिस्रोव्याहृतय इत्यादि व्याहृतिसहितान् सोंकारन् ओमित्येतदक्षरमिदं सर्वमित्याद्योंकारसहितान् । विनियोगमाह **चातुर्होत्रेति**। चतुर्भिर्होतृभिः क्रियमाणं कर्म चातुर्होत्रम् ॥ ९ ॥

ब्रह्मकोविदान् वेदविचारविचक्षणान् । ते पुत्राः ॥ १० ॥

ते वेदाः चतुयुर्गेषु तत्तच्छिष्यैः परम्परया प्राप्ताः, यथा चतुर्मुखेनाधीता अध्यापितास्तथा अध्ययनं प्राप्ता इत्यर्थः । उक्तापवादमाह **अथेति** । अथ त्रेतानन्तरं द्वापरादौ महर्षिभिर्वेदा व्यस्ता अभूवन् ॥ ११ ॥

एतदेव विवृणोति **क्षीणायुष इति** । नन्वेषां स्वातन्त्र्यमापतितमिति तत्राह **हृदिस्थेति** ॥ १२ ॥

अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः ।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ १३ ॥

पराशरात् सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ १४ ॥

ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ।
चतस्रः संहिताश्चक्रे सूत्रैर्मणिगणानिव ॥ १५ ॥

तासां स चतुरः शिष्यानुपहूय महामतिः ।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ १६ ॥

पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥ १७ ॥

साम्नां जैमिनये प्राह तथा च्छन्दोगसंहिताम् ।
अथर्वाङ्गिरसां नाम स्वशिष्याय सुमन्तवे ॥ १८ ॥

पैलः स्वसंहितामूचे इन्द्रप्रमितये[1] मुनिः ।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥ १९ ॥

चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ।
पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥ २० ॥

---

ननु सत्यवतीसुतेन वेदाः कस्मिन् युगे व्यस्ता इत्याह **अस्मिन्निति**। अस्मिन् श्राद्धदेवमन्वन्तरे ॥ १३ ॥ एतदेव विवृणोति **ऋगिति**। ऋगादीनां राशीन् वर्गसंख्ययोद्धृत्य चतस्रः संहिताश्चक्रे। सूत्रैः स्यूतान् ॥ १४-१५ ॥ तासां संहितानां मध्ये एकैकाम् ॥ १६ ॥

एकैकामित्युक्तं विशिनष्टि **पैलायेति** ॥ १७ ॥ तथा साम्नामुद्धृतां च्छन्दोगसंहितां जैमिनये प्राह ॥ १८ ॥ इन्द्रप्रमितिरपि स्वसंहितां चतुर्धा व्यस्य विभज्य। शिष्यान् नाम्ना निर्दिशति बोध्यायेति। हे भार्गव इन्द्रप्रमितिरपि आत्मवान् परमात्मज्ञानी ॥ १९-२० ॥

---

१. इन्द्रप्रमतये इति सत्यधर्मपाठः।

अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविम्।
तस्य शिष्यो वेदमित्र सौभर्यादिभ्य ऊचिवान्॥ २१ ॥

शाकल्यस्तत्सुतस्तां तु पञ्चधा व्यस्य संहिताम्।
वात्स्यमौद्गल्यशालीयगोसत्यशिशिरेष्वधात्॥ २२ ॥

जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम्।
व्यलीकपैङ्गिपैलालविरजेभ्यो ददौ मुनिः ॥ २३ ॥

बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम्।
चक्रे बालायनिगार्ग्यकासाराश्चैव तां दधुः ॥ २४ ॥

बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ।
श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते॥ २५ ॥

वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन्।
यच्चेरुर्ब्रह्महत्यांहःक्षपणाय गुरोर्व्रतम्॥ २६ ॥

याज्ञवल्क्यस्तु तच्छिष्य आहांहो भगवन् कियत्।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुष्करम्॥ २७ ॥

---

कविं नाम्ना माण्डूकेयमृषिं च स्वसंहितामध्यापयत्। तस्य माण्डूकेयस्य ॥२१॥ तस्य सुतो वेदमित्रस्य पुत्रः वात्स्यादिषु पञ्चसु अधात् अदात्॥ २२ ॥

तस्य शाकल्यस्य शिष्यः। सनिरुक्तां निरुक्तसहितां॥ २३ ॥ बाष्कलिः पूर्वोक्तबाष्कलपुत्रः प्रतिशाखाभ्यः पूर्वोक्तसर्वशाखाभ्यः उद्धृत्य वालखिल्याख्यसंहितां चक्रे। तां नाम्ना वालखिल्याख्य-संहितां बालायनिप्रभृतयो दधुरधीतवन्तः ॥ २४ ॥

उक्ता एता संहिताः नाम्ना विशिनष्टि **बह्वृचा** इति। ऋग्वेदसंहिताः। किमनेन च्छन्दसां व्यासेन श्रुतेनाधीतेन निःश्रेयसानुपयुक्तेनेति तत्राह श्रुत्वेति॥ २५ ॥

चरकास्तीर्थसेवकाः। अध्वर्यवः यज्ञकर्मणि निपुणा ऋत्विग्विशेषाः ॥ २६ ॥

तस्य वैशम्पायनस्य शिष्यो याज्ञवल्क्यो गुरुमित्याह। हे भगवन् गुरो ब्रह्महत्यांहःक्षपणाय व्रतं

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥ २८ ॥

देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥२९ ॥

भूत्वा तित्तिरयो ब्रह्मन् तल्लोलुपतयाऽऽददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥ ३० ॥

याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यतिगवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ३१ ॥

**याज्ञवल्क्य उवाच -**

**ॐ नमो भगवते आदित्यायाखिलजगदात्मस्वरूपेण कालरूपेण च चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरप्याकाश इवोपाधिना व्यवधीयमानो भगवानेक एव क्षणलवनिमेषाद्यवयवोपचितसंवत्सरगणेन तोयादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ३२ ॥**

---

चेरुरिति यस्मात् तस्मादंहः प्रत्यल्पसाराणामेतेषां चरितेन कियत् किं प्रयोजनं स्यात्, अहं दुश्चरं व्रतं चरिष्ये करिष्यामीति ॥ २७ ॥

ततो गुरूणा किमुक्तमत्राह **इतीति** । विप्रावमन्त्रा ब्राह्मणावज्ञानकर्त्रा शिष्येण त्वया अलं इतो याहि किञ्च मदधीतं आशु त्यज उत्सृजेति ॥ २८-३१ ॥

ॐ ब्रह्मनाम्ने । ॐ स्याद् ब्रह्मण्यनुज्ञायामिति यादवः । अथ कस्मादुच्यते ।अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा इति श्रुतेः । गुणैरोतत्वादोंकारस्याप्ययमेवार्थः । इममेवार्थं सूचयति **भगवत इति** । भगवते षड्गुणपूर्णाय । अयं वसिष्ठादिवदिदानीन्तनो भगवान्नेत्याह आदित्याय आदिभवाय पुरातनाय । यद्वा अखन्डितैश्वर्याय ।एतद् द्वयमुपपादयति **अखिलेति** । यो भगवान् ब्रह्मादिस्तम्बपर्यन्तानामण्डजादिभेदेन चतुर्विधानां भूतसमूहानां हृदयेष्वन्तरखिलजगदात्मस्वरूपेण समस्तजगदन्तर्यामिरूपेण स्थितो बहिरपि क्षणलवनिमेषाद्यवयवोपचितसंवत्सरगणलक्षणेन

**यदिहवाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरित-वृजिनबीजावभर्जनं भगवतः समभिधीमहि तपनमण्डलम् ॥ ३३ ॥**

**य इह वाव स्थिरचरनिकराणां स्वनिकेतनानां मनइन्द्रियासुगणाननात्मनस्तत्वं स्वयमात्मान्तर्यामी प्रचोदयति ॥३४ ॥**

**य एवेमं लोकमतिकरालवदनान्धकारसञ्ज्ञाजागरगृहीतं मृतकमिव विचेतनमवलोक्यानु-कम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्य आत्मावस्थाने प्रवर्तयत्य-निमिषाधिपतिरसाधूनां भयमुदीरयन्नटति परित आशापालैस्तत्र तत्र कमलकोशाञ्जलि-भिरुपहृतार्हणः ॥३५॥**

---

कालरूपेणाकाश इव व्यवधीयमानः तोयादानविसर्गाभ्यां प्रत्यब्दं तोयस्यादानं शोषणं विसर्गो वृष्टिस्ताभ्यां इमां लोकयात्रामनुवहति । यद्वा घटाद्युपाधिना आकाश इव सुरनरादिशरीरोपाधिना व्यवधीयमानः परिच्छिद्यमान इति ॥३२॥

हे विबुधर्षभ हे सवितः तव यददोमण्डलमनुसवनं तपति प्रकाशते इहवावेत्यलङ्कारार्थः । हे तपन प्रकाशनशील तत् समभिधीमहि सम्यक् चिन्तयामः । कीदृशं मण्डलम् । अहरहराम्नायविधिना वेदोक्तप्रकारेण उपतिष्ठमानानां सेवमानानाम् अखिलानां दुरितानां दुष्पापानां वृजिनानां दुःखानां बीजानि दुष्कर्माणि अवभर्जयितुं शीलमस्यास्तीत्यस्मिन्नेवार्थे ल्युट्प्रत्ययः ॥ ३३ ॥

इह भुवि यो वाव स्वनिकेतनानां स्वाश्रयाणां स्थिरचरनिकराणाम् आत्मा स्वामी अन्तः स्थित्वा सुखप्रेरकश्च तत्वमनारोपितस्वभावः स्वयं तेषामनात्मनः अचेतनप्रायान् मनइन्द्रियासुगणान् प्रचोदयति प्रेरयति । अनेन विशेषणद्वयेन तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादित्ययं विस्तृतः । यः नः धियः ज्ञानसाधनत्वादिन्द्रियाणि प्रचोदयात् तस्य सवितुः जगत्स्रष्टुः भर्गः सकलदुःखबीजभर्जनकं वरेण्यं रमणीयं तन्मण्डलं धीमहीति । आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेति ॥ ३४ ॥

अतिकरालं वदनं यस्य स तथा स एवान्धकारः अज्ञानलक्षणःतन्नाम्नाऽजागरग्रहेण गृहीतं ग्रस्तं मृतकमिव शववदचेतनकल्पमिमं लोकं जनमवलोक्य द्रवीकृतचित्तवृत्त्या परमकरुणिको यो भवान्

अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिरभिवन्दितमहमयातयामयजुःकाम उपसरामीति ॥३६ ॥

सूत उवाच -

एवं स्तुतः स भगवान् वाजिरूपधरो रविः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥३७ ॥

यजुर्भिरकरोच्छाखा दशपञ्च सुतैर्विभुः ।
जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥ ३८ ॥

जैमिनेः सामगस्यासीत् सुमन्तुस्तनयो मुनेः ।
सुमन्वांस्तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ३९ ॥

सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ।
सहस्रं संहिताभेदं चक्रे साम्नां ततो द्विजः ॥ ४० ॥

---

ईक्षयैव कटाक्षनिरीक्षणेनैव तमुत्थाप्य अनुदिनमात्मनः परमात्मनोऽवस्थानं प्राप्तिर्यस्मात् तत् तथा तस्मिन् स्वधर्माख्ये श्रेयसि प्रवर्तयत्येव । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेरिति श्रुतेः । कालप्रणायको यश्च भवानाशापालैः इन्द्रादिभिः कमलकुड्मलाञ्जलिभिस्तत्र तत्र समुपचितःअसाधूनां मरणभयमीरयन् परितोऽटति परिवर्तते । आ प्रा द्यावापृथिवी अन्तरिक्षमिति श्रुतेः । तस्मै तुभ्यं नम इति पूर्वेणान्वयः ॥ ३५ ॥

स्वाभिप्रायमुद्गलयति **अथेति** । यस्मादयातयामयजुष्कामः अथ तस्मात् त्रिभुवनगुरुभिरभिवन्दितं तव चरणनलिनयुगलमुपसरामि शरणं गतोऽस्मीति तुष्टावेत्यर्थः ॥ ३६ ॥

वाजिरूपधरः अश्वरूपधरः ।अयातयामानि अगतसाराणि, वीर्यवन्तीत्यर्थः ॥ ३७ ॥ वाजसनः सूर्यः तत अगताः शाखा वाजसन्यस्ताः शाखा काण्वादयो माध्यन्दिनादयश्चं ॥ ३८ ॥

साम गायतीति सामगः, तस्य जैमिनेस्तनयः सुमन्तुर्नाम । तस्य सुमन्तोः सुतः सुमन्वान्नाम । ताभ्यां सुमन्तुसुमन्वभ्यां पुत्रपौत्राभ्यां क्रमेणैकामेकां प्राह ॥ ३९ ॥ सुकर्मापि तस्य जैमिनेः शिष्यः महान् अतिप्रज्ञावान् सामवेदाख्यतरोः साम्नां सहस्रं संहितारूपं भेदं चक्रे ॥ ४० ॥

हिरण्यनाभः कौसल्यः पौष्यञ्जिश्च सुकर्मणः ।
शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ।। ४१ ।।

उदीच्याः सामगाः शिष्या आसन् पञ्चशतानि वै ।
पौष्यञ्ज्यावन्त्ययोश्चापि तांश्चोदीच्यान् प्रचक्षते ।। ४२ ।।

लौगाक्षिर्लाङ्गलिः कुल्यः कुसीदः कुक्षिरेव च ।
पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् ।। ४३ ।।

कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ।
शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ।। ४४ ।।

अथर्ववित् सुमन्तुश्च शिष्यमध्यापयत् स्वकाम् ।
संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ।। ४५ ।।

शौक्लायनिर्ब्रह्मवालिर्मोदोषः पिप्पलायनिः ।
वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु
कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् ।। ४६ ।।

बभ्रुः शिष्योऽप्यङ्गिरसः सैन्धवायन एव च ।
अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथा परे ।। ४७ ।।

---

कौसल्यः कोसलपुत्रः । हिरण्यनाभश्च पौष्यञ्जिश्च सुकर्मणः शिष्यौ जगृहुः , सामशाखामिति शेषः । अन्य आवन्त्य उदीच्यश्च, सामशाखां जगृहतुरिति शेषः । पौष्यञ्ज्यावन्त्ययोश्चापि सामगाः पञ्चशतानि शिष्या आसन् । तेषां समुदितानां नामान्याह तानिति । पौष्याञ्जिशिष्या लौगाक्ष्यादयो नाम्ना शतंशतं संहितां जगृहुः ।। ४१-४३ ।।

हिरण्यनाभस्य शिष्यः नाम्ना कृतः चतुर्विंशतिसंहिताः स्वशिष्येभ्य ऊचे । ।। ४४ ।।

सोऽपि सुमन्तोः शिष्योऽपि पथ्याय ।। ४५ ।। कुमुदादयः पथ्यशिष्याः ।। ४६ ।।

बभ्रुसैन्धवायनौ पथ्यशिष्यस्य अङ्गिरसोऽङ्गिरोगोत्रे विद्यमानस्य शुनकस्य शिष्यो अधीयेतां

नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः ।
एते आथर्वणाचार्याः शृणु पौराणिकान् मुने ॥ ४८ ॥

त्र्य्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ।
शिंशपायनहारीतौ षड् वै पौराणिका इमे ॥ ४९ ॥

अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ।
एकैकामहमेतेषां शिष्यः सर्वां समध्यगाम् ॥ ५० ॥

काश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ।
अधीमहि व्यासपुत्राच्चतस्रो मूलसंहिताः ॥ ५१ ॥

पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ।
श्रुणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ५२ ॥

सर्गश्चैव विसर्गश्च वृत्तिरक्षान्तराणि च ।
वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ॥ ५३ ॥

दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।
क्वचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥ ५४ ॥

---

अधीतीवन्तौ । "शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे । द्वितीयां संहितां प्रादात् सैन्धवायन-सञ्ज्ञिते" इति । सावर्ण्याद्याश्च **सैन्धवादीनां**[1] **शिष्याः** ॥ ४७ ॥ आथर्वणाचार्या अथर्ववेदाचार्याः, पाठतोऽर्थतश्च अथर्ववेदप्रवर्तका इत्यर्थः । पौराणिकान् पुराणाचार्यान् ॥ ४८-४९ ॥

मत्पितुर्मुखात् पुराणसंहितामधीयन्त । त्र्य्यारुण्यादयः कथमेकैकामधीतवन्तः, त्वं तु कथं सर्वानधीतवानिति तत्राह **अहमिति** । अहमेतेषां शिष्यः सर्वां पुराणसंहितामपठम् ॥ ५० ॥ व्यासपुत्रात् श्रीशुकात् ॥ ५१ ॥

प्रसङ्गात् पुराणलक्षणं वक्तुं प्रतिजानीते **पुराणेति** ॥५२॥ वृत्तिश्च रक्षा च अन्तराणि च वृत्तिरक्षान्तराणि ॥ ५३ ॥ पुराणस्य महदल्पव्यवस्थया । क्वचित् स्थले । पञ्चविधं पञ्चलक्षणप्रकारोपेतम् ॥ ५४ ॥

---

१. सैन्धवायनस्य इति पाठः स्याद्वा ?

अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ।
भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥ ५५ ॥

पुरुषानुगृहीतानामेतेषां वासनामयः ।
विसर्गो यः समाहारो जीवोऽजीवश्चराचरः ॥ ५६ ॥

वृत्तिर्भूतानि भूतानां चराणामचराणि च ।
कृतेशेन नृणां तत्र कामाच्चोदनयाऽपि वा ॥ ५७ ॥

रक्षाऽच्युतावतारेहा विश्वस्यानु युगेयुगे ।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥ ५८ ॥

---

तत्र सर्गादिकं क्रमेण लक्षयति **अव्याकृतेति** । अव्याकृतगुणक्षोभात् प्रकृतिगुणानामन्योन्य-संयोगलक्षणसञ्चलनात् महतो महत्तत्त्वस्य, वैकारिकादिभेदेन त्रिवृतोऽहमः अहंकारस्य, भूत-सूक्ष्मेन्द्रियार्थानां पञ्चभूतसूक्ष्मेन्द्रियविषयाणां सम्भवो जन्म। भूतमात्रेन्द्रियधियां जन्मेत्यधस्तादुक्तम् ॥ ५५ ॥

पुरुषेण भगवता अनुगृहीतानामनुप्रवेशलक्षणानुग्रहवताम् एतेषां तत्वानां सकाशाद् वासनामयो यः समाहारः तत्तत्कर्मवासनानुसृतिः सृष्टिः स विसर्गः । जीवोऽजीवः चेतनाचेतनलक्षणः चराचरः चराचरात्मको ब्रह्माण्डसर्गः । " ब्रह्मणो गुणवैषम्याद् विसर्गः पौरुषः स्मृतः" इति (अत्रैव पूर्वत्र) ॥ ५६ ॥

पञ्चानां भूतानां पञ्चभूतान्येवान्योन्यं वृत्तिर्जीवनमन्नमित्यर्थः । तेजोवृत्तिः पार्थिवानि दारूणी-त्यादि। यद्वा भूतानां पिशाचानां भूतानि मनुष्यलोकस्थितानि शरीररुधिराणि। "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः। चराणां गतिमताम् अचराणि स्थावरतुल्यानि व्रीह्यादीनि वृत्तिः ईशेन हरिणा कृता कल्पिता। "अहस्तानि सहस्तानां सहस्तानि चतुष्पदाम्। अणूनि तात महतां जीवो जीवस्य जीवनम्" इत्युक्तम् (प्राक्) तत्रैवं स्थितिः। नृणां वृत्तिः कामादिच्छातः फलमूलादीनि, चोदनया विधिना तत्तत्क्रियानुसारेण विहिता चरुपुरोडोशादिलक्षणा ॥ ५७ ॥

युगे युगे विश्वस्यानु योग्या अच्युतावतारेहा हरेरवतारेण चेष्टा परिरक्षणं रक्षा । यदा यदा हि

**मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः ।**
**ऋषयोंऽशावताराश्च हरेः षड्विधमुच्यते ॥ ५९ ॥**

**राज्ञां मनुप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ।**
**वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ ६० ॥**

**नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः ।**
**संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः ॥ ६१ ॥**

**हेतुर्जीवस्य सर्गादेरविद्याकर्मकारकः ।**
**यं वाऽनुशायिनं प्राहुरव्याकृतमुतापरे ॥ ६२ ॥**

---

धर्मस्येति गीतायाम् । कुत्रेति तत्राह **तिर्यगिति** । यैरवतारैः त्रयीद्विषः वेदवैरिणोऽसुरा हन्यन्ते तेषां चरितवर्णनं रक्षणमित्यर्थः। स्थितिर्वैकुण्ठविजयः इति पोषणं तदनुग्रह इति च ॥ ५८ ॥

एतन्मन्वन्तरं षड्विधमुच्यते । षण्णां कथाकथनं मन्वन्तरमित्यर्थः । तत्रांशकानामिति शेषः (?) । मन्वन्तरेषु तद्धर्मा इति । मन्वन्तरादितद्धर्मकथनमित्यर्थः[१] ॥ ५९ ॥

मनुप्रसूतानां राज्ञामन्वयो वंश इत्युच्यते । कीदृशः। त्रैकालिको भूतभविष्यद्वर्तमानविषयः । एतत्कथनमत्रेति। वंशस्यानुचरितं नाम तेषां राज्ञां वृत्तिकथनम् । ये वंशधरा उत्सन्नं वंशं धृतवन्तस्तेषां वृत्तम् ॥ ६०-६१ ॥

यं च प्रलये परमात्मानमनुविश्य शायिनं स्वपन्तमाहुः, अपरे अव्याकृतम् अव्याकृताकाशवन्निर्विकारं प्राहुः, सः अविद्यया कर्मकारकः कर्मकर्ता अस्य जगतः सर्गादिनिमित्तभूतो जीवो हेतुरित्युच्यते ।जीवसमुदायः सुखदुःखप्राप्तये तं हेतुं कृत्वा जगतः सृष्ट्यादिकं प्रवर्तत इति । ''निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः'' इति ॥ ६२ ॥

---

१. मनुः स्वयं, देवाः,मनुपुत्राः,सुरेश्वरा इन्द्राः, प्रतिमन्वन्तरीयेन्द्रानपेक्ष्य बहुवचनम्, ऋषयः सप्त, हरेरंशावतारा इति मन्वन्तरं षड्विधमुच्यते । यत्रेन्द्रो हरिस्तत्र पञ्चविधं तदिति प्राक् प्रपञ्चितम् - इति सत्यधर्मतीर्थाः ।

व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु ।
मायामयासु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥ ६३ ॥

पदार्थेषु यथा द्रव्यं तन्मात्रं रूपनामसु ।
बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥ ६४ ॥

विरमेत यदा चित्तं हित्वा वृत्तित्रयाश्रयम् ।
योगेन वा तदाऽऽत्मानं वेद नात्मा निवर्तते ॥ ६५ ॥

---

अपाश्रयं लक्षयति **व्यतिरेकान्वयाविति** ।अपगतः आश्रयो यस्य स तथा अद्वितीय इत्यर्थ : । अद्वितीयत्वं कथमुच्यते । अन्वयव्यतिकाभ्यां ज्ञायत इति । यस्य हरेर्जीववृत्तिषु जीवानां जीवनोपायभूतासु जाग्रत्स्वप्नसुषुप्तिषु व्यतिरेकान्वयौ स्तः जाग्रदाद्यभावेपि विद्यत इति व्यतिरेकः तद्भावेप्यस्तीत्यन्वयः । मायामयासु श्रीहरीच्छारचितासु । तद् ब्रह्म व्यपाश्रय इत्युच्यते ॥ ६३ ॥

प्राकारान्तरेणाश्रयं[१] लक्षयति **पदार्थेष्विति** । रूपनामयुक्तेषु पदार्थेषु यद् द्रव्यमुपादानकारणभूतं प्रकृत्याख्यं तन्मात्रं पदार्थस्वरूपं तस्मिन् द्रव्ये बीजादिपञ्चतान्तासु जन्मादिमरणान्तासु अवस्थासु युतायुतं अन्वयव्यतिरेभ्यां यद् वर्तते तद् ब्रह्म व्यपाश्रयम् । यद्वा रूपनामप्रपञ्चपदार्थेषु युतायुतमन्वय-व्यतिरेकलक्षणानुमानेन यत् तन्मात्रं विज्ञानानन्दमात्रं द्रव्यं द्रुतं ज्ञेयं यद् बीजत्वाद्यवस्थासु वस्तुनः पञ्चत्वावसानलक्षणावस्थासु युतायुतं वर्तते तद् ब्रह्मेति[१] ॥ ६४ ॥

एतादृशब्रह्मप्राप्तिः कदा स्यादिति तत्राह **विरमेतेति** । वृत्तित्रयाश्रयं जाग्रत्स्वप्नसुषुप्ति-लक्षणवृत्तित्रयविरूढं चित्तं हित्वा वृत्तित्रयाद् विरमेत उपरतं भवति । तदा योगन ध्यानलक्षणयोपसनया निरन्तरं श्रीनारायणकथालक्षणोपासनया च आत्मानं परमात्मानं वेद जानाति लभते प्राप्नोति च । ततः किमत्राह **नेति** । पुनर्निवर्तते नैव ।नच पुरावर्तते नचपुनरावर्तत इति श्रुतेः ॥ ६५ ॥

---

१. व्यपाश्रयं प्रकारान्तरेण दर्शयति **पदार्थेष्विति** । रूपनामसु रूपनामात्मकेषु तद्वत्सु उपादेयेषु द्रव्यमुपादानं प्रकृत्यादिकं तन्मात्रं सदपि बीजदिपञ्चतान्तासु, बीजमुत्पत्तिरादिर्यासां पञ्चता मरणमन्ते च यासां ता इति विग्रहः, अवस्थासु यथा युतायुतं स्थूलरूपेण युतं सम्बध्दमयुतं च सूक्ष्मरूपेणेति चान्वयव्यतिरेकाभ्यां (सिध्यति) तथा तद् ब्रह्मेति इति सत्यधर्मतीर्थाः ।

एवंलक्षणलक्ष्याणि पुराणानि पुराविदः ।
मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ।। ६६ ।।

ब्राह्मं पाद्मं वैष्णवं च शैवं लिङ्गं च गारुडम् ।
नारदीयं भागवतमाग्नेयं स्कन्दसञ्ज्ञितम् ।। ६७ ।।

भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्यं कौर्म्यं च ब्रह्माण्डाख्यमिति त्रिषट् ।। ६८ ।।

ब्रह्मणैतत् समाख्यातं शाखाप्रणयनं मुने ।
शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविदीपनम् ।। ६९ ।।

।। इति षष्ठोऽध्यायः ।।

।। अथ सप्तमोऽध्यायः ।।

**शौनक उवाच -**

सूत जीव चिरं साधो वद नो वदतां वर ।
तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ।। १ ।।

---

उपसंहरन्नेव पुराणानां क्षिप्रप्रवृत्तये संख्यामाह **एवमिति** । क्षुल्लकानि श्लोकसंख्यया परिमितानि न त्वर्थतः । कानिचिदर्थतः शब्दतः फलतोऽपि महान्ति ।। ६६ ।। तानि क्रमेण निर्दिशति **ब्राह्ममित्यादिना** ।। ६७ ।। त्रिषट् अष्टादश ।। ६८ ।।

अत्र शिष्यप्रशिष्यैः शाखाप्रणयनं ब्रह्मणोऽनभिमतं कृतमिति मा शङ्कीत्याह **ब्रह्मणेति** । शिष्यादीनामेतत् शाखाप्रणयनं ब्रह्मणैव समाख्यातं कथितम् । कीदृशम् । ब्रह्मतेजोविदीपनं ब्रह्मतेजसःप्रकाशकम् । निरर्थकं प्रणयनं किमर्थं कृतमित्यो वाह **ब्रह्मेति** । ब्रह्मणः परमात्मनस्तेजसः प्रभावस्य विदीपनं प्रकाशनकरम् ।। ६९ ।।

**।। इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य षष्ठोऽध्यायः ।।**

अस्मिन्नध्याये मार्कण्डेयकथाव्याजेन हरेर्निरतिशयमाहात्म्यं ब्रूते । पुराणविभागप्रसङ्गेन

आहुश्चिरायुषमृषिं मृकण्डुतनयं जनाः ।
यः कल्पान्तेऽप्युर्वरितो येन ग्रस्तमिदं जगत् ।। २ ।।

स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः ।

नैवाधुनापि भूतानां सम्प्लवः कोऽपि जायते ।। ३ ।।

एक एवार्णवे भ्राम्यन् ददर्श पुरुषं किल ।
वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ।। ४ ।।

एष नः संशयो भूयान् जातः कौतूहलं यतः ।
तन्नश्छिन्धि महायोगिन् पुराणेष्वपि सम्मतः ।। ५ ।।

**सूत उवाच -**

प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः ।
नारायणकथा यत्र गीता कलिमलापहा ।। ६ ।।

---

पुराणकर्तुर्मार्कण्डेयस्य चरितं च । तत्र शौनकः सूतं पृच्छति सूतेति । वद, भगवत्कथाद्योतिनीं[1] कथामिति शेषः ।। १ ।।

येन कल्पान्तेन इदं जगद् ग्रस्तं तस्मिन् कल्पान्तेऽप्युर्वरितः अवशिष्टः ।। २ ।। अस्मत्कुल-सम्बन्धित्वात् तच्चरितमवश्यं श्रवणार्हमित्याशयवानाह **स वा इति** ।। सप्तभूतानां[2] मध्ये कोऽपि सम्प्लवो न जायते लुङ्त्वे लट् । पञ्चभूतानां कोऽपि सम्प्लवो नाश इति वा ।। ३ ।। तस्यामवस्थायां प्रलय इवार्णवे पुरुषं ददर्श किलेति वा ।। ४ ।। यतः संशयान्महाकौतूहलविषयोऽर्थः । मम संशयच्छेदनं कथमुपपद्यत इति तत्राह **पुराणेष्विति** । ज्ञातृत्वेन सम्मतो भवानिति ।। ५ ।।

मार्कण्डेयकथाया लोकाज्ञाननिवारणसामर्थ्यं कुत इत्यत्राह **नारायणेति** । यत्र मार्कण्डेय-कथायाम् । तत्कथाविषयः प्रश्नः ।। ६ ।।

---

१. भगवन्माहात्म्यद्योतिनीमिति पाठ आशास्यते ।

२. महदहंकारौ पञ्चभूतानि चेति सप्त ।

प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात्।
छन्दांस्यधीत्य धर्मेण तपः स्वाध्यायसंयुतः ॥ ७ ॥

बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः।
बिभ्रत् कमण्डलुं दण्डमुपवीतं समेखलम् ॥ ८ ॥

कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये।
अग्न्यर्कगुरुविप्रांश्च स्वर्चयन् सन्ध्ययोर्हरिम् ॥ ९ ॥

सायंप्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः।
बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥ १० ॥

एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम्।
आराधयन् हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥

ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे।
नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥

इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः।
दध्यावधोक्षजं योगाद् ध्वस्तक्लेशोऽन्तरात्मना ॥ १३ ॥

तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः।
व्यतीयाय महान् कालो मन्वन्तरषडात्मकः ॥ १४ ॥

एतत् पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन् किलान्तरे।
तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥

---

पितुः मृकण्डोः प्राप्तद्विजातिसंस्कारः अन्नप्राशनोपनयनान्तब्राह्मणसंस्कारान् प्राप्तः ॥ ७ ॥ बृहद्व्रतधरः ब्रह्मचारिव्रतधरः ॥ ८ ॥ हरिम्, स्मरन्निति शेषः ॥ ९ ॥ नोचेदनुज्ञाभावे ॥ १० ॥

तेन कर्मणा ॥ ११ ॥ मनोयोगादन्तरात्मनाऽन्तर्यामिणा ध्वस्तक्लेशः ॥ १२ ॥ अस्मिन् सप्तमे मन्वन्तरे। तपसो विशङ्कितस्तद्विघातनं तस्य तपसो विघ्नम् ॥ १३-१५ ॥

गन्धर्वाप्सरसः कामं वसन्तं मलयानिलम् ।
मुनये प्रेषयामास रजःस्तोभमदौ तथा ॥ १६ ॥

ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ।
पुष्यभद्रा[1] नदी यत्र चित्राख्या च शिला विभो ॥ १७ ॥

तत्राश्रमपदं पुण्यं पुण्यद्रुमलतान्वितम् ।
पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥

मत्तभ्रमरसंगीतं मत्तकोकिलकूजितम् ।
मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥ १९ ॥

वायुः प्रविष्ट आदाय हिमनिर्झरसीकरान् ।
सुमनोभिः परिष्वक्तो ववावुत्तम्भयन् स्मरम् ॥ २० ॥

उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकालिभिः ।
गायन् द्रुमलताजालैस्तत्रासीत् कुसुमाकरः ॥२१ ॥

अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथपैः ।
अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥ २२ ॥

हुत्वाऽग्निं समुपासीनं ददृशुः शक्रकिङ्कराः ।
मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम् ॥२३॥

---

रजोगुणं स्तोभमदौ व्यर्थकर्मदर्पौ च । अत्र कामादयो मूर्तिमन्तो निर्दिश्यन्ते ॥ १६ ॥ आटोपं सविलासनृत्यम् ॥ १७-१९ ॥ उत्तम्भयन् वर्धयन् ॥ २० ॥

उद्यन् चन्द्रो यस्य स तथा, स च निशावक्त्रः प्रदोषो यस्य स तथा । कुसुमाकरो वसन्तः प्रवालस्तबकालिभिः भृङ्गैर्गायन् द्रुमलतामुकुलैः सहाऽसीत् , आविरिति शेषः ॥ २१ ॥ आत्तचापेषुर्धनुर्ज्यासहितबाणः । स्वःस्त्रीयूथपतिः स्वर्गस्त्रीगणनाथः ॥ २२ ॥ अग्निं हुत्वोपासीनम् अग्निसमीपे तिष्ठन्तं । दुराधर्षं चलितेन्द्रियं कर्तुं अशक्यम् ॥ २३ ॥

---

१. पुष्यभद्रा पुष्पवटा इत्येकस्या एव नाम । अस्या एव शिलाचित्रेत्यपि नामेति सत्यधर्मतीर्थाः ।

ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ।
मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥

सन्दधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा ।
मधुर्मदो रजःस्तोभ इन्द्रभृत्या व्यकम्पयन्[1] ॥ २५ ॥

क्रीडन्त्याः पुञ्जकस्थल्याः कन्दुकैः स्तनगौरवात् ।
भृशमुद्विग्नमध्यायाः केशविभ्रंशितस्रजः ॥ २६ ॥

इतस्ततो भ्रमद् दृष्टेश्चलन्त्या अनुकन्दकम् ।
वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७ ॥

विससर्ज ततो बाणं मत्वा तं स्वजितं स्मरः ।
सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥

त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने ।
दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥ २९ ॥

इतीन्द्रानुचरैर्ब्रह्मन् धर्षितोऽपि महामुनिः ।
यन्नागादहमो भावं न तच्चित्रं महत्स्वपि ॥ ३० ॥

दृष्ट्वा निस्तेजसं कामं सगणं भगवान् स्वराट् ।
श्रुत्वाऽनुभावं ब्रह्मर्षेर्विस्मयं समगात् परम् ॥ ३१ ॥

---

पुञ्जकस्थल्या अप्सरसां प्रधानायाः कस्याश्चिदप्सरसः केशविभ्रंशितस्रजः केशभागाद् विभ्रंशिता विभ्रष्टा स्रक् यस्याः सा तथा तस्याः ॥ २४-२६ ॥ अनुकन्दुकमुत्पतत्कन्दुकानुकूलं यथा भवति तथा चलन्त्याः । सूक्ष्ममणुतरम् । त्रुटितमेखलं त्रुटिता छिन्ना मेखला काञ्ची यस्य तत् तथा तत् ॥ २७ ॥ स्वेन आत्मना जितम् ॥ २८ ॥ अर्भका अहिं प्रबोध्येव ॥ २९ ॥ अहमोऽहंकारस्य भावं नागात् । कपालमुक्तनारिकेलफलवद् देहाभिमानरहित इत्यर्थः ॥ ३० ॥

---

१. मध्वाद्याः स्तोभान्ता इन्द्रभृत्या तमृषिं विकम्पयितुं प्रायतन्तेत्यर्थः ।

तस्यैवं युञ्जतश्चित्तं तपःस्वाध्यायसंयमैः ।
अनुग्रहायाविरासीन्नरनारायणो हरिः ॥ ३२ ॥

तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ ।
पवित्रपाणी उपवीतकं त्रिवृत् कमण्डलुं दण्डमृजुं च वैणवम् ॥३३॥

पद्माक्षमालामुत जन्तुमार्जनं वेदं च साक्षात्तप एकरूपिणौ ।
तपत्तडिद्वर्णपिशङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥३४॥

ते वै भगवतो रूपे नरनारायणौ ऋषी ।
वीक्ष्योत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥ ३५ ॥

एतत्सन्दर्शनानन्दनियतात्मेन्द्रियाशयः ।
हृष्टरोमाऽश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥

उत्थाय प्राञ्जलिः प्रह्व औत्सुक्यादाश्लिषन्निव ।
नमो नम इतीशानौ बभाषे गद्गदाक्षरम् ॥ ३७ ॥

तयोरासनमादाय पादयोरवनिज्य च ।
अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥
सुखमासनमासीनौ प्रसादाभिमुखौ मुनिः ।
पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥

---

निस्तेजसं दुर्बलम् । स्वाराडिन्द्रः ॥ ३१ ॥ नरेण युक्तो नारायणः नरनारायणः ॥ ३२ ॥ रुरोर्विद्यमानं रौरवं वल्कलं चाम्बरं वा ययोस्तौ ॥ ३३ ॥ जन्तुमार्जनं पिञ्जरचितपुञ्जिं चामरविशेषमित्यर्थः । वेदं दर्भमुष्टिम् । तपती प्रकाशमाना तडित् तपत्तडित् तद्वद् वर्णेन पिशङ्गरोचिषा कपिलप्रभया तपएकरूपिणौ । प्रांशू अत्युच्छ्रितौ । दधानौ, जग्मतुरिति शेषः। उपवीतादिकं च दधानौ । रूपविशेषौ ॥ ३४ ॥

तौ नरनारायणौ ऋषी वीक्ष्य ननाम । नमने हेतुमाह **ते इति** । ते हरे रूपे वै यस्मात् तस्मात् ॥ ३५ ॥ तयोः सन्दर्शनादुत्पन्नेन आनन्देन नियतात्मेन्द्रियाशया यस्य स तथा ॥ ३६ ॥ गद्गदाक्षरं वचः ॥ ३७-३८ ॥ पादाभ्यां पादावुद्दिश्य । गरिष्ठौ गुरूणां ब्रह्मादीनामपि गुरू ॥ ३९ ॥

**मार्कण्डेय उवाच -**

**किं वर्णये तव विभो यदुदीरितासुः**
**संस्पन्दते तमनु वाङ् मन इन्द्रियाणि ।**
**स्पन्दन्ति वै तनुभृतामजशर्वयोश्च**
**स्वस्याप्यथापि भजतामनुभावबद्धः ॥ ४० ॥**

**मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः**
**क्षेमाय तापविरमाय च मृत्युजित्यै ।**
**नाना बिभर्ष्यनुपमान्यतनूर्यथेदं**
**सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥ ४१ ॥**

---

अपरिमितमहिम्नोर्युवयोः पुरतो यत्किञ्चिद् वर्णनं किं वर्णये न किमपि । माहात्म्यानामनन्तत्वात् तदेकदेशमपि वर्णयितुं न शक्तोऽस्मि । वागादीन्द्रियाणां त्वन्नियतत्वेन त्वत्प्रसादायत्तत्वादिति शेषः । एतत् कथमित्याशङ्क्य सर्वेन्द्रियनायकः प्राणोऽपि भगवन्नियत एव चेष्टते । किमुतान्यानीति भावेनाह **यदुदीरित इति** । येन त्वयोदीरितः प्रेरितः असुः प्राणः । तमनु प्राणमनु तनुभृतां मनइन्द्रियाणि यत्प्रेरितानि स्पन्दन्ति चेष्टन्ते । किञ्चाजशर्वयोरिन्द्रियाणि येन प्रेरितानि । अनेनाजशर्वयोः समत्वेन त्वदप्रेरितानि विषयेषु प्रवर्तन्ते , अतो व्यभिचीर्णो हेतुरिति निरस्तम् । अथापि त्वदिन्द्रियप्रवृत्तौ हेतोर्व्यभिचारस्तदवस्थ इति मन्दाशङ्कां परिहरति **स्वस्येति** । स्वस्येन्द्रियाण्यपि त्वत्प्रेरितानि । यद्यप्येवं स्वतन्त्रोऽसि स त्वमथापि भजतां पुंसां भावबद्धोऽसि । तस्मात् परतन्त्र इव प्रतीयसे, मादृशानामित्यर्थः ॥ ४० ॥

भावबद्धत्वं दर्शयति **मूर्ती इति** । हे भगवन् भक्तवत्सलस्य भवत इमे मूर्ती नरनारायणसञ्ज्ञे त्रिलोक्याः क्षेमाय रक्षायै शत्रुकृतसन्तापनाशाय मृत्युजित्यै संसाराख्यशत्रुजयाय च भवतः । किञ्च त्वं नाना अनुपमान्यतनुः नानाविधा अनुपमा असदृशीः अन्या अनयोरितराः तनूः मूर्तीः बिभर्षि, त्रिलोकीक्षेमादिकार्यायेति शेषः । किञ्च ऊर्णनाभिरिव इदं सर्वं यथापूर्वं सृष्ट्वा पुनर्यथापूर्वं ग्रससि । अनेन मायाविवृत्तबहुरूपग्रहणेन चित्रं स्यादिति शङ्का परिहृता । सत्यप्रपञ्चस्रष्टुरीश्वरस्य तन्नियमनार्थं तावद्रूपग्रहणोपपत्तेः । तत् सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । यद्वा अतनूरप्राकृतशरीरस्त्वं यथा सर्वमिदं सृष्ट्वा पुनर्ग्रससि तथा अनुपमानि नानाविधानि शरीराणि बिभर्षि ग्रससि अन्तर्गतान् करोषि । त्रिलोके क्षेमोदये भरणं क्षेमाद्यनन्तरमेकीकरणमिति विशेषः । भगवत इमे मूर्ती च तथेति ॥ ४१ ॥

तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं
यत्स्थं न कर्मगुणकालरजः स्पृशन्ति ।
यद् वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं
ध्यायन्ति वेदहृदया मुनयस्तदास्यै ॥ ४२ ॥

नान्यत् तवाङ्घ्र्युपनयादपवर्गमूर्ते
क्षेमं जनस्य परितोऽभय ईश विद्मः ।
ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः
कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥

---

एतमर्थं प्रमाणयति **तस्येति** । यत्स्थं यस्मिन् पादमूले स्थितं पुरुषं कर्मगुणकालरजः दुष्कर्म गुणाः सत्वादयः कालो जन्मादिहेतुः रजः आर्तवं शुक्लशोणिताख्यम् , एकवद्भावविवक्षयैकवचनम्, न स्पृशन्ति नोत्तपन्ति न दुःखमापादयन्ति । वेदस्य हृदयं येषां ते वेदहृदया वेदतात्पर्यज्ञा मुनयो ब्रह्मादयः स्थिरचरेशितुरवितुः पालकस्य तव अङ्घ्रिमूलं स्तुवन्ति । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति श्रुतिः[१] । निनमन्ति नितरां नमन्ति, नमो विष्णवे महते करोमीति । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनमिति । ध्यायन्ति, आत्मानमेवं लोकमुपास्त इति । यद् यस्मात् तस्मात् त्वदङ्घ्रिसेवायां तदेव मानं वेत्यर्थः । तस्य यदङ्घ्रिमूलं यत्स्थं कर्मादयो न स्पृशन्ति तत् तव पादमूलं भजामीत्येकवाक्यं वा ॥ ४२ ॥

किमर्थमेतदेव स्तुवन्ति , निर्दुःखसुखावाप्तये अन्यत् किं न स्यादिति तत्राह **नान्यदिति** । हे ईश अपवर्गमूर्ते पुरुषार्थस्वरूप यस्त्वं परितोऽभयः सर्वस्मादभयः जनस्य तवाङ्घ्र्युपनयादङ्घ्रिशरणप्राप्तेरन्यत् क्षेमं न विद्मः । परितोभिय इति वा पाठः । जनस्येति विशेषणम् । सर्वस्माद् भीर्भयं यस्य स तथा तस्य । ननु त्वदन्यः क्षेमकर्ता ब्रह्मास्ति, प्रजापते न त्वदेतान्यन्य इति श्रुतेः । अत्राह **ब्रह्मेति** । यतः परितोभयः अतो द्विपरार्धसम्बन्धि धिष्ण्यं यस्य स तथा स ब्रह्मा कालस्य ते तव सकाशाद् बिभेति । यन्मां निशम्य सदनादुरुकम्पमानम्, यो अस्कभयादुत्तरं सधःस्थं विचक्रमाणस्त्रेधोरुगाय इति श्रुतेः। भूतग्रामस्य विचित्राद्दृष्टत्वात् कस्यचिन्निर्भयत्वोपपत्तेर्ब्रह्मणस्तु लोकविडम्बनत्वेन तथाभावः किं न स्यादिति मन्दाशङ्कां कैमुत्यन्यायेन परिहरति **किमुतेति** । अत इत्युरत्रापि सम्बध्यते । ब्रह्माप्यलं

---

१. अस्य श्रुत्युदाहरणस्य सङ्गतिर्न ज्ञायते । लेखकादत्तं स्यात् ।

**तद् वै भजाम्यृतधियस्तव पादमूलं**
**हित्वैतदात्मच्छिदमात्मगुरोः परस्य।**
**देहाद्यपार्थमसदित्यनभिज्ञमात्रं**
**विन्देय चेत् तर्हि सर्वमनीषितार्थम्॥ ४४॥**

**सत्वं रजस्तम इतीश तवात्मबन्धो**
**मायामयाः स्थितिलयोद्भवहेतवोऽस्य।**
**लीलाधृता यदपि सत्वमयः प्रशान्त्यै**
**नान्ये नृणां व्यसनमोहभियश्च याभ्याम्॥ ४५॥**

---

बिभेति यतोऽतः तत्कृतभौतिकानां तेन ब्रह्मणा कृतानि भौतिकानि शरीराणि येषां ते तथा तेषां प्राणिनां भयमस्तीति किमुतेत्यन्वयः॥ ४३॥

सेवायामित्थम्भावमाह **तद् वा इति**। ऋतधिय एकप्रकारबुद्धेः, निश्चलबुद्धेरित्यर्थः, आत्मगुरोः जीवगुरोः परस्य परमात्मनस्तव पादमूलम् एतद् देहाद्यभिमानं हित्वा यदि भजामि तर्हि ते तव प्रसादात् सर्वं मनीषितार्थं विन्देयेत्यन्वयः। कीदृशम्। आत्मच्छिदम् आत्मनाशहेतुम् अत एवापार्थं पुरुषार्थलक्षणप्रयोजनशून्यम् असद् अभद्रम् अनभिज्ञमात्रम् केवलमज्ञाननिर्मितं केवलाविद्वत्कृतं वा। अनेन देहे अहम्भावो भवहेतुस्तदभावो मुक्तिहेतुरिति कथितं भवति॥ ४४॥

देहाहंभावस्य निमित्ते रजस्तमसी, तदभावस्य (निमित्तं) सत्वं त्वन्नियतमिति भावेनाह **सत्वमिति**। हे ईश आत्मबन्धो सत्वं रजस्तम इति गुणास्त्वया लीलाधृताः जगन्निर्माणक्रीडायै धृता अङ्गीकृताः। ननु जीववदनिष्टं किं कर्तुं शक्या येन धार्याः स्युरिति[1] तत्राह **स्थितीति**। अस्य जगतः स्थित्यादिहेतवः। किमात्मका इति तत्राह **मायामया इति**। इच्छात्मकाः। यदपि यद्यपि तथापि सत्वमयः सात्विकः प्रशान्त्यै मुक्तये भवति। अन्ये राजसतामसाः प्रशान्त्यै न स्युरित्यर्थः। यद्वा सत्वादन्ये रजस्तमसी शान्त्यै न स्याताम्। पुनः कस्मै भवत इति तत्राह **नृणामिति**। याभ्यां रजस्तमोभ्यां नृणां व्यसनादयः स्युः। च एवार्थे। त्रिविधानां नृणां मध्ये सत्वमय एव इति वा ॥ ४५॥

---

१. अस्पष्टमिदम्। ननु जीवे इव (जीववत्) अनिष्टं किं कर्तुं शक्ता येनाधार्याः स्युरिति पाठे सति कथञ्चिद् योजयितुं शक्यम्।

तस्मात् तवेह भगवन्नथ तावकानां
शुक्लां तनुं स्वदयितां कुशला भजन्ति ।
यत् सात्वताः पुरुषरूपमुशन्ति सत्वं
लोको यतोऽभयमुतात्मसुखं च नान्यत् ॥ ४६ ॥

तस्मै नमो भगवते पुरुषाय भूम्ने
विश्वाय विश्वगुरवे परदेवतायै ।
नारायणाय ऋषये च नरोत्तमाय
हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥

यं वै न वेद वितताक्षपथैर्भ्रमद्धीः
सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ।
त्वन्माययाऽवृतमतिः स उ एव साक्षा-
दद्यस्तवाखिलगुरोरुपपद्य वेदम् ॥ ४८ ॥

---

उहसंहरन्नेव सत्वं स्तौति **तस्मादिति**। यस्मात् सत्वमेव निःश्रेयसहेतुस्तस्माद् इह कुशलाः अथ कल्याणानां तावकानामुपासायोग्यां स्वतो दयितां शुक्लां तव तनुं भजन्ति । तावकानामिति किं विशिष्योच्यत इति तत्राह **यदिति**। सात्वताः साधुगुणयुक्ताः पुरुषाः सत्वं सत्वगुणप्रवर्तकं पुरुष इति रूपं शब्दो यस्य तत् तथा, पुरुषशब्दवाच्यमित्यर्थः, उशन्ति कामयन्त इति यद् यस्मात् तस्मात् विशेषवचनम्। यतः परुषरूपात् लोकोऽभयं विन्दति आत्मसुखमुत अपि लभते तस्मादन्यदभयादिदं न। यद्वा यतः सत्वात् लोको रक्षितो भवति अभयमुत आत्मसुखमप्याप्नोति, अन्यद् रजस्तम इति यद् द्वयं (तत्) स्वरूपसुखादिहेतुर्न भवति ॥ ४६ ॥

निरन्तरध्यानासमर्थस्योपास्तिप्रकारमाह **तस्मा इति** । विश्वाय विश्वनाम्ने । अस्य सर्वनामसंज्ञा नास्ति अर्थान्तरत्वात्। तत्प्रेक्षणशीलत्वेन (?) संयतगिरे मितभाषणाय ॥ ४७ ॥

भवत्साक्षात्कारो भवत्प्रसादायत्तो न स्वप्रयत्नसाध्य इत्याह **यमिति**। हे वितत यः पुरुषः अक्षपथैः शब्दादिभिः भ्रमद्धीः यं त्वां न वेद । कीदृशम् । स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि दृक्पथेषु दृग्विषयेषु वसन्तं निर्दोषत्वेन वर्तमानम्। ज्ञापकाभावान्न जानन्तीति नेत्याह **तवेति**। अखिलगुरोस्तव

यद्दर्शनं निगम आत्मरहःप्रकाशं
मुह्यन्ति यत्र कवयोऽजपरा यतन्तः ।
तं सर्ववादविषयप्रतिरूपशीलं
वन्दामहे पुरुषमात्मनि गूढबोधम् ॥ ४९ ॥

॥ इति सप्तमोऽध्यायः ॥

॥ अथ अष्टमोऽध्यायः ॥

सूत उवाच -

संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता ।
नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥

श्रीभगवानुवाच -

भो भो ब्रह्मर्षिवर्योऽसि सिद्ध आत्मसमाधिना ।
मयि भक्त्याऽनपायिन्या तपःस्वाध्यायसंयमैः॥ २ ॥

---

वेदं ज्ञापकप्रमाणुपपद्यापि सः साक्षादद्यः अदनयोग्यः विषयभोगशीलः तस्य तव मायया बन्धकशक्त्या आवृतमतिः आच्छादितज्ञानः । तस्माद् त्वत्प्रसादेन त्वज्ज्ञानं सुलभमित्यर्थः ॥ ४८ ॥

त्वज्ज्ञानस्य किं माहात्म्यं येन त्वदनुग्रहेण सर्वथा आपाद्यं स्यादिति तत्राह **यद्दर्शनमिति** ।यस्य तव दर्शनं ज्ञाननिगमे तत्वनिर्णायके वेदे प्रतिपादितम् आत्मरहः प्रकाशो यस्मात् तत् तथा तत् अजपराः विष्णुपरायणा यतन्तः कृतोपास्तिप्रयत्नाः कवयो यत्र परमात्मरहस्ये मुह्यन्ति इदमित्थमिति ज्ञातुमुपदेष्टुं वा न शक्नुवन्ति, तं भगवन्तं वन्दामह इत्यन्वयः ।सर्ववादानां सर्वसिध्दान्तानां विषयाणां प्रतिपाद्यानामर्थानां प्रतिरूपशीलं विरुध्दस्वभावम् , तदुक्तान्यथास्थितस्वभावमित्यर्थः आत्मनि जीवविषये गूढबोधम्, जीवेनाज्ञातस्वरूपमित्यर्थः । आत्मना स्वेनेति वा ॥ ४९ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य सप्तमोऽध्यायः॥**

आत्मनो हरेः समाधिना उपासनाजन्यज्ञानेन सिद्धः कृतकृत्यः ॥ १ ॥

वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ।
वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥

ऋषिरुवाच -

जितं ते देवदेवेश प्रपन्नार्तिहराच्युत ।
वरेणैतावताऽलं नो यद् भवान् समदृश्यत ॥ ४ ॥

वाञ्छन्त्यजादयो यस्य श्रीमत्पादाब्जदर्शनम् ।
मनसा योगपक्वेन स भवान् मेऽक्षगोचरः ॥ ५ ॥

अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे ।
ईक्षे मायां यया लोकः सपालो वेद सद्भिदाम् ॥ ६ ॥

सूत उवाच -

इतीरितोऽर्चितः काममृषिणा भगवान् मुने ।
तथेति सस्मयं प्रागाद् बदर्याश्रममीश्वरः ॥ ७ ॥

तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः ।
वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥

---

प्रतीच्छ स्वीकुरु ॥ २-३ ॥ भवन्माहात्म्यप्रकटनं वरं वरयिष्यन्नपि भगवद्दर्शनादितरो वरोऽनभीष्टो मुमुक्षोरिति हृदि कृत्वा प्रतिवक्ति **जितमिति** ॥ ४ ॥

यदाकांक्षापूरकं प्रायस्तदेव साध्यम्, अस्य तदभावात् पथि तृणमिवेदमपि वन्ध्यमिति तत्राह **वाञ्छन्तीति**। भक्तियोगपक्वेन भक्त्युपासनाभ्यां परिपाकं प्राप्तेन, चाक्षगोचरोऽभूदिति शेषः॥५॥

ननूक्तं सत्यं तथापि भगवत्समाधेरेतदेव फलं नान्यदस्तीति भाति किमत्राह **अथापीति** । मायामघटमानघटकशक्तिलक्षणाम्। लोकोपकारकयथार्थज्ञानजनकत्वेनेन्द्रजाललक्षणा नेति भावेनाह **ययेति**। सतः परब्रह्मणः सर्वस्माद् भिदां वैलक्षण्यं वेद तादृशीं द्रष्टुमिच्छामि, नेन्द्रजाललक्षणामित्यर्थः ॥ ६ ॥

सस्मयं सस्मितम्। तथा द्रक्ष्यसीत्युक्त्वा ॥ ७ ॥ आत्मनि स्वस्मिन् ॥ ८ ॥

ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत् ।
क्वचित् पूजां विसस्मार भक्तिप्रसरसम्प्लुतः ॥ ९ ॥

तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुने ।
उपासीनस्य सन्ध्यायां ब्रह्मन् वायुरभून्महान् ॥ १० ॥

तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन् करालाः ।
अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥ ११ ॥

ततो व्यदृश्यन्त चतुःसमुद्राः समन्ततः क्ष्मातलमाग्रसन्तः ।
समीरवेगोर्मिभिरुग्रनक्रभयानकावर्तगभीरघोषाः ॥ १२ ॥

अन्तर्बहिश्चाद्भिरभिद्युभिर्घनैः शतह्रदाभीरुपतापितं जगत् ।
चतुर्विधं वीक्ष्य महामना मुनिर्जलप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥

तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः ।
आपूर्यमाणः प्रवर्षद्भिरम्बुदैः क्ष्मामप्यधाद् द्वीपवर्षादिभिः समम् ॥ १४ ॥

---

किं बहुना । सर्वत्र च व्याप्तं भावद्रव्यैः मनःकल्प्यपुष्पादिद्रव्यैः, अहिंसाद्यैरित्यर्थः । क्वचित् कदाचित् । विस्मरणे कारणं भक्तिप्रसरसम्प्लुत इति ॥ ९ ॥वरदानफलं वक्तुमुपक्रमते तस्येति । तस्याश्रमे महान् वायुरभूत् ॥१०॥

तं वायुमनु अनन्तरं ते बलाहकाः अभि अभितः , अक्षस्थविष्ठा अक्षो रथाङ्गनीपो दण्डः तद्वत् स्थूलतया वर्षधारा मुमुचुः, तडिद्भिः सह ॥ ११ ॥

समीरवेगेनोन्नमितोर्मिभिः सह उग्रनक्रैर्भयानकस्य भयङ्करस्य आवर्तस्य गभीरा गम्भीरा घोषा येषां ते तथा ॥ १२ ॥

घनैर्मेघैरभिवृष्टाभिरुपतापितमाप्लावितम् अभितो द्युतिमतीभिः शतह्रदाभिस्तडिद्भिश्चोपतापितं दग्धवत् कृतम् । क्ष्मामब्धिजलप्लुतां वीक्ष्य ॥ १३ ॥

अप्यधात् छादितवान् । तस्य मुनेरुद्वीक्षतः ॥ १४ ॥ सदिवं स्वर्गेण सहितम् । सभागणं सनक्षत्रगणं । जडवदन्धवत् ॥ १५ ॥ वीचिनभस्वता तरङ्गवायुना भ्रमन्त्यो दिशा यस्य स तथा ।

सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत् सहसाऽद्भिराप्लुतम् ।
स एक एवोर्जरितो महामुनिर्बभ्राम विक्षिप्तजटो जडान्धवत् ॥ १५ ॥

क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वता हृतः ।
तमस्यपारे पतितो भ्रमद्दिशो न वेद खं गां च परिश्रमोषितः ॥ १६ ॥

क्वचिन्मग्नो महावर्ते तरलैस्ताडितः क्वचित् ।
यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥

क्वचिच्छोकं क्वचिन्मोहं क्वचिद् दुःखं सुखं भयम् ।
क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुपद्रुतः ॥ १८ ॥

अयुतायुतवर्षाणां सहस्राणि शतानि च ।
व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायावृतात्मनः ॥ १९ ॥

स कदाचिद् भ्रमंतस्मिन् पृथिव्याः ककुदि द्विजः ।
न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥

प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् ।
शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥ २१ ॥

महामरकतश्यामं श्रीमद्वदनपङ्कजम् ।
कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥

श्वासैजदलकव्रातमिश्रश्रीकर्णदाडिमम् ।
विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥

---

वष्टि भागुरिरल्लोपमिति वचनात् टाबन्तो दिशाशब्दः। परिश्रमोषितः दुःखसमुद्रवासी ॥ १६ ॥

तरलैस्तरङ्गैः ॥ १७ ॥ ककुदि उन्नततस्थले ॥ १८-२० ॥ तस्य वटस्य ॥ २१ ॥

श्वासेन मुखवायुना एजतां कम्पमानानामलकानां व्रातेन मिश्रया श्रिया युक्तं कर्णदाडिमं कर्णाभरणं यस्य स तथा तम् ।ईषच्छोणाश्लिष्टा[१] ॥ २२-२३ ॥

---

१. विद्रुमवत् प्रवालवद् विद्यमानो योऽधरस्तस्य भासा कान्त्या ईषच्छोणायितं किञ्चिद्रक्तिमोपेतं सुधावद् धवलं स्मितं मन्दहासो यस्य तमिति सत्यधर्मतीर्थाः ।

पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् ।
श्वासैजद्वलिसंविग्ननिम्ननाभिचलोदरम् ॥२४ ॥

चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् ।
मुखे निधाय विप्रेन्द्र धयन्तं वीक्ष्य विस्मितः ॥ २५ ॥

तद्दर्शनाद् वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ।
प्रहृष्टरोमाऽद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥

तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तःशरीरं मशको यथाऽविशत् ।
तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥

खं रोदसी भगणानद्रिसारान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ।

वनानि देशान् सरितः पुराकरान् खेटान् व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥

महान्ति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ।
यत् किञ्चिदन्यद्व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥

---

पद्मगर्भवद् अरुणावपाङ्गौ नेत्रान्तौ यस्य तम् । श्वासैरेजन्त्यः चलन्त्यो वलयः तिर्यग्रेखाः ताभिः संविग्नगम्भीरा नाभिर्यस्य स तथा । चलमुदरं यस्य स तथा ।श्वासैजद्वलिसंविग्ननिम्ननाभिश्च चलोदरश्च स तथा तम् । दलोदरमिति वा पाठः ।दलवदश्वत्थदलवद् उदरं यस्येति ॥ २४ ॥ धयन्तं पिबन्तम् ॥ २५ ॥

अद्भुतभावेन आश्चर्यलीलाचेष्टया शङ्कितः सन्नपि पुरः प्रससार समीपं गतः ॥ २६ ॥ स भार्गवो मार्कण्डेयः तावत् ततः पूर्वमेव श्वसितेन अन्तर्गच्छता सह शिशोरन्तःशरीरं मशको यथा तथाऽविशदिन्वयः । तत्रोदरान्ते विन्यस्तमदो विश्वं कृत्स्नशोऽचष्ट दृष्टवान् । दृष्ट्वा च पुरा यथा बहिर्विस्मितोऽमुह्यत् तथाऽमुह्यदित्यन्वयः । अत्र मोहो नामाश्चर्यबुद्धिरेव नत्वन्यथाज्ञानं तथात्वे प्राचीनाचीर्णपुण्यराशेर्वैयर्थ्यपत्तेरिति ॥ २७ ॥

विश्वं विशिनष्टि **खं रोदसी इत्यादिना** । आश्रमवर्णवृत्तयो यास्ताश्च ॥ २८ ॥

महान्ति भूतानि पञ्चभूतानि नानायुगकल्पनं येन स तथा तं कालं च । अन्यद् यत् किञ्चिद्

हिमालयं पुष्पवहां च तां नदीं निजाश्रमं यत्र ऋषीनपश्यत् ।
विश्वं विपश्यन् श्वसतः शिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥

तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पत्रपुटे शयानम् ।
तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥

अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्टितं हृदि ।
अभ्यगादतिसंहृष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥

तावत् स भगवान् साक्षाद् योगाधीशो गुहाशयः ।
अन्तर्दधे ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥

तमन्वथ वटो ब्रह्मन् सलिलं लोकसम्प्लवम् ।
तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत् स्थितः ॥ ३४ ॥

॥ इति अष्टमोऽध्यायः ॥

---

व्यवहारकारणं हानोपादानादिसमर्थं तथाऽद्राक्षीत् । सदिवा सत्वेन यथार्थत्वेनैवावभासितं प्रकाशितं न मिथ्याभूतत्वेन ॥ २९ ॥

पुनः किमभूदत्राह **विश्वमिति** । बहिः श्वसतः शिशोः श्वासेन बहिर्निरस्तो नुन्नः प्रलयाब्धौ न्यपतत् ॥ ३० ॥ वटं च तोकं च वीक्ष्य तस्य शिशोः प्रेमसुधायाः प्रेमामृतादुद्भूतस्मित-सहितेनापाङ्गनिरीक्षणेन निरीक्षितोऽभूदित्यन्वयः ॥ ३१ ॥

अथ तं बालकं परिष्वक्तुमभ्यगात् ॥ ३२ ॥ अनीशेनासमर्थेन निर्मिता ईहा मायालक्षणा चेष्टा यथा क्षिप्रमन्तर्दधाति तथेदम् । अन्तर्धानशैघ्र्ये निदर्शनमिदं न तु मिथ्यात्वे ॥ ३३ ॥ अन्तर्हितं भगवन्तमनु लोकस्य सम्प्लवो यस्मात् तत् तथा । तिरोधायि तिरोहितमभूत् ॥ ३४ ॥

॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य अष्टमोऽध्यायः ॥

## ।। अथ नवमोऽध्यायः ।।

**सूत उवाच -**

**स एवमनुभूयेदं नारायणविनिर्मितम् ।**
**वैभवं योगमायायास्तमेव शरणं ययौ ।। १ ।।**

**ऋषिरुवाच -**

**प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे ।**
**यन्मायया्ऽपि विबुधा मुह्यन्त्यज्ञानकातराः ।। २ ।।**

**सूत उवाच -**

**तमित्थं निभृतात्मानं वृषेण दिवि पर्यटन् ।**
**रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ।। ३ ।।**

**अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ।**
**पश्येमं भगवन् विप्रं निभृतात्मेन्द्रियाशयम् ।। ४ ।।**

**निभृतो नन्वृषिव्रातस्तपापाये यथाऽर्णवः ।**
**कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ।। ५ ।।**

---

मार्कण्डेयः पुनः किमकार्षीद् यत्कथा शृण्वतां हरौ भक्तिसमुद्रेककरीति हार्दं शौनकादीनां चोद्यं परिहरति **स एवमिति** । यः पूर्ववत् स्वाश्रमे स्थितः सः । योगमायाया अणिमादिविभूतेः वैभवं व्याप्तिम् , स्वरूपशक्तेः प्रभावं वा ।। १ ।।

यस्य हरेर्मायया मोहनशक्त्या । विबुधा अज्ञानकातरा इति पदद्वयेनान्योन्यविरुद्धेन मायाशब्दो व्याख्यात इति ज्ञातव्यम् ।। २ ।।

निभृतात्मानं पूर्णमनसम् । हरावेव नितरां भृतमनसं वा । दिवि व्योम्नि ।। ३ ।। निभृतो ननु पूर्ण एव । तपापाये वर्षाकाले । ऋषीणां व्रातो व्रतसमूहो यस्य स तथा । पूर्वविशेषणार्थे हेतुरयम् । अस्य मुनेः ।। ४-५ ।।

श्रीभगवान् उवाच -

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ।। ६ ।।

अथापि संवदिष्यामो भवान्येतेन साधुना ।
अयं हि परमो लाभो नृणां साधुसमागमः ।। ७ ।।

इत्युक्त्वा समुपेयाय भगवान् स सतां गतिः ।
ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ।। ८ ।।

तयोरागमनं साक्षादीशयोर्जगदात्मनोः ।
न वेद रुध्दधीवृत्तिरात्मानं विश्वमेव च ।। ९ ।।

भगवांस्तदभिज्ञाय गिरिशो योगमायया ।
आविशत् तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ।। १० ।।

---

रुद्रः प्रतिवक्ति **नैवेति** । मोक्षमपि नेच्छति किमुतान्या आशिषः । तत्र हेतुमाह **भक्तिमिति** ।। ६ ।।

यद्यप्येवं तथापि भवत्या वचनगौरवाद् यतिष्याम इत्याशयेनाह **अथापीति** । हे भवानि एतेन साधुना । मुनिना सह संकथनेन किं प्रयोजनम् अत्राह **अयं हीति** । साधूनां समागमः संगतिः ।। ७ ।।

समुपेयाय सम्प्राप ।अयं साधारणो भगवान् न किन्तु वेदसिध्द एवेत्यशयेनाह **ईशान इति** । श्रोत्रादीन्द्रियवतां जीवानां शिवाधीनत्वेन तत्तदिन्द्रियसाध्यस्य ज्ञानस्यापि तत्प्रसादायत्तत्वं युक्तम् ।। ८ ।।

तदा मुनिना किमकारीति तत्राह **तयोरिति** । अहंकाररूपेण जगदात्मनोरिति । अज्ञाने किं कारणमत्राह **रुद्धधीवृत्तिरिति** । धीपूर्वकत्वादिन्द्रियवृत्तेस्तद्रोधे सर्वेन्द्रियरोधो युक्त इति रुद्धधीवृत्तिरित्युक्तम् । आत्मानं स्वं विश्वं पुरोवर्ति सर्वम् ।। ९ ।।

योगमायया अणिमादियोगसामर्थ्येन । छिद्रं रोमकूपादिसुषिरम् ।। १० ।।

आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम् ।
त्र्यक्षमष्टभुजं शम्भुमुद्यन्तमिव भास्करम् ॥ ११ ॥

व्याघ्रचर्माम्बरं शूलधनुरिष्वसिचर्मभिः ।
अक्षमालां डमरुकं कपालं परशुं सह ॥ १२ ॥

बिभ्राणं सहसा भान्तं व्यचष्ट हृदि विस्मितः ।
किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ १३ ॥

नेत्रे उन्मील्य ददृशे सगणं सोमयागतम् ।
रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥ १४ ॥

तस्मै सपर्यां व्यदधात् सगणाय सहोमया ।
स्वागतासनपाद्यार्घ्यगन्धस्रग्धूपदीपकैः ॥ १५ ॥

आह चात्मानुभावेन पूर्णकामस्य ते विभो ।
करवाम किमीशान येनेदं निर्वृतं जगत् ॥ १६ ॥

नमः शिवाय शान्ताय सत्वाय प्रमृडाय च ।
रजोजुषेप्यघोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥

**सूत उवाच -**

एवं स्तुतः स भगवान् महादेवः सतां पतिः ।
परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥ १८ ॥

---

न केवलं बहिरेव, आत्मनि स्वस्मिन्नपि ॥ ११ ॥

इषुयुक्तं धनुश्च , असिश्च चर्म च तानि तैर्युक्तम् । करे डमरुकं अणुतरतन्तुपर्वाढ्यं चर्मपिनद्धमुखं दारुवाद्यम् ॥ १२ ॥ व्यचष्ट अपश्यत् ॥ १३ ॥

सह उमया । सोषामविन्ददित्यादेः ॥ १४-१५ ॥ पूर्णकामत्वं व्यनक्ति येन त्वया जगत् निर्वृतं भवतीति ॥ १६ ॥ सत्वाय पराक्रमयुक्ताय । सद् ब्रह्म शरणं वाति गच्छतीति सत्वस्तस्मै वा । प्रमृडाय प्रकृष्टपालाय । तत्तद्वस्तुयोग्यतानुसारेण रक्षाद्यर्थं सत्वादिगुणप्रवर्तकत्वात् सत्वाय रजोजुष इत्याद्युक्तम् ॥ १७-१८ ॥

**श्रीमहादेव उवाच -**

**वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ।**
**अमोघं दर्शनं येषां मर्त्यो यद् विन्दतेऽमृतम् ।। १९ ।।**

**ब्राह्मणाः साधवः शान्ता निस्सङ्गा भूतवत्सलाः ।**
**एकान्तभक्ता अस्मासु निर्वैराः समदर्शनाः ।। २० ।।**

**सलोका लोकपालास्तान् [१]वदन्त्यर्चन्त्युपासते ।**
**अहं च न पृथग् ब्रह्मा स्वयं च हरिरीश्वरः ।। २१ ।।**

**न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ।**
**नात्मनश्च जनस्यापि तद् युष्मान् वयमीमहि ।। २२ ।।**

---

त्रयो ब्रह्मादयः । येषां त्रयाणां दर्शनममोघम् । तत्र हेतुमाह **मर्त्य इति** । मर्त्योऽमृतं मुक्तिं विन्दते यद् यस्माद् दर्शनात् । यद् येभ्योऽमृतमिति वा ।। १९ ।।

ब्राह्मणभक्तिं दर्शयति **ब्राह्मणा इति** । ब्राह्मणा ब्रह्मवादैकनिष्ठाः । साधवो रागादिदोषविधुराः । शान्ता भगवन्निष्ठापारंगताः । अत एव निस्सङ्गा दुष्टसङ्गरहिताः, अत एव भूतेषु सज्जनेषु वत्सलाः स्निग्धाः, एकान्तेन विष्णुरेव सर्वोत्तमो नान्य इति निर्णयेन अस्मासु भक्ताः, योग्यतातिरेकेण वैरशून्याः, समं ब्रह्म तद्दर्शनं येषां ते तथा ।। २० ।।

य एवंविधास्तान् वदन्ति स्तुवन्तीत्यादि ।सपर्यां कुर्वत इत्यर्थः ।अहं ब्रह्मा च हरेः पृथक् स्वतन्त्रौ न , तदधीनावेव ।तत्र हेतुरीश्वर इति । ई लक्ष्मीः शंरूपः शतानन्दस्तयोर्वरः, ईशादीशानाच्च वर इति यस्मात् तस्माद् द्वयोर्वर इत्युक्तम्[२] । यूयं के इत्यतो वाह **अहमिति** । स्वयमित्यनेन हरेरेव स्वातन्त्र्यं नावयोः,आवां तदधीनाविति स्पष्टमुक्तम् ।अत्राप्ययमेव हेतुरीश्वर इति । ईश ऐश्वर्य इति धातोरनुपहतैश्वर्यमूर्तित्वादीश्वर इत्युच्यते ।। २१ ।।

इतोपि ब्राह्मणा एव पूज्या यत एवंविधं तत्वं त एव जानन्तीत्याह **न त इति** । ते ब्राह्मणा मयि

---

१. वन्दन्तीति सत्यधर्मपाठः ।

२. ईषदस्पष्टमिदम् । ईशशब्देन प्रागुक्तयोगेन लक्ष्मीब्रह्माणौ , रूढ्या रुद्रं चागृह्य तद्वरत्वं विष्णोरुच्यत इत्यभिप्रायः स्यात् ।

**न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।**
**ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः ॥ २३ ॥**

**ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ।**
**बिभ्रत्यात्मसमाधानं तपःस्वाध्यायसंयमैः ॥ २४ ॥**

**श्रवणाद् दर्शनाद् वाऽपि महापातकिनोऽपि वः ।**
**शुद्ध्येरन्नन्त्यजाश्चापि किमु सम्भाषणादिभिः ॥ २५ ॥**

---

स्थितत्वात् मयीत्युच्यमाने हरौ अजे च स्थितत्वादजशब्दवाच्ये च पृथक् स्थिते अच्यते च भिदामण्वपि परमाणुमात्रमपि न चक्षते न पश्यन्ति । किञ्च जनस्य जननवतः स्थावरजङ्गमरूपस्य प्रपञ्चस्य आत्मनोऽन्तर्यामिणश्च भिदां न पश्यन्ति । अपिशब्देन एको देव इति श्रुतिं प्रमाणयति । तत् तस्माद् वयं युष्मान् अखिलैः पूज्यान् ईमहि बुध्यामहे । यद्वा मयि भिदामन्यथाज्ञानं विष्णुरयमिति किञ्चित्साम्येनापि न पश्यन्ति । अपि तु ततो विलक्षणत्वेन तत्कटाक्षाहितशक्तित्वेन जगत्संहर्तृत्वेन ततोऽनन्तांशहीनत्वेनैव मत्तत्वं पश्यन्ति । चतुर्मखे (च) यथास्थितं पश्यन्ति । अच्युते च तथा यथा श्रुतिविहितम् । आत्मनश्चेतनसमुदायस्य जन्यत इति जनो देहस्तदादिजडस्यापि तत्त्वं यथा (तथा) पश्यन्ति । अन्यथा न पश्यन्ति ( इति )[१] ॥ २२ ॥

सर्वस्माच्छुद्धिहेतुत्वाच्च ब्राह्मणा एव पूज्या इत्याह **नहीति** ॥ २३ ॥ अस्माभिश्च सम्भाष्यत्वाद् विप्रा एव श्रेयांस इत्याह **ब्राह्मणेभ्य इति** । त्रयीमयं वेदमुख्यप्रतिपाद्यम् । आत्मनि सम्यगाधानमवस्थानं सन्निधानलक्षणं यस्य तत् तथा । तप आलोचनं स्वाध्यायोऽध्ययनं संयमो वागादिनियमः, तैः बिभ्रति । आचारहीनं न पुनन्ति वेदा इत्यतस्तप इत्यादि ॥ २४ ॥

न केवलं दर्शनाच्छुद्धिरपि तु श्रवणादपीति समुचितत्वादाह **श्रवणादिति** । तर्ह्यधिकशुद्धिः कस्मादिति तत्राह **किम्विति** । आदिपदेन नामस्मरणं गृह्यते ॥ २५ ॥

---

१. यद्वेत्यस्य अध्याहृतेनेतीत्यनेनान्वयः ।

सूत उवाच -

इति चन्द्रललामस्य धर्मगुह्योपबृंहितम्।
वचोऽमृतायनमृषिर्नातृप्यत् कर्णयोः पिबन्॥ २६॥

स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम्।
शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत्॥ २७॥

ऋषिरुवाच -

अहो ईश्वरचर्येयं दुर्विभाव्या शरीरिणाम्।
यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः॥ २८॥

धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम्।
आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च॥ २९॥

नैतावता भगवतः स्वमायामयवृत्तिभिः।
प्रदुष्येतानुभावस्ते मायिनः कुहकैर्यथा॥ ३०॥

---

चन्द्रललामस्य चन्द्रशेखरस्य। धर्मगुह्योपबृंहितं धर्मरहस्यगूढम् अमृतायनममृतवद् वर्तमानं कर्णयोर्हितम्॥ २६॥ भ्रामितः समाधेः सञ्चालितः अत एव कर्शितः। अनेन संयमिनां समाधेरन्यत् सुखं नास्तीति ज्ञापितम्॥ २७॥

इयं वाग्लक्षणा चेष्टा। ईशितव्यानि भवद्भिर्नियम्यानि ब्रह्मकुलानि स्तुवन्ति यद् यस्मात् तस्मात्॥ २८॥

मुनिः स्वयमेव स्तवनादेरभिप्रायं वक्ति **धर्ममिति**। न केवलं देहिनां धर्मस्य प्रवक्तारः, आचरन्ति च। आचरतोऽनुमोदन्ते। क्रियमाणं धर्मं स्तुवन्ति च॥ २९॥

ननु विध्यादिवर्जितानां भवतां धर्माचरणादिना तेजःक्षतिः स्यादित्यत्राह **नेति**। वृत्तिस्तु ग्रन्थसन्दर्भे इति वचनात् स्वमायामयवृत्तिभिः स्वेच्छया कृता वृत्तिर्येषां ते तथा, तैः स्तवनादिभिर्विवृतैर्नैतावता

**सृष्ट्वेदं मनसा विश्वं स्वात्मनाऽनुप्रविश्य यः ।**
**गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग् यथा ॥ ३१ ॥**

**तस्मै नमो भगवते त्रिगुणाय गुणात्मने ।**
**केवलायाद्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३२ ॥**

---

कर्मणा भगवतोऽनुभावः प्रभावः न प्रदुष्येत प्रदुष्टो न भवति । कुहकैरिन्द्रजालैर्मायिनोनुभावो निश्चयो यथातथेति[1] ॥ ३० ॥

प्रकारन्तरेण दोषाभावं वक्ति **सृष्ट्वेति** । यो भगवान् मनसा स्वेच्छया इदं विश्वं सृष्ट्वा अन्तर्यामिरूपेणान्तःप्रविश्य दर्शनादिकुर्वद्भिर्गुणैरिन्द्रियैः अहं कर्तेति निरूप्य जीव इवाभातीत्येतावता जीववद् दुष्टो न भवति । कथमिव । स्वप्नदृग् भगवदिच्छयोद्बोधितमानसवासनया करितुरगादिपदार्थान् सृष्ट्वा यथा तद्वदेव लिप्तो न भवति[2] ॥ ३१ ॥

तस्मै भगवते नम इत्यन्वयः[3] । त्रयः सत्वादयो गुणा यस्य स तथा तस्मै । गुणित्वं दोषित्वेन व्याप्तं दृष्टमत्राह **केवलायेति** । निर्दोषाय । निर्दोषत्वं मुक्तस्याप्यस्तीति तत्राह **अद्वितीयायेति** । मुक्तनिर्दोषत्वं हरिप्रसादायत्तं, न हरेस्तथा, तस्य समाधिकशून्यत्वात् । कथमयमर्थः सम्पद्यत इति

---

१. एतवता स्वमाया स्वच्छैव मया प्रधानीभूता यासां ताश्च ता वृत्तयश्च धर्माद्याचाराः, ताभिस्तेऽनुभावो न प्रदुष्येत न दोषवान् स्यात् । तेजीयसां नैव दोष इत्यादेरधर्माचरणं यदा न दोषावहं तदा धर्माचरणं न दोषावहमिति किं वक्तव्यमिति भावः । अमायिनोऽकपटिनः कुहकैर्विनोदार्थं कृतैर्वेषादिभिरनुभावः स्वाभाविको यथा न प्रदुष्यति तथेति । यद्वा मायिनस्तस्यैव स्वकल्पितैः कुहकैरिन्द्रजालिकव्यापारैर्यथा अनुभावो यथार्थज्ञानं न प्रदुष्यति तथेति । सिकतास्तण्डुलीकृत्य कुण्डलीकृत्य रज्जुं लोकलोचनं बन्धविधया दर्शयतो मायाविनोऽनुभाव इमाः सिकता रज्जुरियमिति मतिर्न प्रदुष्यति यथा तथेति - इति सत्यधर्मतीर्थाः ।

२. ईषदस्पष्टमिदं व्याख्यानम् । सत्यधर्मीयोपि तथा । तथाहि । यो भगवान् मनसा इदं विश्वं सृष्ट्वा स्वात्मना अन्तर्यामिरूपेणानुप्रविश्य कुर्वद्भिः श्रवणादिकम् (इति शेषः) करणे कर्तृत्वोपचारःगुणैः प्राणतोऽप्रधानैरिन्द्रियैः अहं कर्तेति दुरभिमानवान् जीव इवाभाति, न तु तदिन्द्रियगुणदोषलिप्तो भवति । यथा स्वप्नदृक् इच्छया स्ववासनामुपादानमुपादाय हरिणा अन्तर्देहं सृष्टकरितुरगादीन् पश्यन् जीवस्तदनन्तरं तद्राजगजादिसम्पृक्तो न भवति तथेति - इति ।

३. तस्मा इति वदन् मुख्यः कश्चिद् परोक्षः सन् वर्तत इति सूचयति - इति सत्यधर्मतीर्थाः ।

**कं वृणेऽतः परं भूमन् वरं त्वद् वरदर्शनात्।**
**यद्दर्शनात् पूर्णकामः सत्यकामः पुमान् भवेत्॥ ३३॥**

**वरमेतं वृणेऽथापि पूर्णकामाभिवर्षणात्।**
**भगवत्यच्युते भक्तिं तत्परेषु तथा त्वयि॥ ३४॥**

**सूत उवाच -**

**इत्यर्थितोऽभिष्टुतश्च मुनिना सूक्तया गिरा।**
**तमाह भगवान् शर्वः शर्वया चाभिनन्दितः॥ ३५॥**

**कामस्ते महर्षे सत्यो भक्तिमांस्त्वमधोक्षजे।**
**आकल्पान्तं यशः पुण्यमजरामरता तथा॥ ३६॥**

**ज्ञानं त्रैकालिकं ब्रह्मन् विज्ञानं च विरक्तिमत्।**
**ब्रह्मवर्चस्विता भूयात् पुराणाचार्यताऽस्तु ते॥ ३७॥**

---

तत्राह **गुरव इति**। ब्रह्मादीनां स्वात्मरहस्योपदेष्टृत्वात् तेषां सिद्ध इत्यर्थः। निराकरस्योपदेष्टृत्वं कथं घटत इति तत्राह **ब्रह्मेति**। ज्ञानादिगुणाकाराय। बृहन्तो ह्यस्मिन् गुणा इति श्रुतावस्मिन्निति वचनादाकारः सिद्ध इति॥ ३२॥

यत एवं निरूप्यमाणे हरेरधिकः समो वा नास्ति सर्वश्रेष्ठश्च अतस्तद्भक्तिमन्तरेण त्वत् परमन्यं कं वरं वृणे। वरं वरेण्यं दर्शनं ज्ञानं यस्य स तथा तस्मात्। एतदेवाह **यद्दर्शनादिति**। यद्दर्शनाद् येनोपदिष्टज्ञानाद्वा पुमान् पूर्णकामः स्यादत एव सत्यकामश्च॥ ३३॥

मद्दर्शनात् पूर्णकामत्वे वरं वृणीष्वेति मद्वचनं व्यर्थमभूदिति मा शङ्कीत्याह **वरमिति**। यद्यपि वरो न प्रार्थनीयस्तथापि त्वद्वचनसाफल्यायैतं वरं वृणे। पूर्णकामाभिवर्षणात्, त्वदिति शेषः। कोऽसौ वर इति तत्राह **भगवतीति**। तत्परेषु, तद्भक्तश्रेष्ठे त्वयि च॥ ३४॥

शर्वया पार्वत्या सह॥ ३५॥ त्वमधोक्षजे भक्तिमान्, भूया इति शेषः। आकल्पान्तं पुण्यं यशोऽजरामरणता च, भूयात् तवेति शेषः॥ ३६॥ किञ्च वरान्तरं च स्यादित्याह ज्ञानमिति॥ ३७॥

सूत उवाच -

एवं वरान् स मुनये दत्त्वाऽगात् त्र्यक्ष ईश्वरः ।
देव्यै तत् कर्म कथयन्ननुभूतं पुराऽमुना ॥ ३८ ॥

सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ।
विचरत्यधुनाप्यद्धा हरावेकान्ततां गतः ॥ ३९ ॥

अनुवर्णितमेतत् ते मार्कण्डेयस्य धीमतः ।
अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ४० ॥

एतत् केचिदविद्वांसो मायाप्रसृतिमात्मनः ।
अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥ ४१ ॥

य एवमेतद् भृगुवर्यवर्णितं रथाङ्गपाणेरनुभावभावितम् ।
संश्रावयेत् संशृणुयादुतोभयोस्तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४२ ॥

॥ इति नवमोऽध्यायः ॥

---

अमुना मार्कण्डेयेन ॥ ३८ ॥ अवाप्तमहायोगमहिमा प्राप्तमहाज्ञानमहिमा प्राप्तमहाणिमादि-योगमहिमा वा । एकान्ततां नियतभक्तताम् ॥ ३९ ॥

ज्ञानवतो मार्कण्डेयस्य यदेतदनुभूतं हरेर्मायावैभवं तेऽनुवर्णितम् एतन्नृणां मध्ये केचिदविद्वांस आत्मनो हरेर्मायाप्रसृतिं सामर्थ्यविस्तारं कादाचित्कं प्रचक्षते । अकाले प्रदर्शितत्वेन कादाचित्कं किं न स्यादत्राह **अनादीति** । अनादिकालवर्तिनं न नूतनम् । यद्वोपसंहरति **अनुवर्णितमिति** । मार्कण्डेयस्यैतच्चरितं तेऽनुवर्णितम् । किं तच्चरितमत्राह **अनुभूतमिति** । श्रद्धेयत्वे मतभेदमाह **एतदिति** ॥ ४०-४१ ॥

इतोऽप्येतच्छ्रद्धेयमिति फलमाह **य एवमिति** । अनुभावेन भावितं संवर्धितम् । तयोरुभयोः श्रावयितृश्रोत्रोः कर्माशयसंसृतिः कर्मणामाशयः स्थानं देहस्तन्निमित्तसंसारो न भवेदिति संसार-स्वरूपनाश एवोच्यते । अस्य श्रीहरिभक्तिर्मुख्यहेतुरतोऽच्युतां भक्तिमित्याह[१] ॥ ४२ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य नवमोऽध्यायः ॥**

---

१. इदं वाक्यमस्पष्टम् । एकतमे कोशेऽत्र ग्रन्थपातः सूचितः ।

॥ अथ दशमोऽध्यायः ॥

**शौनक उवाच**

**अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम् ।**
**समस्ततन्त्रराद्धान्ते भवान् भागवततत्त्ववित् ॥ १ ॥**

**तान्त्रिकाः परिचर्यायां केशवस्य श्रियः पतेः ।**
**अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथैव यैः ॥ २ ॥**

**तान् नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ।**
**येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥ ३ ॥**

**सूत उवाच -**

**नमस्कृत्वा गुरून् वक्ष्ये विभूतीर्वैष्णवीरपि ।**
**या वेदागमतन्त्राभ्यामाचार्यैः पद्मजादिभिः॥ ४ ॥**

---

स्थूलमतीनामुपासनार्थं पुरुषरूपस्य हरेर्यजनप्रकारं वदत्यस्मिन्नध्याये । तत्र तद्बुभुत्सया शौनकः पृच्छति **अथेति** । बुद्धिसन्निहितत्वादिममित्युक्तम् । समस्ततन्त्रराद्धान्ते सर्वपञ्चरात्रतन्त्रलक्षणशास्त्रोक्तसिद्धान्ते उक्तं यद् भागवतं भगवद्विषयं तत्वं तद् वेत्तीति ॥ १ ॥

तान्त्रिकाः श्रीनारायणपूजाविधायकशास्त्रपटवः श्रियः पतेः पत्युः, प्रयोगरूढेः[1] प्राबल्यात् घिसंज्ञा वैकल्पिकेति बोद्धव्यम् । परिचर्यायामङ्गोपाङ्गायुधाकल्पम् अङ्गानि पादादीनि , उपाङ्गानि गरुडादीनि, आकल्पमाभरणं कौस्तुभादि ॥ २ ॥ तान् पदार्थान् । क्रियायोगं पूजालक्षणं बुभुत्सतां ज्ञातुकामानां । क्रियानैपुणेन क्रियापटुत्वेन । अमर्त्यतां मरणराहित्यं मुक्त्याख्यम् ॥ ३ ॥

वेदागमतन्त्राभ्यां वेदाख्यागमेन तन्त्रशास्त्रेण च पद्मजादिभिराचार्यैः प्रतिपादिता यास्ता विभूतीः ॥ ४ ॥

---

१. बहुलप्रयोगरूपरूढेः प्राबल्यमित्यर्थः स्यात् । सत्यधर्मतीर्थास्तु श्रियःपतेरिति षष्ठ्या अलुक् । श्रीमात्रपतित्वमाक्रोशविषय इति घिसंज्ञोपपत्तिः। इममेवाभिप्रायं मनस्यानीय द्विरूपकोशे श्रियःपतिः श्रीपतिः स्यादित्युक्तिरिति व्याचक्रुः ।

**मायाद्यैर्नवभिस्तत्त्वैः सविकारैरयं विराट्।**
**निर्मितो दृश्यते यस्मिन् सचित्के भुवनत्रयम्॥ ५॥**

**एतद् वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः।**
**नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः॥ ६॥**

**प्रजापतिः प्रजननमपानो मृत्युरीशितुः।**
**तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवोर्यमः॥ ७॥**

**लज्जोत्तरोऽधरो लोभो द्युतिर्ज्योत्स्ना स्मयो भ्रमः।**
**रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः॥ ८॥**

**यावानयं स पुरुषो यावत्या संस्थया मितः।**
**तावानसावपि महान् पुरुषो लोकसंस्थया॥ ९॥**

**कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः।**
**तत्प्रभा व्यापिनी साक्षात् श्रीवत्समुरसा विभुः॥ १०॥**

---

माया प्रकृतिः। आदिशब्देन महदहङ्कारमनांसि पञ्चभूतानि च गृह्यन्ते। विकारा इन्द्रियादयः। विराट् ब्रह्माण्डम्। सचित्के चेतनसहिते यस्मिन् ब्रह्माण्डे भुवनत्रयं दृश्यते॥ ५॥

एतद् ब्रह्माण्डं पौरुषं रूपं पुरुषसन्निधानयोग्यप्रतिमारूपम्। यैरङ्गादिकं कल्पयन्ति तानाह **भूरिति**। अत्र विवरणं पूर्ववदूह्यम्[१]॥ ६॥ प्रजापतिर्दक्षः प्रजननमुपस्थम्॥ ७॥ उत्तरोष्ठो लज्जा, अधरोष्ठो लोभः। द्युतिः स्वरूपकान्तिः ज्योत्स्ना। भ्रमो भ्रान्तिः, स्मयो दर्पविशेषः। एतावती अङ्गकल्पना॥ ८॥

सोऽयं पुरुषो ब्रह्माण्डाख्यः लोकसंस्थया यावत्या संस्थया मितः परिमितः, असौ महान् पुरुषः तदन्तस्थपुरुषो भगवानपि तावान् तावत्परिमाणोपेतः॥ ९॥

उपाङ्गान्याह **कौस्तुभेति**। अजो विष्णुः स्वात्मज्योतिः ज्योतिःस्वरुपः। यद्वा स्वाधीन-ब्रह्माख्यज्योतिः। श्रीरित्यध्याहार्यम्। साक्षाच्छ्रीस्तस्य श्रीवत्सस्य प्रभां व्याप्नोतीति तत्प्रभा-व्यापिनी। तादृशं श्रीवत्समुरसा बिभर्ति॥ १०॥

---

१. द्वितीयस्कन्धप्रथमाध्यायोक्तदिशेत्यर्थः।

**स्वमायां वनमालाख्यां नानागुणमयीं दधत् ।**
**वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत् स्वरम् ॥ ११ ॥**

**बिभर्ति सांख्यं योगं च देवो मकरकुण्डले ।**
**मौलिं पदं पारमेष्ठ्यं सर्वलोकनमस्कृतम् ॥ १२ ॥**

**अव्याकृतमनन्ताख्यमासनं यदधिष्ठितम् ।**
**धर्मज्ञानादिभिर्युक्तं सत्वं पद्ममिहोच्यते ॥ १३ ॥**

**ओजस्सहोबलयुतं मुख्यतत्वं गदां दधत् ।**
**अपां तत्वं दरवरं तेजस्तत्वं सुदर्शनम् ॥ १४ ॥**

**नभोनिभं नभस्तत्वमसिं चर्म तमोमयम् ।**
**कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधी ॥ १५ ॥**

**इन्द्रियाणि शरानाहुराकृतिरस्य स्यन्दनम् ।**
**तन्मात्राण्यस्याभिव्यक्तिरिन्द्रियार्थाः क्रिया मताः ॥ १६ ॥**

---

स्वां मायां श्रियम् । नानावर्णगुणमयीम् । छन्दोमयं वेदस्वरूपम् । त्रिवृत् त्रिवर्णात्मकं स्वरं प्रणवलक्षणं ब्रह्मसूत्रं (च) दधत् ॥ ११ ॥

सांख्यं ज्ञानं योगं कर्म एतद्द्वयाख्ये मकरकुण्डले, पारमेष्ठ्यं पदं स्थानं मौलिं किरीटम् ॥ १२ ॥

यदधिष्ठितमासनं पीठं तदनन्ताख्यमव्याकृतं विकाररहितम् ।सत्वं सत्वगुणाभिमानिनी श्रीः पद्मम् ॥१३॥ मुख्यतत्वं मुख्यप्राणरूपां गदां दधत् ॥ १४ ॥ नभोनिभमाकाशवन्नीलवर्णं नभस्तत्वरूपमसिं नन्दकम् । तमोमयं तमोगुणवदाच्छादनकरं चर्म दधत् । पुण्यकर्मस्वरूपे इषुधी च ॥ १५ ॥

अस्य हरेः स्यन्दनमाकृतिः पृथिवी ।अस्याभिव्यक्तिः तन्मात्राणि शब्दादीनि । इन्द्रियार्थाः कर्मेन्द्रियविषयाः क्रिया मताः विसर्गादीनि कर्माणि ज्ञातव्यानि ॥ १६ ॥

मण्डलं देवयजनं दीक्षा संस्कार आत्मनः ।
परिचर्या भगवत आत्मनो दुरितक्षयः ॥ १७ ॥

भगवान् भगशब्दात्मा लीलाकमलमुद्वहन् ।
धर्मं यशश्च भगवान् चामरव्यजनेऽभजत् ॥१८॥

आतपत्रं तद्वैकुण्ठं निजधामाकुतोभयम् ।
त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरूषम् ॥ १९ ॥

अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ।
विष्वक्सेनस्तन्त्रमूर्तिर्विदितः पार्षदाधिपः ॥ २० ॥

नन्दादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ।
वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् ।
अनिरुद्ध इति ब्रह्मन् मूर्तिव्यूहेऽभिधीयते ॥ २१ ॥

---

देवयजनं हरेः पूजास्थानं चक्राब्जादिकं मण्डलम् । आत्मनः परमात्मनः सकाशात् संस्कारः शरीरशुध्दिःदीक्षा ।दीक्षया हि देहशुध्दिः ।भगवतः परिचर्या आत्मनः स्वस्य दुरितक्षयः पापनाशनम् ॥ १७ ॥

भगवान् पूज्यः भगशब्दात्मा भगशब्दस्वरूपः , ऐश्वर्यादिगुणस्वरूप इत्यर्थः ।धर्मयशआख्ये चामरव्यजने ॥१८॥

निजधाम तद्वैकुण्ठं तदभिमानिदेवता आतपत्रम् । त्रिवृत् त्रिविधो वेदः सुपर्णाख्यो यज्ञं पुरुषं यज्ञपुरुषं वहति ॥ १९ ॥

साक्षादनपायिनी नित्यावियोगिनी श्रीर्हरेरात्मभूता अर्धदेहा नाम[1]। विष्वक्सेनःपार्षदाधिपो विदितः तन्त्रमूर्तिः तन्त्रग्रन्थाभिमानी ॥ २० ॥

अष्टौ नन्दादयो द्वाःस्थाः हरेरणिमाद्या गुणा तदाश्रिताः । मूर्तिव्यूहे मूर्तिस्थापने वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धः स्वयमभिधीयते ॥ २१ ॥

---

१. भगवत्यनपायिनी श्रीर्हरेरात्मनः साक्षात् तुल्या, अर्धाङ्गिनीति यावदिति सत्यधर्मतीर्थाः ।

स विश्वतैजसप्राज्ञतुरीय इति वृत्तिभिः ।
अर्थेन्द्रियाशयज्ञानैर्भगवान् भाष्यते ततः ॥ २२ ॥

अङ्गोपाङ्गायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ।
बिभर्ति स्म चतुमूर्तिर्भगवान् हरिरीश्वरः ॥ २३ ॥

द्विजवृषभ स एष ब्रह्मयोनिः स्वयंदृक्
स्वमहिमपरिपूर्णो माययाऽऽद्यः स्वयैतत् ।
सृजति हरति पातीत्याख्ययाऽनावृताक्षो
विसृजत इव निरुक्तैस्तत्परैरात्मलभ्यः ॥ २४ ॥

---

स भगवानेव विश्वादिशब्दवाच्य इति भाष्यते। अर्थेन्द्रियाशयज्ञानैः वृत्तिभिः, अर्थज्ञानलक्षणवृत्त्या जाग्रदवस्थया विश्वः, मनआदीन्द्रियगतवासनालक्षणज्ञानवृत्त्या स्वप्नावस्थया तैजसः, आशयः सुषुप्तिः तदवस्थाज्ञानलक्षणवृत्त्या वर्तमानः प्राज्ञः, एतावन्तं कालं सुखमस्वाप्समित्यनुभवात्। किमेते भिन्ना इत्यत्राह **तत इति**। ततो व्याप्तोऽपरिच्छिन्न इत्यर्थः। बहुत्वसंख्यामात्रयोगित्वं न तु मिथो भिन्नत्वम् ॥ २२ ॥

अङ्गादिकथनस्योपयोगमाह **अङ्गेति** । अङ्गादिशब्दवाच्यवासुदेवाद्यावरणैर्भगवान् पूज्य इत्येतदर्थत्वेन कथनमित्यर्थः। अङ्गादिचतुष्टयस्यापि हरिरेवाधार इत्याह **तदिति**। चतुर्मूर्तिर्भगवान् अङ्गादिचतुष्टयं बिभर्ति। अङ्गात्मका वासुदेवाद्याः स्वयमुपाङ्गादिषु ब्रह्मादिषु सन्निहितत्वेन पूजाकाले तथा स्मरणार्थं स्मेत्युक्तम्। भगवान् वसिष्ठाद्यन्यतमो नेत्याह **हरिरिति**। हरिरपि पुरन्दराद्यन्यतमः किं न स्यादित्यत उक्तम् **ईश्वर इति**। सोपि सदाशिवः स्यादत उक्तं **चतुर्मूर्तिरिति**। सोऽष्टमूर्तिरिति प्रसिद्धः ॥ २३ ॥

यद् वेदान्तेवद्यं तदेवात्र पुरुषरूपेणोच्यते तस्मादिदं मुमुक्षुभिः श्रद्धयोपास्यमिति श्लोकद्वयेनाह **द्विजवृषभेति** । हे द्विजवृषभ तत्परैः तद्भक्तैः आत्मलभ्यः आत्मनि मनसि लभ्यः प्रकाश्यो भवति । यद्वा आत्मनैव स्वानुग्रहेणैव लभ्यः प्राप्यः । यमेवैष वृणुते तेन लभ्य इति श्रुतेः । किंलक्षणकोऽयं पुरुष इति तत्राह **माययेति**। स्वया मायया स्वेच्छयैव सृजतीति स्रष्टा हरतीति हरः पातीति पाता, स्रष्टा पाता तथैवात्ता निखिलस्यैक एव त्वित्यादेः । अत्र किं प्रमाणम् । तत्राह **ब्रह्मेति** । ब्रह्म वेदादिशब्दराशिः योनिर्ज्ञप्तिकारणं यस्य स तथा । वेदादिशब्दराशिरस्मिन्नर्थे

**श्रीकृष्ण कृष्णसख वृष्णिवृषावनिध्रुग्-**
**राजन्यवंशदहनानपवर्गवीर्य ।**
**गोविन्द गोद्विजसुरार्तिहरावतार**
**तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥ २५ ॥**

**य इदं कल्य उत्थाय महापुरुषलक्षणम् ।**
**तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥**

**॥ इति दशमोऽध्यायः ॥**

---

मानमित्यर्थः । चतुर्मुखस्यापि सृष्ट्यादिकर्तृत्वस्य प्रमितत्वात् कथं हरेरेवेति निश्चीयते, ब्रह्मा देवानां प्रथमः सम्बभूवेत्यादिश्रुतेरित्यतो वाह **ब्रह्मेति** । ब्रह्मणश्चतुर्मुखस्य योनिः कारणम्, यो ब्रह्माणं विदधाति पूर्वमिति श्रुतेः । लोकवत् परोपदेशेन कर्मणि न प्रवर्तते किन्तु स्वरूपज्ञानेनेत्याशयेनाह **स्वयंदृगिति** । स्वयंभूतज्ञानत्वेपि कर्म परापेक्षाऽविनाभूतं दृष्टमत्राह **स्वमहिमेति** । स्वे महिम्नीति श्रुतेः । स्वयं प्रकाशमानस्य प्रद्योतनस्य मेघाद्यावरणेनेव हरेर्ज्ञानस्यापि तत् स्यादित्यत्राह **अनावृताक्ष इति** । आवरणरहितदृष्टिः । कथं प्रकाशत इत्यत्राह **विसृजत इति** । स्रष्टाऽयमित्युपासमानस्य विविधं सृजत इति प्रकाशते, संहर्ताऽयमिति ज्ञानवतः संहरतीव, (एवं) रक्षतीव, इतरस्योपलक्षणमेतत् । यान् यान् गुणानुपसंहृत्योपास्ते तत्तद्गुणत्वेन प्रकाशत इति ॥ २४ ॥

श्रीकृष्ण कृष्णेत्युक्तार्थः[१] ॥ २५ ॥

एवमुपास्तिं कुर्वतः फलमाह **य इदमिति** । कल्ये उषसि महापुरुषलक्षणं यो जपति स जप्त्वा हृदयगुहायां शेत इति हृदयगुहाशयं ब्रह्म जानाति । कुशेशयमितिवत् ॥ २६ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य प्रथमोऽध्यायः ॥**

---

१. कुन्तीस्तुतिसन्दर्भे (भागवतम् १-८-४६)

॥ अथ एकादशोऽध्यायः ॥

**शौनक उवाच -**

शुको यदाह भगवान् विष्णुराताय पृच्छते।
सौरे गणो मासिमासि नाना वसति सप्तकः ॥ १ ॥

तेषां नामानि कर्माणि नियुक्तानामधीश्वरैः।
ब्रूहि नः श्रद्धधानानां व्यूहं सूर्यात्मनो हरेः ॥ २ ॥

**सूत उवाच -**

आनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम्।
निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥ ३ ॥

---

सर्वोपास्यत्वेऽप्यादित्यस्थस्यैव हरेर्गृहस्थैर्विशेषत उपास्तिः कर्तव्येति तत्स्थितिप्रकारं कथयत्यस्मिन्नध्याये। तत्र शौनकः पृच्छति **शुक इति**। शुको भगवान् विष्णुराताय पृथङ्नामरूपादिसप्तको गणो मासिमासि नानानामानं सूर्यं भगवन्तं निषेवमाणः सौरे सूर्यस्य विद्यमाने स्यन्दने रथे नाना वसति। तथाऽन्ये च ऋषयो गन्धर्वाप्सरसो नागा इत्यादि पञ्चमस्कन्धे[1] यदाह तदा तेषां पृथङ्नामानि पृथक्कर्माणि चानुक्तानि। अतः श्रद्धधानानां नोऽस्माकं तानि ब्रूहीत्यन्वयः। सूर्यात्मनः सूर्यान्तर्यामिणो हरेः व्यूहं स्थितिविशेषं च वद। सूर्यात्मनो हरेः परितः स्थितं तेषां व्यूहम्, पृथक्पृथगिति शेषः, इति वा ॥१-२ ॥

अयं कल्पो हरेबुद्धिपूर्वं प्रणीतत्वान्न मिथ्याभूत इति भावेनाह **अनादीति**। लोकं तन्त्रयति व्यापारयतीति लोकतन्त्रो लोकप्रवृत्तिहेतुरयं सूर्यादिः लोकेषु परितो वर्तते उदयादिनिमित्तव्यापारायोदयादिकं गच्छतीत्यर्थः। कीदृशः। सर्वदेहिनामात्मनो विष्णोः अनाद्यविद्यया कारणशून्येच्छया[2] निर्मितः। सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति श्रुतेः ॥ ३ ॥

---

१. भागवतम् (५.२१.१८.)

२. " महामायेत्यविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते " इति हि स्कान्दवचनम्।

**एक एव हि लोकानां सूर्य आत्माऽऽदिकृद् हरिः।**
**सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ४ ॥**

**कालो देशः क्रिया कर्ता करणं कार्यमागमः।**
**द्रव्यं फलमिति ब्रह्मन् नवधोक्तोऽजया हरिः॥ ५ ॥**

**मध्वादिषु द्वादशसु भगवान् कालरूपधृक् ।**
**लोकतन्त्राय चरति पृथग् द्वादशभिर्गुणैः॥ ६ ॥**

**धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने ।**
**पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥ ७ ॥**

---

सरतीति सूर्य इति सूरिप्राप्यत्वात् सूर्य इति तच्छब्दप्रवृत्तिनिमित्तस्य तदेकाधीनत्वान्मुख्यकर्ता[१] हरिरेक एवेत्याह **एक एवेति** । लोकानामुभयेषामात्मा । सूर्य आत्मा जगतस्तस्थुषश्चेति श्रुतेः । दिनस्य आदिकृत् । कृती च्छेदने इति धातोर्दिनादिच्छित् अस्तकर्ता च । प्रातरुत्थायाथ सन्ध्यामुपासीतेति श्रुतेः। सर्ववेदोक्तक्रियामूलम् । अत एव ऋषिभिर्बहुधोदितः । उदितमिति पाठे तत्स्वरूपं नानात्वेन कथितम् । अत्र द्वादशसूर्येष्वेकः स्वयं हरिः, अन्यत्रान्तर्यामित्वेनेति विशेषः ॥ ४ ॥

नानात्वमुपपादयति **काल इति**। अजया[२] मायया अनाद्यविद्यया नवधोक्तः । कालः प्रातरादिः, देशः समादिः क्रिया अनुष्ठानम्, कर्ता ब्राह्मणादिः, करणमिन्द्रियम्, कार्यं देहः, द्रव्यं चर्वादि भूतपञ्चकं वा, आगमो वेदादिशास्त्रम्, फलं स्वर्गादि । कालादिषु स्थित्वा तत्कर्मकारकत्वेन कालादिशब्दवाच्यत्वेन नवधा हरिरुक्त इति ज्ञातव्यम् ॥ ५ ॥

एक एव हरिः सर्वं प्रेरयतीत्युक्तम् । तत्प्रकारं दर्शयति **मध्वादिष्विति** । कालरूपधृग् भगवान् लोकतन्त्राय लोकव्यापाराय मध्वादिषु चैत्रादिषु द्वादशसु मासेषु द्वादशभिर्गुणैः द्वादशविधकालगुणैः पृथक्पृथक् चरतीत्यन्वयः॥ ६ ॥

इदानीं तेषां नामान्याह **धातेत्यादिना** । धाता सूर्यः, कृतस्थली अप्सराः, हेती राक्षसः,

---

१. मुख्यसर्तेति पाठः स्यात् । यद्वा सरणस्य प्राप्तेश्च मुख्यकर्तेति ।

२. अजया अविद्यया स्वेच्छयेति सत्यधर्मतीर्थाः।

अर्यमा पुलहाऽथौजाः प्रहेतिः पुञ्जकस्थली ।
नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥ ८ ॥

मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ।
रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥ ९ ॥

वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः ।
शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥ १० ॥

इन्द्रो विश्वावसुः स्रोता एलापत्रस्तथाङ्गिराः ।
प्रम्लोचा राक्षसः स्वर्यो नभोमासं नयन्त्यमी ॥ ११ ॥

विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ।
अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥ १२ ॥

---

वासुकिर्नागः, रथकृत् तक्षा, पुलस्त्य ऋषिः, तुम्बुरुर्गन्धर्वः । अमी धात्रादयो मधुमासं नयन्ति । ते उक्तक्रियाकारकत्वेन तन्मासमतिपारयन्ति ॥ ७ ॥

अर्यमा सूर्यः , पुलहा ऋषिः , अथौजाः तक्षा, प्रहेती राक्षसः , पुञ्जकस्थली अप्सराः , नारदो गन्धर्वः, कच्छनीरो नागः । एते माधवमासाधिपतिं माधवनामानं नयन्ति शरणं प्राप्योपासते । एवमुत्तरत्राप्यनुसन्धेयम् ॥ ८ ॥

मित्रः सूर्यः, अत्रिः ऋषिः , पौरुषेयो राक्षसः, तक्षको नागः, मेनका अप्सराः, हहा गन्धर्वः, रथस्वनस्तक्षा ( शुक्रमासो ज्येष्ठमासः ) ॥ ९ ॥

वसिष्ठ ऋषिः, वरुणः सूर्यः, रम्भा अप्सराः, सहजन्यो राक्षसः, हुहूः गन्धर्वः, शुक्रो नागः, चित्रस्वनस्तक्षा, । (शुचिराषाढः) ॥ १० ॥

इन्द्रः सूर्यः, विश्वावसुर्गन्धर्वः, स्रोता तक्षा, एलापत्रो नागः, अङ्गिरा ऋषिः, प्रम्लोचा अप्सराः, स्वर्यो नाम राक्षसः । ( नभोमासः श्रावणमासः ) ॥ ११ ॥

विवस्वानादित्यः, उग्रसेनो गन्धर्वः, व्याघ्रो राक्षसः, आसारणस्तक्षा, भृगुः ऋषिः, अनुम्लोचा अप्सराः, शङ्खपालो नागः । ( नभस्यो भाद्रपदः ) ॥ १२ ॥

पूषा धनञ्जयो वातः सुषेणः सुरुचिस्तथा।
घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥ १३ ॥

ऋतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित् तथा।
विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी ॥ १४ ॥

अथांशुः कश्यपस्तार्क्ष्यो धृतसेनस्तथोर्वशी।
विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी ॥ १५ ॥

भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पञ्चमः।
कर्कोटकः पूर्वचित्तिः सहस्याख्यं नयन्त्यमी ॥ १६ ॥

त्वष्टा ऋचीकतनयः कम्बलश्च तिलोत्तमा।
ब्रह्मरातोऽथ शतजिद् धृतराष्ट्र इषम्भराः ॥ १७ ॥

---

पूषा आदित्यः, धनञ्जयो नागः वातो राक्षसः, सुषेणस्तक्षा, सुरुचिर्गन्धर्वः, घृताची अप्सराः, गौतम ऋषिः। तपोमासं माघम् ) ॥ १३ ॥

ऋतुरप्सराः, वर्चा गन्धर्वः, भरद्वाज ऋषिः, पर्जन्य आदित्यः, सेनजित् तक्षा, विश्वो राक्षसः, ऐरावतो नागः। ( तपस्याख्यं फाल्गुनम् ) ॥ १४ ॥

अंशुरादित्यः , कश्यप ऋषिः, तार्क्ष्यः तक्षा, धृतसेनो गन्धर्वः, ऊर्वशी अप्सराः, विद्युच्छत्रुः राक्षसः, महाशङ्खो नागः। ( सहोमासं मार्गशीर्षम् ) ॥ १५ ॥

भग आदित्यः, स्फूर्जो राक्षसः, अरिष्टनेमिः ऋषिः, ऊर्णो गन्धर्वः, आयुस्तक्षा, कर्कोटको नागः पुर्वचित्तिरप्सराः। (सहस्राख्यं पुष्यमासम्) ॥ १६ ॥ त्वष्टा आदित्यः, ऋचीकतनयो राक्षसः[1], कम्बलाख्यो नागः, तिलोत्तमा अप्सराः, ब्रह्मरात ऋषिः, शतजित् तक्षा, धृतराष्ट्रो गन्धर्वः। इषं बिभ्रतीति इषम्भराः इषमास ( आश्विनमास ) प्रणेतार इत्यर्थः ॥ १७ ॥

---

१. ऋचीकतनयो भार्गव ऋषिः, ब्रह्मरातो राक्षस इति सत्यधर्मतीर्थाः।

विष्णुरश्वतरो रम्भा सूर्यवर्चोऽश्वसत्यकौ ।
विश्वामित्रमुखा एत ऊर्जमासं नयन्त्यमी ॥ १८ ॥

एता भगवतो विष्णोरादित्यस्य विभूतयः ।
स्मरतां सन्ध्ययोर्नॄणां हरंत्यंहो दिनेदिने ॥ १९ ॥

द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ।
चरन् समन्तात् तनुते परत्रेह च सन्मतिम् ॥ २० ॥

सामर्ग्यजुभिस्तल्लिङ्गैर्ऋषयः संस्तुवन्त्यमुम् ।
गन्धर्वाः सम्प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ॥ २१ ॥

उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः ।
चोदयन्ति रथं पृष्ठे नैर्ऋता बलशालिनः ॥ २२ ॥

---

विष्णुरादित्यः, अश्वतरो नागः, रम्भा अप्सराः[१] सूर्यवर्चो गन्धर्वः, अश्वो राक्षसः, सत्यकस्तक्षा, विश्वामित्र ऋषिः । ( ऊर्जमासं कार्तिकमासम् ॥ १८ ॥

उपसंहरन्नेव तत्कथनप्रयोजनमाह **एता इति** ।आदित्यान्तर्यामिणो हरेः । ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण इति वचनमत्र प्रमाणम् ॥ १९ ॥

एतदभिप्रेत्य पुनरपि लोकद्वयोपभोज्यफलमाह **द्वादशस्विति** । द्वादशसु मासेषु षड्भिर्गणैः धात्रादीनृते षट्संख्यामुपगतैः सह समन्ताच्चरन् देवोऽस्य सेवकस्येह परत्र च सन्मतिं निर्दुःखानन्दानुभवलक्षणं तनुते यथायोग्यं विस्तृत्य ददातीत्यर्थः ॥ २० ॥

इदानीं तेषां कर्माण्याह **सामेति**। सामर्ग्यजुभिस्तल्लिङ्गैस्तल्लक्षणैस्तत्तत्वगमकैर्वाक्यैर्वा। उन्नह्यन्ति सम्यग् योजयन्ति। ग्रामण्यस्तक्षाणः।नैर्ऋता राक्षसाः ॥ २१ - २२ ॥

---

१. रम्भापदस्थानेऽत्रानुक्तायाः सहजन्याया वा विश्वाच्या वा अम्लोचाया वा वाचकपदस्योहः कर्तव्यः । अग्नये चरुं निर्वपामीत्यादौ तथा दृष्टेः । वसिष्ठो वरुणो रम्भेत्यारम्भोक्तेश्चेति सत्यधर्मतीर्थाः । ऊहस्तु कूर्मपुराणानुरोधेनेति । तत्र ( कूर्मपुराणे ) अत्र ( भागवते ) च यन्नामव्यत्यासादिकं तदनेकनामकत्वेन कल्पभेदेन वा समाधेयमेवेति ते वदन्ति । ( मासक्रमलङ्घनमपि कूर्मपुराणानुरोधेनेति ज्ञेयम् )

वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ।
पुरतोऽभिमुखं यान्ति स्तुवन्तः स्तुतिभिर्विभुम् ॥ २३ ॥

एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः ।
कल्पे कल्पे स्वमात्मानं व्यूह्य लोकान् तपत्यजः ॥ २४ ॥

॥ इति एकादशोऽध्यायः ॥

## ॥ अथ द्वादशोऽध्यायः ॥

सूत उवाच -

नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्ये सनातनम्[१] ॥ १ ॥

एतद् वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ।
भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २ ॥

---

एवं गणनमन्तरेणान्येपि सन्तीत्याह **वालखिल्या इति** ॥ २३ ॥

अध्यायार्थमुपसंहरति **एवमिति** । तपति आवर्तयति ॥ २४ ॥

**॥ इति श्रीविजयध्वजतीर्थभिक्षुविरचितायां भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धस्य एकादशोऽध्यायः ॥**

उपसंहारमुखेनानुसन्धातुं द्वादशस्कन्धात्मकभागवतार्थं संक्षिप्य कथयत्यस्मिन्नध्याये **एतद् व इत्यदिना** । एतद् विष्णोश्चरितम् । तद्वक्तव्यत्वे हेतुमाह **भवद्भिरिति** । विस्मितं सूचयति[२] **नराणामिति** । नराणां मध्ये सतां पुरुषाणां मध्ये श्रोतुमुचितम् । अनेनाधिकारसामर्थ्यं सूचितम् ॥ १-२ ॥

---

१. अयं श्लोकः कोशेषु सर्वत्रास्ति । परं विजयध्वजतीर्थैर्नव्याख्यातः । एतद् व इत्यादि श्लोकस्यावतारिका परिशीलनेऽयं श्लोकस्तेषां सम्मतो न वेति संशयो जायते । धर्मान् वक्ष्ये सनातनमित्यस्याध्यायशेषानानुगुण्याच्च । सत्यधर्मतीर्थास्तु सूतकृतमङ्गलाचरणतया श्लोकमिमं व्याचक्रुः ।

२. अस्पष्टेयमवतारिका ।

अत्र संकीर्त्यते साक्षात् सर्वपापहरो हरिः ।
नारायणो हृषीकेशो भगवान् सात्वतां पतिः ॥ ३ ॥

यत् तद् ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम् ।
ज्ञानं च सदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥ ४ ॥

भक्तियोगश्च व्याख्यातो वैराग्यं च तदाश्रयम् ।
पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥

प्रायोपवेशो राजर्षेर्विप्रशापात् परीक्षितः ।
शुकस्य ब्रह्मर्षभस्य संवादश्च परीक्षितः ॥ ६ ॥

योगधारणयोत्क्रान्तिः संवादो नारदाजयोः ।
अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ॥ ७ ॥

---

श्रोतव्यत्वे मुख्यहेतुमाह **अत्रेति** । अत्र श्रीभागवते । कस्मान्मुख्यत्वमत्राह **सर्वेति** । वृत्रादि-सर्वपापहन्तृत्वमिन्द्रस्याप्यस्तीत्यत उक्तम् **नारायण इति** । नायं साङ्केतिकनारायण इत्याह **हृषीकेश इति** । हृषीकाणामीशो जीवोपि स्यादत आह **भगवानिति** । ऐश्वर्यादिगुणसमुद्रो हि भगवान् । एवंविधो नान्य इत्याह **सात्वतां पतिरिति** ॥ ३ ॥

सगुणमेवोक्तं निर्गुणमतं नेत्याह **यत्तदिति** । जगतः प्रभवाप्ययकृद् यत् परं गुह्यं ब्रह्म तत् प्रोक्तम् । तद्विषयज्ञानं सतामुपाख्यानं येन तत्[1] ॥ ४ ॥

सा भक्तिराश्रयो यस्य तत् तदाश्रयम् । अत्रेत्यतत् प्रतिवाक्यमनुसान्धातव्यम् ॥ ५ ॥

योगधारणया अखण्डस्मरणलक्षणया । नारदाजयोः नारदंब्रह्मणोः । अवताराणामनुगीतं कथनम् । प्राधानिकः प्रकृतिसर्गः सिसृक्षुत्वविशेषः ॥ ६-७ ॥

---

१. अस्पष्टमिदमपि ।

विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः ।
पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥

ततः प्राकृतिकः सर्गः सप्त वैकृतिकास्तथा ।
ततो ब्रह्माण्डसम्भूतिर्वैराजः पुरुषो यतः ॥ ९ ॥

कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः ।
भुव उद्धरणाम्भोधेर्हिरण्याक्षवधस्तथा ॥ १० ॥

ऊर्ध्वतिर्यगधःसर्गो रुद्रसर्गस्तथैव च ।
अर्धनारीनरस्याथ यथा स्वायम्भुवो मनुः ॥ ११ ॥

शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ।
सन्तानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥ १२ ॥

अवतारो भगवतः कपिलस्य महात्मनः ।
देवहूत्याश्च संवादः कपिलेन च धीमता ॥ १३ ॥

नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ।
ध्रुवस्य चरितं पश्चात् पृथोः प्राचीनबर्हिषः ॥ १४ ॥

---

प्राकृतिकः प्रकृतिविकृतः । ते सप्त महदहङ्कारपञ्चभूतानीति । वैकृतिका इन्द्रियविषयाः । यतो यत्र ब्रह्माण्डे ॥ ८-९ ॥

पद्मसमुद्भवः, नाभेरिति शेषः । अम्भोधेर्भुव उद्धरणा उद्धारः ॥ १० ॥

ऊर्ध्वतिर्यगधःसर्गः देवतिर्यगसुरसृष्टिः । अर्धनारीनरस्य ब्रह्मणः सकाशात् स्वायम्भुवो मनुर्यथा उत्पन्नस्तथा ॥ ११ ॥

या स्त्रीणां मध्ये आद्या प्रकृतिः स्त्री सा शतरूपा च यथोत्पन्ना तथा (तत्प्रकारश्चेत्यर्थः) ॥ १२-१३ ॥

नवब्रह्मसमुत्पत्तिः नवप्रजापतीनां मरीच्यादीनां सकाशात् सृष्टिः । तेषामुत्पत्तिर्वा ॥ १४ ॥

नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः ।
नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥
द्वीपवर्षसमुद्राणां गिरिनद्युपवर्णनम् ॥ १५ ॥

ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ।
दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च सन्ततिः ॥ १६ ॥

यतो देवासुरनरास्तिर्यङ्नगखगादयः ।
त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः ॥ १७ ॥

दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ।
मन्वन्तरानुचरितं गजेन्द्रस्य विमोक्षणम् ॥ १८ ॥

मन्वन्तरावताराश्च विष्णोर्हयशिरादयः ।
कौर्म्यं मात्स्यं नारसिंहं वामनं च जगत्पतेः ॥ १९ ॥

क्षीरोदमथनं तद्वदमृतार्थं दिवौकसाम् ।
देवासुरमहायुद्धं राजवंशानुकीर्तनम् ॥ २० ॥

इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः ।
इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ॥ २१ ॥

सूर्यवंशानुकथनं शशादाद्या नृपादयः ।
सौकन्यमथ शार्यातं ककुत्स्थस्य च धीमतः ॥ २२ ॥

खट्वाङ्गस्य च मान्धातुः सौभरेः सगरस्य च ।
कोशलेन्द्रस्य चरितमद्भुतं किल्बिषापहम् ॥ २३ ॥

निमेरङ्गपरित्यागो जनकानां च सम्भवः ।
रामस्य भार्गवेन्द्रस्य निःक्षत्रीकरणं भुवः ॥ २४ ॥

---

यतः सन्ततेर्देवासुरनरादय आसन् ॥ १५-१७ ॥ मन्वन्तरानुचरितं मन्वन्तरराजानुचरितम् ॥ १८-२० ॥ तारोपाख्यानं ताराया देव्या उपाख्यानम् ॥ २१ ॥

ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ।
दौष्यन्तेर्भरतस्यापि शन्तनोस्तत्सुतस्य च ॥ २५ ॥

ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ।
यत्रावतीर्णो भगवान् कृष्णाख्यो जगदीश्वरः ॥ २६ ॥

वसुदेवगृहे जन्म तस्य वृद्धिश्च गोकुले ।
तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः ॥ २७ ॥

पूतनासुपयःपानं शकटोच्चाटनं शिशोः ।
तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ॥ २८ ॥

धेनुकस्य सह भ्रातुः प्रलम्बस्य च संक्षयः।
गोपानां च परित्राणं दावाग्नेः परिसर्पतः ॥ २९ ॥

दमनं कालियस्याहेर्महाहेर्नन्दमोक्षणम् ।
व्रतचर्या च कन्यानां यत्र तुष्टो व्रतैः प्रभुः ॥ ३० ॥

प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ।
गोवर्द्धनोद्धारणं च शक्रस्य सुरभेरथ ॥ ३१ ॥

यज्ञाभिषेकः कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ।
शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ॥ ३२ ॥

अक्रूरागमनं पश्चात् प्रस्थानं रामकृष्णयोः ।
व्रजस्त्रीणां विलापश्च मधुरालोकनं ततः ॥ ३३ ॥

गजमुष्टिकचाणूरकंसादीनां तथा वधः ।
मृतस्यानयनं सूनोः पुनः सान्दीपनेर्गुरोः ॥ ३४ ॥

---

सोमवंशोद्भवस्यैलस्य इलापुत्रस्य चरितम् ॥ २२-२५ ॥

यत्र व्रतयचर्यायाम् ॥ २६-३०॥ यज्ञः पूजा, अभिषेकः तयोर्द्वन्द्वैक्यम् ॥ ३१-३२ ॥

मधुरायां निवसता यदुचक्रस्य यत् प्रियम् ।
कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ ३५ ॥

जरासन्धसमानीतसैन्यस्य बहुशो वधः ।
पातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥

आदानं पारिजातस्य सुधर्मायाः सुरालयात् ।
रुग्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥ ३७ ॥

हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम् ।
प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत् ॥ ३८ ॥

चैद्यपौण्ड्रकशाल्वानां दन्तवक्रस्य दुर्मतेः ।
शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः ॥ ३९ ॥

माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम् ।
भारावतरणं भूमेर्निमित्तीकृत्य पाण्डवान् ॥ ४० ॥

विप्रशापापदेशेन संहारः स्वकुलस्य च ।
वसुदेवस्य संवादो नारदेन सुरर्षिणा ॥ ४१ ॥

उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ।
यत्रात्मविद्या ह्यखिलाः प्रोक्ता धर्मविनिर्णयाः ।
ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥ ४२ ॥

युगलक्षणवृत्तिश्च कलौ नॄणामुपप्लवः ।
चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥ ४३ ॥

---

दाहनं दहनम् ॥ ३३-४० ॥ यत्रोद्धववासुदेवसंवादे आत्मविद्याः परमात्मविद्या अखिला अनुर्वरितत्वेनोक्ताः । वर्णाश्रमधर्मविनिर्णयश्चोक्तः ॥ ४१-४२ ॥

युगलक्षणं तदनुरूपा वृत्तिश्च । उपप्लवो विनाशः । राजसादिभेदेनोत्पत्तिः त्रिविधा, प्राकृतिकी नैमित्तिकी नित्या चेति वा ॥ ४३ ॥

देहत्यागश्च राजर्षेर्विष्णुदत्तस्य धीमतः ।
शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथाः ॥ ४४ ॥

महापुरुषविन्यासः सूर्यस्य जगदात्मनः ।
इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः ॥ ४५ ॥

लीलावतारकर्माणि कीर्तितानीह सर्वशः ।
पतितः स्खलितो वाऽर्तः क्षुत्वा वा विवशो ब्रुवन् ।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥ ४६ ॥

संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥ ४७ ॥

मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद् भगवानधोक्षजः ।
तदेव सत्यं तदु हैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ॥ ४८ ॥

तदेव पुण्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां यत्रोत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥

न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं यदि कर्हिचिद् वदेत् ।
तद् ध्वाङ्क्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥ ५० ॥

स वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ५१ ॥

---

विष्णुदत्तस्य परीक्षितः ॥ ४४ ॥ महापुरुषविन्यासः महापुरुषस्याङ्गोपाङ्गादिस्थितिविशेषः । सूर्यस्य स्थितिश्च । इति समाप्तिपर्यन्तं सर्वमुक्तम् ॥ ४५ ॥

क्षुत्वा क्षुतं कृत्वा ॥ ४६ ॥ अतिशयितो वातः अभ्रं सनीरं नीरदमिव ॥ ४७ ॥

अधोक्षजो भगवान् याभिर्गीर्भिर्न कीर्त्यते ता गिरोऽसत्कथाः मृषा निष्फलाः । असतीरसत्योऽमङ्गलाः । यद्वचो भगवद्गुणोदयं तदेव सत्यं यथोक्तम् ॥ ४८ ॥

पुनरपि स्तौति **तदेवेति**। तदेव पुण्यं पुण्यकरं रुचिरं सुन्दरं, महानुत्सवो येन तत् तथा ॥ ४९ ॥

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ।।५२ ।।

यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु।
अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ।। ५३ ।।

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च।
सत्वस्य शुद्धिं परमां च भक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ।। ५४ ।।

यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम्।
नारायणं देवमदेवमीशमबाह्यभावा भजताधिवेश्य ।। ५५ ।।

अहं च संस्मारित आत्मतत्वं श्रुतं पुरा मे परमर्षिवक्त्रात्।
प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ।। ५६ ।।

एतद् वः कथितं विप्रा कथनीयोरुकर्मणः।
माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ।। ५७ ।।

---

न यद्वच इत्यादिश्लोकत्रयं व्याख्यातार्थम् ।। ५०-५२ ।।

ननु वर्णाश्रमाचारादिना निःश्रेयसं स्यात्, वर्णाश्रमाचारयुतो गृहस्थोऽपि विमुच्यत इत्यतोऽच्युतभावेन किं तत्राह **यश इति**। यद्यच्युतभाववर्जितस्तर्हि वर्णाश्रमाचारतपःश्रुतादिषु परः परिश्रमः यशःश्रियामेवार्थे न त्वात्यन्तिकसिद्धये भवति। नन्वच्युतभावः केन स्यादत्राह **अविस्मृतिरिति**। गुणानुवादश्रवणादिभिरुद्भूताच्युतभक्तेः पुंसः श्रीधरपादपद्मयोरविस्मृतिः निरन्तराभ्यासलक्षणं स्मरणं भवति ।। ५३ ।।

सा कर्तुः किं करोति फलमित्याह **अविस्मृतिरिति**। सत्वस्यान्तःकरणस्य ।। ५४ ।। यूयमबाह्यभावा अनन्यभक्ता अदेवं देवेभ्योऽन्यं नारायणं देवमात्मनि मनस्यधिवेश्य भजतेति यद् यस्मात् तस्माद् भूरिभागा अतिभाग्यवन्तः ।। ५५ ।।

अहं च भूरिभाग इति ध्वनयति **अहं चेति**। भवद्भिरहं चात्मतत्वं संस्मारितः। ममापीदमात्मतत्वमाम्नायतः प्राप्तमित्याह **श्रुतमिति**। प्रसङ्गोऽप्यनुकूल इत्याह **प्रायेति** ।। ५६ ।।

यश्च संश्रावयेन्नित्यं यामं क्षणमनन्यधीः ।
श्रद्धावान् यश्च शृणुयात् पुनात्यात्मानमेव सः ॥ ५८ ॥

द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान् भवेत् ।
पठन्ननश्नन् प्रयतः पूतो भवति पातकी ॥ ५९ ॥

पुष्करे मधुरायां च द्वारवत्यां यतात्मवान् ।
उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥ ६० ॥

देवता मुनयः सिद्धाः पितरो मनवो नृपाः ।
यच्छन्ति कामान् बहुलान् शृण्वतो येऽत्र कीर्तिताः ॥ ६१ ॥

ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते ।
मधुकुल्याः पयःकुल्या घृतकुल्याश्च तत्फलम् ॥ ६२ ॥

पुराणसंहितामेतामधीत्य प्रयतो द्विजः ।
प्रोक्तं भगवता विष्णोस्तत्पदं परमं व्रजेत् ॥ ६३ ॥

विप्रोऽधीत्याप्नुयात् प्रज्ञां राजन्योऽम्बुधिमेखलाम् ।
वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात् ॥ ६४ ॥

---

यामं क्षणं च । अन्यानन्तरितार्था द्वितीया ।[१] आत्मानं मनः ॥ ५७-५८ ॥ कालविशेषमाह **द्वादश्यामिति** ॥ ५९ ॥ देशविशेषमाह **पुष्कर इति** । पुष्करे वराहक्षेत्रे । भयात् संसारभयात् ॥ ६० ॥ अत्र ये देवादयः कीर्तितास्तेऽपि संहितापाठादिकुर्वतोऽभीष्टानि ददतीत्याह **देवता इति** ॥ ६१ ॥ किञ्च ऋगादीन्यधीत्य यत् फलं स्यात् तदेतत्संहितामधीत्य स्यादित्याह **ऋच इति** ॥ मधुकुल्या मधुनद्यः । मधुनद्यादिकथनं सुखविशेषार्थम् ॥ ६२ ॥

न केवलमैहिकं फलं किन्तु मुक्तिरपीति कथयति **पुराणेति** । यद् विष्णोः परमं पदं तद् व्रजेत् ॥ ६३ ॥ अम्बुधिमेखलां भूमिम् ॥ ६४ ॥

---

१. यामं क्षणं इत्यत्र ''कालाध्वनोरत्यन्तसंयोगे'' इति द्वितीयाविभक्तिरिति भावः ।

कलिमलसंसृतिकालनोऽखिलेशो
हरिरितरत्र न गीयते ह्यभीक्ष्णम्।
इह तु पुनर्भगवानशेषमूर्तिः
परिपठितोऽनुपदं कथाप्रसङ्गैः॥ ६५॥

स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽ
प्यजितरुचिरलीलाकृष्टसारस्तदीयम्।
व्यतनुत कृपया यस्तत्त्वदीपं पुराणं
तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि॥ ६६॥

तमहमजमनन्तमात्मतन्त्रं
जगदुदयस्थितिसंयमात्मशक्तिम्।
द्युपतिभिरजशक्रशङ्कराद्यै-
र्दुरवसितस्तवमच्युतं नतोऽस्मि॥ ६७॥

---

इतरपुराणेभ्योऽस्य माहात्म्याधिक्यात् फलाधिक्यं माहात्म्याधिक्यं च प्रतिपदं प्रत्यक्षरं श्रीनारायणगुणगणप्रतिपादकत्वेनेत्याह **कलिमलेति**। कलिमलं संसारं च कालयति नाशयतीति कलिमलसंसृतिकालनः। इतरत्र पुराणेषु। इह पुराणे। अशेषमूर्तिः कथाप्रसङ्गैः॥ ६५॥

सूतो ग्रन्थावसानेऽपि गुरुनमस्कारं करोति **स्वसुखेति**। स्वातन्त्र्यात् स्वः परमात्मा तन्निमित्तं सुखं स्वसुखं तेन निभृतं पूर्णं चेतो यस्य स तथा। स्वरूपसुखश्च निभृतज्ञानश्च स्वसुखनिभृतचेताः (इति वा)। तेन सुखेन व्युदस्तान्यभावः निरस्तान्यविषयबुद्धिः, तेन विज्ञानेन निरस्तान्यज्ञान इति वा। अपि कृतकृत्योऽपि अजितस्य हरे रुचिरया लीलया आकृष्टसारः विवशीकृतचित्तस्थैर्यः तस्य हरेः सम्बन्धि अत एव तत्वदीपं पुराणं व्यतनुत व्याख्यया विस्तृतवान्। तं व्याससूनुं शुकं नतोऽस्मि॥ ६६॥

गुरुनमस्कारानन्तरं तदुपदिष्टस्वरूपं श्रीनारायणं नमति **तमिति**। यो भागवतस्याद्यपद्यमारभ्य प्रतिपादितस्तं नतोस्मीत्यन्वयः। जगदुदयादिषुआत्मशक्तिं स्वरूपशक्तिम्। आत्मतन्त्रं स्वतन्त्रम्। अजं सर्वज्ञम्। देहवत एव ज्ञानोत्पत्तेरस्य तदभावात् स्वज्ञानेनैव सर्वं जनातीति देशतः

**उपचितनवशक्तिभिः स्व आत्म-**
**न्युपरचितस्थिरजङ्गमपालनाय ।**
**भगवत उपलब्धिमात्रधाम्ने**
**सुरऋषभाय नमः सनातनाय ॥ ६८ ॥**

**॥ इति द्वादशोऽध्यायः ॥**

---

कालतो गुणतश्चानन्तम्[१]। द्युपतिभिर्ज्ञानपतिभिः अजशङ्कराद्यैर्दुरवसितस्तवम् अनिश्चितस्तुतिम्। अच्युतं मायानिमित्तच्युतिरहितम् ॥ ६७ ॥

उपचितनवशक्तिभिः मूलप्रकृतिमहदहङ्कारमनःपञ्चभूताख्यनवशक्तिभिः आत्मनि स्वाधारतया उपरचितयोः स्थिरजङ्गमयोः पालनं येन स तथा तस्मै, उपलब्धिमात्रधाम्ने केवलज्ञानस्वरूपाय, सुरऋषभाय देवोत्तमाय, सनातनाय सदातनाय शब्दमात्रैकविषयाय नमः ।अनेन श्लोकद्वयेन जन्माद्यस्य यत इत्यादेरर्थो दर्शित इति ॥ ६८ ॥

सत्यं ज्ञानमनन्तमच्युतमजं निर्दुःखसौख्योदधिं
निर्दोषामितवेदवेदितमहं वन्दे मुकुन्दं सदा ।
यद्भक्त्या कमलाब्जजेरगिरिशानन्तादिदेवाः पदं
सायुज्यं प्रसरन्त्यनेकविधया सत्या विरत्या च तम् ॥ १ ॥

व्याख्या भागवतस्य कृष्ण रचिता त्वत्प्रीतिकामात्मना
प्रीतश्चेत् प्रददासि तत्प्रतिनिधिं तत् त्रीन् वरिष्ये वरान् ।
प्राङ् निष्किञ्चनतां तव प्रतिभवं पादारविन्दात्मनां
संसक्तिं सुखतीर्थशास्त्रविजराहारस्य पानं सदा ॥ २ ॥

पदरत्नावली कण्ठे राजतां हि मुरद्विषः ।
वनमालेव मालेव मौक्तिकी कृष्णवल्लभा ॥ ३ ॥

**॥ इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थयतिविरचितायां श्रीमद्भागवतटीकायां पदरत्नावल्यां द्वादशस्कन्धे द्वादशोऽध्यायः ॥**

---

१. अस्पष्टमिदम् ।

॥ अथ त्रयोदशाध्यायः ॥

सूत उवाच -

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै -
र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो ।
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥

पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयना-
न्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ।
यत्संस्कारकलानुवर्तनवशाद् वेलानिभेनाम्भसां[१]
यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २ ॥

पुराणसंख्यासम्भूतिमस्य वाच्यप्रयोजने ।
दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥ ३ ॥

---

स्तवैर्वेदैश्च स्तुन्वन्ति स्तुवन्ति । उपनिषच्छब्दस्याकारान्तत्वम् । ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन यस्यान्तं न विदुः सुरासुरगणाः ॥ १ ॥

पृष्ठे भ्राम्यत् अमन्दो गरिष्ठो यो मन्दरगिरिस्तस्य ग्रावाणः, तेषामग्राणि, तैः कण्डूयनात् तेन निद्रालोः निद्राशीलस्य । येषां श्वासानिलानां संस्कारास्तेषां कला लेशास्तदनुवर्तनवशात् जलनिधेरम्भसां यातायातं न विश्राम्यति । ननु समुद्रक्षोभादेव तत्, न संस्कारवशात् तत्राह **वेलेति** । वेला क्षोभस्तस्य निभेन मिषेण ॥ २ ॥

पुराणसंख्याः, तासां सम्भूतिं समाहारं वा । अस्य श्रीभागवतस्य वाच्यं विषयः, प्रयोजनं दानं च । तस्य पाठादेश्च माहात्म्यं निबोधत ॥ ३ ॥

---

१. वेलानिलेनेति सत्यधर्मपाठः । वेला क्षोभः । मन्दरगिरिपरिभ्रमणजातक्षोभेन जनितानिलेन यातायातमम्भसां नाद्यपि विश्राम्यतीति ।

ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टिकम् ।
श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ ४ ॥

दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः ।
मार्कण्डेयं नवाग्नेयं दशपञ्चचतुश्शतम् ।
चतुर्दश भविष्यं स्यात् तथा पञ्चदशानि च ॥ ५ ॥

दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु ।
चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ ६ ॥

स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥

कौर्मं सप्तदश ख्यातं मात्स्यं तच्च चतुर्दश ।
एकोनविंशत् सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥ ८ ॥

एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः ।
तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥ ९ ॥

इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे ।
स्थिताय भवभीताय कारुण्यात् सम्प्रकाशितम् ।
आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ॥ १० ॥

हरिलीलाकथाव्राताम‍ृतानन्दितसत्सुरम् ।
सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम् ।
वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥ ११ ॥

---

त्रयोविंशत् त्रयोविंशतिः । चतुर्विंशतिसहस्राणि शैवकं शिवपुराणम् ॥ ४ ॥

मार्कण्डेयं नव । वाह्नं त्विति वा पाठः । अग्निपुराणं दशपञ्चसहस्राणि चत्वारिशतानि ॥ ५ ॥ स्कान्दं शताधिकैकाशीतिसहस्रम् ॥ ६-७ ॥ सौपर्णं गरुडपुराणं एकोनविंशत् एकोनविंशतिः ॥ ८ ॥

पुराणानां सन्दोहः समूहः चतुर्लक्षसंख्याक एव ॥ ९-१० ॥ हरिलीलाकथानां व्रातः स एवामृतं तेनानन्दिताः सन्तः सुराश्च येन तत् । तन्निष्ठं तद्विषयम् ॥ ११ ॥

प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ।
ददाति यो भागवतं स याति परमां गतिम् ॥ १२ ॥

राजन्ते तावदन्यानि पुराणानि सतां गणे ।
यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परम् ॥ १३ ॥

सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद् रतिः क्वचित् ॥ १४ ॥

निम्नगानां यथा गङ्गा देवानामच्युतो यथा ।
वैष्णवानां यथा शम्भुः पुराणानामिदं तथा ॥ १५ ॥

क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ।
तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥ १६ ॥

श्रीमद्भागवतं पुराणममलं यद् वैष्णवानां प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥ १७ ॥

कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ।
योगीन्द्राय तदात्मनाऽथ भगवद्राताय कारुण्यत-
स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १८ ॥

नमस्तस्मै भगवते वासुदेवाय साक्षिणे ।
य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ १९ ॥

---

प्रौष्ठपद्यां भाद्रपद्याम् । हेमसिंहसमन्वितं स्वर्णसिंहासनारूढम् ॥ १२-१३ ॥

तद्रस एवामृतं तेन तृप्तस्य ॥ १४-१६ ॥ पारमहंस्यं परमहंसैः प्राप्यम् ॥ १७-२२ ॥

योगीन्द्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे ।
संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥ २० ॥

भवे भवे यथा भक्तिः पादयोस्तव जायते ।
तथा कुरुष्व योगेश नाथस्त्वं मे यतः प्रभोः ॥ २१ ॥

नामसङ्कीर्तनं यस्य सर्वपापप्राणाशनम् ।
प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ २२ ॥

इति श्रीभागवते महापुराणे पारमहंस्यां वैयासक्यामष्टदशसाहस्र्यां संहितायां द्वादशस्कन्धे सूतोक्तौ त्रयोदशोध्यायः ।

॥ समाप्तश्चायं स्कन्धो ग्रन्थश्च ॥

---

॥ इति श्रीमहेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजयतिकृतायां पदरत्नावल्यां द्वादशस्कन्धस्य त्रयोदशोऽध्यायः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

॥ श्रीः ॥